# अथ गद्यभारतम् ।

यत्र योगीश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।
तत्र श्रीर्विजयोर्भूतिर्ध्रुवा नीतिर्मतिर्मम ॥
भगवद्गीता ॥

## द्रोणपर्वतो हरिवंशपर्वपर्यन्तम्

## ( उत्तरार्द्धम् )



प्रणेता—
शिवदत्त काव्यतीर्थः

* ओ३म् नमः शिवाय *

# अथ गद्यभारतम् ।

द्रोणपर्वतो हरिवंशपर्वपर्यन्तम्

## ( उत्तरार्द्धम् )

प्रणेता—
श्रीमद्दधीचवंशावतंस त्रिपाठ्युपाख्यपंडितबदरीलालात्मज—
**शिवदत्त काव्यतीर्थः**

बाबू चांदमल चंडक प्रबन्धकर्त्ता के प्रबन्ध से
वैदिक यन्त्रालय अजमेर में मुद्रित ।

रथयात्रा
सं० १९९२

मूल्यं सार्धरूप्यकम्
१॥)

ओन्नमः शिवाय।

# अथ गद्यभारते द्रोणपर्व प्रारभ्यते।

नारायणं नमस्कृत्य नरं चैव नरोत्तमम्।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत्॥
मूकं करोति वाचालं पंगुं लंघयते गिरिम्।
यत्कृपातमहं वंदे परमानन्दमाधवम्॥

अथ देवव्रतं हतं श्रुत्वाऽतिदुःखितो धृतराष्ट्रस्तमरिंदमं मुहुर्मुहुः शुशोच। ततः संग्राममालोक्य पुनः समायातः संजयो वैचित्रवीर्य्येण पृष्टोऽभ्यधाद् वीरसंहारम्। अथ भीष्मे-हते भृशदुःखिताः कुरवोऽब्धौ प्रवहणे भग्ने पतिता वणिज इव व्यग्रचित्ता बभूवुः। ततः समरे कर्णमागतं दृष्ट्वा परदेशेषु विपदि बन्धुसमागममिव लब्ध्वा हृष्टा बभूवुः। ततो धृतिसागरो दुर्योधनः शोकं संस्तभ्य कर्णाऽनुमत्या द्रोणं सेनानायकं चक्रे। ततस्तेनाभिषिक्तः स गुरुरपरोमहासेन इव वीरश्रिया शुशुभे। सोऽथ सर्ववीरशिरोमणिः प्राज्यतेजसा संपन्नः संहारागमाविधिः साक्षाद्धनुर्वेद इव रराज। कमण्डलुध्वज आकर्णपलितः श्यामो रक्ताश्वरथमारुह्य राज्ञा स्वयमर्थितःप्रत्युवाच। सत्कारेण संतुष्टोऽहं तुभ्यं यद् वरं ददामि। तदाकर्णय

राजन्! पार्थे हते युधिष्ठिरं जीवग्राहं समादाय सर्वभूभुजां पश्यतां तेऽहं प्रदास्यामि। एतद्गुरुवचःप्रतिगृह्य कृतांजली राजा निजसेनासु तूर्यनादमहोत्सवमघोषयत्। ततो धर्मसुतोऽनुजैः सह क्रौंचव्यूहं समाधाय योद्धुमुद्यतो बभूव। अत्रान्तरे द्रोणेन शकटव्यूहे निर्मिते वीरदेहशातनंमहद्युद्धमवर्तत। ततःसृंजयपांचालमत्स्यसेनासु शरीरहारिणो द्रोणनामांकिताः शराः पेतुः। अथसैन्येषु भिद्यमानेषु गजवाजिषु निपतत्सु रक्तकल्लोलिनी प्रादुर्बभूव। तत्र कोपाद् द्रोणमभिद्रुतान् युधिष्ठिरादिवीरान् द्रौणिकर्णकृपादयः सुसंरब्धा निवारयामासुः। अथाभिमन्युः केशेषु पौरवमाकृष्य सर्वधन्विनां पश्यतां कृपाणेन रथादपातयत्। अथ तत्कोपाद् वीरो खङ्गमादायोपस्थितं जयद्रथं, वीरवरं शल्यंञ्च विरथं विदधे। ततो गदापाणिःशल्यः पद्भ्यां सौभद्रमाद्रवत्। तञ्च वीरवारिण्या गदया भीमसेनो वारयामास। तयोः परस्पराघातकीर्णवह्निकणसमाकुलं घोरगदायुद्धं प्रावर्तत। अथ तौ समदकुञ्जराविव चरन्तावष्टौपदान्यभिपत्य मिथो गदाभ्यां जघ्नतुः। तत्र गाढप्रहारसंजातमूर्च्छाविव्हलमानसौ-तौ पतितौ दृष्ट्वा वीराः परस्परप्रहारिणः संनिपेतुः। ततो कृतवर्मा तूर्णं मद्राधिपे रथेन नीते भीमसेनः कुरुसेनां विदारयामास। अथ कर्णसुतवृषसेनशरैराकीर्णान् द्रोपदीपुत्रान् विलोक्य तमु-

२६

पाद्रवन् पार्थाः । अत्रान्तरे रुक्मरथो द्रोणःस्वयं पाञ्चालवाहिनीं प्रविश्य बाणैस्तां सहस्रधा विप्रकीर्णां विदधे । सोऽथ शिखण्डिसात्यकिप्रभृतीन् महारथान् विदार्य युधिष्ठिरमन्वेषयामास। सतत्र दारुणशरैर्युगन्धरव्याघ्रदत्तसिंहसेनान्मृत्युसदनमनैषीत् । तिष्ठ तिष्ठ स्थितोऽहं युद्धस्व-हतोऽसीति मुहुर्मुहुर्द्रोणाग्रे युद्ध्यमानानां सिंहनादोऽभवत् । ततःश्वेताश्वो निजसैन्याना कोलाहलं निशम्य तूर्णं तं देशं समाययौ । अथ सोऽस्त्रजालेन कुरुवाहिनीं निहत्य रक्तनद-मिवावर्तहतगजान् विदधे । अत्रान्तरे तिग्मकिरणमस्ताचलगतं वीक्ष्य पार्थसायकपीडिताः कुरुपुंगवाः सैन्यावहारं चक्रुः । ततो रात्रौ शिविरे सर्वराजसु संनिविष्टेष्वाचार्यो लज्ज मानइव दुर्योधनमभाषत । राजन् ! पूर्वमेव मया भाषितम् । यत् पार्थरहितं युधिष्ठिरं ग्रहीष्यामि । यतो धनंजयो दुर्जयः । इति ब्रुवाणे गुरौ किरीटिना कृतवैरस्त्रिगर्तराजो राज-संनिधौ प्रोवाच। श्वो वयं मालवतुण्डिलकाम्बोजसंशप्तकगणैः सह पार्थं पृथगाहूय पाटवेन योत्स्यामहे इति सत्यमवगच्छ । ततस्ते वह्निसाक्षिणस्त्रिगर्ताः सुशर्मप्रमुखाः प्रत्यूषे युद्धार्थं निर्ययुः । अथ तुरंगखुरोद्भूतधूलिग्रस्तनभस्तलास्ते प्रलयशंसिभिर्नादैः फल्गुना-ऽह्वानं चक्रिरे । ततोऽर्धचन्द्रव्यूहेन समदेशे व्यवस्थितांस्तान् दृष्ट्वा तदाहूतः पार्थो युधिष्ठिरं प्रत्युवाच । आर्यत्रिगर्तानां वधाय मामनुजानातु । यदेते वीरा मां योद्धुमभिवांछन्ति । शक्रकल्पोऽयं सत्यजिद्वीरो द्रोणाभिसरणे ते गोप्ता भविष्यतीत्युक्त्वा गाण्डीवज्यानादेन दशदिक्चक्रं प्रकंप्य क्रुद्धः कपिकेतनस्तान् प्रतिययौ । अथ मदोन्मत्तास्तेऽपि पार्थमायान्तं विलोक्य तूर्णं शिलीमुखैस्तं प्रफुल्लसालमिवाऽदृश्यं चक्रुः। ततो धनंजयोऽपि निजयशस्तरोः कन्दमिव रणश्रियोऽट्टहासमिवोज्ज्वलं च शंखं दध्मौ । ततो महाभीमेन तच्छब्देन स्तिमितग जतुरंगमं तत् कौरवसैन्यं च चित्रालिखितमिव निश्चलं बभौ । अथ पार्थो जीवमत्स्यापहारिणा सायकजालेन समन्तात् त्रिगर्तवाहिनीं पर्यवारयत् । ततःसंशप्तकगणोत्सृष्टैर्निरन्तरशरैर्भु-वनाभोगे पिहिते तमोवेष्टितरात्रिरिव जगदभूत् । ततो वास्त्रिनन्दनस्त्वाष्ट्रं महास्त्रं प्रविदधे । येन ते ससंभ्रमा अर्जुनसहस्राणि ददृशुः । ततोऽसावाकर्णकृष्टेन भल्लेन स्फुरन्मौलिप्रभा-जालं सुधन्वनः शिरःकायादपाहरत् । ततः कौरवसेनासु हाहाकारोऽभवत् ।

सोऽथ तत् प्रेषितां शस्त्रवृष्टिं पवनास्त्रेण विधूय तच्छिरःपुंजैर्महीमदृश्यां विदधे । ततोऽर्जुनः पतद्भुजभटाननं छिन्नध्वजरथं त्रिगर्तकदनं च घोरमायोधनं व्यधात् । अस्मिन् क्षणे द्रोणेन गारुडव्यूहे निर्मिते पाण्डवा अर्धनिर्मितव्यूहेन समुद्ययुः । ततो महाभुजक्षये संग्रामे प्रवृत्ते धृष्टद्युम्नादयो द्रोणमुख्यानयोधयन् । तत्र रजोभिर्व्योम्नि-पिहिते सायकैश्च रुद्धासु दिक्षु निर्मर्यादं युद्धं प्रावर्तत । ततो धर्मराजजिघृक्षया द्रोणेऽभि-

द्रुते सैन्यानां घोरो हलहलाशब्दोऽभूत् । तत्र वीरः सत्यजित् कालाग्नितेजसं धन्विवरं वारयितुमभ्येत्य युयुधे । ततो गुरुर्युद्ध्यमानं वृकं हत्वा शरैस्तं सत्यजितमपि समाच्छादयामास । अथ सत्यजित् स्वनामांकितसायकैः पादपं खद्योतैरिव द्रोणमपूरयत् । अथाचार्यो भल्लेन चण्डवेगेन सत्यजितो भूषितमस्तकं जहार । एवं सत्यजिति निपातिते धर्मतनये विद्रुते च वरूथिनी व्यदीर्यत । ततो गुरुः शतानीकदृढसेनक्षत्रदेववसुदानादिपार्थिवान् हत्वा चेदिमत्स्यपाञ्चालसृंजयान् कृतान्तनगरातिथीनकरोत् । एवं द्रोणसायकैः पीडितपाण्डवदले विद्रुते कर्णदुर्योधनाद्या मुहुर्मुहुर्भारद्वाजं प्राशंसन् । ततो भुजशालिना भीमेन सैन्ये पुनरावर्तिते संहता भूपाःकोपाद् द्रोणमुपाद्रवन् । ततस्तत्र नानावर्णयुता घोटका रथाश्चाऽतितरां विरेजुः । अस्मिन्नवसरे ऋष्यवर्णैर्भीमः स्फाटिकप्रभैः सात्यकिः कपोतप्रभैर्धृष्टद्युम्नः शुकसन्निभैर्नकुलस्तित्तिरप्रभैः सहदेवः पिशंगाभैरभिमन्युः पाण्ड्यतुहिनप्रभकृष्णबालैश्च हयैः स्वयं राजा युधिष्ठिरो रथमारुह्य गुरुं पर्यवारयत् । ततोऽन्येऽपि चित्रच्छायैरम्बरध्वजैश्चरथैर्द्रोणं परिवार्य बाणमयं जगच्च चक्रुः । तत्र नन्दोपनन्दकौ मृदंगौ यन्त्रेणाहन्यमानौ धर्मराजजयध्वनिमसूचयताम् । कुरुराजध्वजश्चाऽ प्यपूर्वां शोभां दधार । तत्र युद्ध्यमानानां पाण्डवानां तत्सुतानां च काञ्चनोज्ज्वलाः प्रतिमा रेजिरे । अथ दुर्योधनादयः क्रूरधीभी राजाभिर्द्रोणमावृतमालोक्य भीममुख्यान् युगपत् समापतन् । तत्र युधिष्ठिरपुरोगमैः शल्यप्रधानेषु द्वन्द्वयुद्धनिषक्तेषु युयुत्सुः सुबाहुकृतबाहून्यपातयत् । अथ समातंगे बंगराजे भीष्मसेनेन पातिते कौरवबले विद्रुते रजस्तिमिरमण्डले निरालोकेषु लोकेषु मानिषु हतेषु च भगदत्तेन प्रेरितो मदोद्दामः सुप्रतीकः पाण्डुसेनां व्यगाहत । तत्र गजघटां विना बलमिदं व्यर्थमिति विचार्यैव मदालसो गजः पृथुसीत्कारैः निःशश्वास । एता दिशो मत्प्रतापोष्मणा वैक्लव्यमायान्त्वितीव कर्णतालाभ्यां मुहु र्मुहुरवीजयत् । ततोऽसौ भगदत्तास्त्रनिष्कृत्तवीरवक्रांचितां महीं पश्यन् पदे पदे कमलाकरान् सस्मार । सोऽथ पाण्डववाहिनीं प्रविश्य गजवाजिरथान् पिंशन् वसाकर्दमिनीं तां व्यधात् । ततो जंगमदुर्गोपमेण करीन्द्रेण मृद्यमाना पाण्डवसेना दर्पेण विभूतय इव सहसा संकोचमवापुः । ततः कुण्डलीकृतशुण्डाग्रः स वृकोदरमभ्यधावत् । तस्मिन्नवसरे जनास्तं पाशहस्तेनाकृष्टमिव मेनिरे । एवं युधिष्ठिरो भीमं संशयपतितं दृष्ट्वा सर्वराजभिः सह भगदत्तमाक्रमत । ततः स वीरपरिवृतो भगदत्तो दाशार्णभूपतिं हत्वा वेगात् सुप्रतीकेन सात्यकिरथमुन्ममाथ । ततस्तद्घोरसीत्कारत्रस्ता भीमसेनादयो गजस्य विविधाश्चेष्टा वि-

लोक्य तुरंगमान् दूरं निन्युः । एवं कुञ्जरस्थेन भगदत्तेन पीडिता पाण्डवसेना कुनृपेण जनतेव क्वचिच्छरणं न लेभे । तत्र पतितानां गजानां स्फुटतां रथानां भीतानां हाहाकारैश्च तुमुलो निःस्वनोऽभवत् । ततस्तेषामाक्रन्दमाकर्ण्यार्जुनो वज्रास्त्रेण सानुगां स्त्रिगर्तान् हत्वा भगदत्तमभ्याक्रमत् । अथ तार्क्ष्यवत् तूर्णमागतं पार्थं दृष्ट्वा भगदत्तप्रेरितो द्विपाधिपस्तमभ्यधावत् । ततः केशवस्तमन्तकमिवायान्तमपसव्येनरथेन मोघसंरंभं कृत्वा पुनः पुरोवर्ती बभूव । ततः प्राग्ज्योतिषेश्वरः शरसहस्रेण पार्थं विध्द्वा यन्नारायरणास्त्रमसृजत् । तत् केशवो जग्राह । एवमर्जुनं रक्षतः कृष्णस्य तदस्त्रं वक्षसि निषक्तं हेमस्रग्दामविभ्रममवाप । एवमालोक्य पार्थो धनुरास्फालयन् यदुपति मुवाच । नूनमहं युद्धेष्वयोग्यो येन त्वमस्त्रं धृतवानसि । तच्छ्रुत्वा गरुडध्वजोऽर्जुनं संमानयन् प्रोवाच । सखे ! पूर्वं पृथिवीप्रार्थनया मया नरकायैतन् निजास्त्रं वितीर्णम् । तस्माद् दैत्यादसौ नराधिपः संप्राप्तवान् । तदमोघास्त्रं मयाऽद्य गृहीतम् । त्वमधुनाऽनेनैव तं पापं जहीति जनार्दनेनोक्ते सव्यसाची सकुञ्जरमूर्ध्वमुखैःशरैः क्षिप्रं तं भगदत्तमपूरयत् । ततः पार्थः कर्णान्ताकृष्टेन सायकेन कुञ्जरेश्वरं कुम्भयो राकुलं व्यधात् । ततः फल्गुणेषुनिर्भिन्नो द्विरदभूधरः पतन् महतीं सेनां जघान । यतः पतितोऽन्यमपि पातयतीतिसत्यैषा लोकोक्तिः । ततः किरीटिनार्धचन्द्रेण हृदि विद्धो मुक्तांकुशधनुर्बाणो भगदत्तो वीरगतिमवाप । ततस्तस्मिन् सर्वभूभुजां ककुदे वीरे निपतिते विजये कुरुसेनानामाशाबन्धः श्लथोऽभवत् । अथ कौरवानीके विद्रुते धन्विनां धुर्य्यौ गान्धारौ सौबलौ धनंजयमयुध्यताम् । ततो बाणवर्षिणौ तावेकेनैव पार्थशरेण स्यूतावववाऽपतताम् । तस्मिन् काले तौ वृषकापलावतुलां शोभां प्रापतुः अत्रान्तरेऽनुजद्वयबधोत्थकोपकंपितः शकुनिर्विपुलां मायां कल्पयन् सव्यसाचिनमद्रवत् । तत्र रणे क्रूरसत्वैरस्त्रैस्तमोभिश्चाभितः परिवेष्टितः पार्थस्तस्यमायाशतैरपि नाकम्पत । ततः पार्थः सौरास्त्रेण कातरमोहिनीं तन्मायां छित्वा तस्मै शरान् प्राहिणोत् । येन शकुनि र्भीत्या विदुद्राव । अथ सहसा विद्रुता कुरुवाहिनी त्रासादर्जुनमयं लोकं पश्यन्तीव क्वचिच्छरणं न लेभे । ततोऽनीकैः सह द्रोणोऽपि युधिष्ठिरजिघृक्षया हरन्वीरवक्त्राणि पाञ्चालान् समुपाद्रवत् । ततः शोणाश्वेन सहस्रशोऽनीकेषु वध्यमानेषु वसुधावधू रक्ता सवमदेनेव चकंपे । तत्र संगरे कुरुपाण्डवसैन्ययोस्तूर्णं प्रहरत द्रोणं रक्षतेतिमहाध्वनि र्बभूव । अथ पांचालसृंजयेषु भग्नेषु माहिष्मतीपति र्नीलः कुरुचमूमयोधयत् । ततो द्रौणि र्दिव्यास्त्रैरनीकानि दहन्तं तं प्रत्युद्ययौ । अथ द्रौणिरिषुवर्षिणस्तस्य वज्रसारभल्लैरथ

छत्रध्वजकार्मुकाणि चिच्छेद। ततो नीलस्तूर्णं रथादवरुह्य कृपाणेन द्रोणशिरो हर्तुं श्येन इवाऽपतत्। एवमालोक्याश्वत्थामा भल्लेन दिव्योज्ज्वलकुण्डलं कान्तं तच्छिरोऽपाहरत्। एवं नीले हते पार्थानां सुभगमण्डले च भग्ने धनंजयो संशप्तकान् हत्वा जवार्तो भुवं समाययौ। ततो भीमफल्गुनसौभद्रमत्स्यचैद्यमुखैः परानीके भिद्यमाने तुमुलो निःस्वनोऽभवत्। ततः समरशालिनां तेषां घोरसंमर्दो बभूव। ततस्तत्र रुधिरावर्तदुस्तरे रणे कर्णः कुरुचमूं भिन्नां दृष्ट्वा पार्थमयोधयत्। अथ वैकर्तनः पावकास्त्रेण किरीटिसात्यकिप्रमुखान् घोरदिग्दाहपिंगलान् भूधरानिव चकार। ततोऽर्जुनाद्याः कर्णं शरशतैर्घनवेत्रवनोपमं चक्रुः। विलोक्यैवं सर्वे मुक्तकंठं कर्णार्जुनौ प्रशशंसुः।

अथ कपिध्वजः शरैः शत्रुंजयविराटादीन् कर्णानुजान् यमपुरं प्राहिणोत्। ततो द्रोणमुखाः कौरवमहारथा दिव्यास्त्रग्रामेण पीडामवाप्य कर्णपार्श्वं समाजग्मुः। ततस्ते संसक्ता वीराः सात्यकिप्रभृतिभिर्गजवाजिरथत्त्रयं घोरं समरं चक्रिरे। ततोऽर्जुनशरासारैर्भुजशालिषु वीरेषु भिन्नेषु ससैनिका भृशपीडिताः पार्थिवा वासरान्ते न्यवर्तन्त। अथ प्रभाते गुरुं समेत्य दुर्योधनोऽब्रवीत्। गुरो! पुण्यहीनस्य मे धर्मजग्रहणे भवतामपि प्रतिश्रुतो निष्फलतां यातः। किं बहुना। शक्तिमन्तोऽभिजाता भवद्विधाश्च यशस्विनो वृथा मनोरथं कर्तुं न शिक्षिताः। एवमाकर्ण्य कलशोद्भवो जगाद। राजन्! यद्यपि गाण्डीवधन्वना गुप्तो धनंजयो दुर्ग्राह्यस्तथाऽप्यद्य यथाशक्ति तव हितं करोमि। संप्रति संशप्तका रथादाकृष्य फल्गुनं यान्त्वित्याचार्येण गदिते संशप्तकगणाः पुनरर्जुनं समाहूय दक्षिणाशां निन्युः। ततो रामशिष्यो द्रोणः संसारचक्रदुर्भेद्यं चक्रव्यूहमरचयत्। तत्र गजानीकसमेतो दुर्योधनः सर्वमहारथैर्वृतो मध्यभागेऽतिष्ठत्। द्रोणो जयद्रथं नीत्वा मुखमरक्षत्। ततस्त्रिंशद्दुर्योधनानुजैः सुरक्षितं तदपारं बलं वीक्ष्य द्रोणानिर्दारितानीको धर्मनन्दनश्चिन्तयामास। हे सौभद्र! रणेऽस्मिन् त्वमपि कंसारिसमो विक्रमोऽसि। तव पिताचाऽद्य संशप्तकान् प्रति यातः। अतस्तत्तुल्यस्त्वमिमां धुरं वोढुमर्हसि। अस्मिन् चक्रव्यूहविभेदने कृष्णार्जुनप्रद्युम्नाभिमन्यवश्चत्वार एव समर्थाःसन्ति। एवं राजसमाजे युधिष्ठिरवचनमाकर्ण्य प्रफुल्ललोचनोऽभिमन्युरेषोऽहं त्वदाज्ञया व्यूहं विदार्य्य प्रविशामि। महारथा निर्गत्याऽभिज्ञं मामनुगच्छन्त्वित्यर्जुनसुतेनोक्ते युधिष्ठिरप्रमुखैर्नृपैस्तथेत्याभिहिते च त्रिहायनकेसरीव मुक्तशैशवः सौभद्रः सूतं समचोदयत्। ततो रणे सर्वराजकं वराकं मन्यमानः कौतुकात्द्भमामयातो वीरः सुरकुमारइव बद्धखङ्गोऽभिमन्युः शरैः क्षुभिताम्बोधिविभ्रमं द्रोणानीकं चक्रे। ततो महतामपि विमोहने समरे प्रवृत्ते तीक्ष्णविक्रमः सौभद्रो व्यूहं विदार्य

प्राविशत् । तत्र चित्रलाघवसौष्ठवेष्वेकमप्यनेकतां यातं दृष्ट्वा सर्वे कुरुवीरास्तं सहसा समाद्रवन् । तस्मिन्नवसरेऽयंग्रहीतोऽयंहतोऽयं बहूंश्चापि हन्तीत्येवमभिमन्युरथं प्रति राज्ञां निनादोऽभवत् । तत्र सत्रासासिशरैः करैः सरत्नमुकुटैः शीर्षैः कायैस्सहेमकवचैः कृत्त-सारंगैस्तुरंगैर्भिन्नकुम्भैर्निपतद्भिश्चगजैरविश्रान्तः स छिन्नां मेदिनीं चक्रे । एवं सौभद्रेण प्रहारिणा वध्यमानं बलं दृष्ट्वा ससंरब्धाः द्रौणिकर्णकृपादयस्तमभ्यधावन् । ततोऽभिमन्युः शरैर्बाणवर्षिणस्तान् वीरान् विमुखान् विधायाश्मकभूपतेरपि शिरो भल्लेन जहार । ततः कौरवबले भग्ने द्रोणकर्णकृपादयोऽन्येभूपालाश्च सायकैस्तमवाकिरन् । तत्र शिलीमुखसंच्छन्नोऽर्जुनसूनुर्वसन्तसमये कर्णिकार इवाबभौ । ततो दानवाः समरे गुहेनेव सौभद्रेण पराजिताः कौरवा दुद्रुवुः । सोऽथ मद्रराजानुजं हत्वा कर्णभ्रातरमपि जघान । ततोऽसौक्रमेणैकैकशः कर्णदुःशासनमुखान् जित्वा भूभुजां क्षयं चक्रे । परसैन्यान्तरस्थस्य तस्य लाघवाद् भूमिपाः सर्वासु दिक्षु हेमचापसहस्राणीव ददृशुः । अथ तेन पत्रिभिर्दारिते-गजवाजिरथानीके तूर्णं चामरोष्णीषहासाङ्का रक्तवाहिनी प्रससर्प । ततः पार्थसुतः सुभट मण्डले भग्ने कबन्धेषूत्थितेषु दिशःशकलयन्निव शंखं दध्मौ । अत्रान्तरे भर्गवराद्दृप्तो जयद्रथो राजा व्यूहंप्रवेष्टुमुद्यतान् पाण्डुसुतानवारयत् । यत् पूर्वं कृष्णाहरणे तैर्विजितः । स महेश्वरात् तपसा फल्गुनं त्यक्त्वा सर्वजयवरं लेभे । सोऽथ सपदानुगान् पाण्डुतनयान् वारयन् महोदधेरुद्धतान् वारिवेगान् वारयन् वेलाचल इव बभौ । ततो हेमवराहध्वजः स सैन्धवो रुद्रतेजसा पाण्डवचमूं ददाह । तेनैकेन प्रसभं पाण्डुसूनुषु निरुद्धेष्वेकएवाभिमन्युरन्तर्विशन् राज्ञां शिरोवनमुच्चकर्त । ततः स वीरो वैकर्तनात्मजं वृषसेनं विद्राव्य लुलितोष्णीषं काम्बोजनृपतेः शिरो जहार । अथ तस्मिन् तुमुले विमर्दे पांसुभिर्दिक्षु रुद्धासु महीपाला रत्नाभरणरश्मिभिरसूच्यन्त । अत्रान्तरे विजयदायादः केसरी मदाद्विपमिवा-तुलौजसं सत्यश्रवसं जग्राह । अथ तस्मिन्नभिमन्युवशंयाते शल्यात्मजो रुक्मरथो गर्जन् त मुपाद्रवत् । ततः सोऽपि भ्रुकुटिधूमलक्ष्यकोपाग्निसंपदां तेषां गान्धर्वास्त्रेण सहसा कीर्तिशेषतां विदधे । ततस्तेन तुल्यवयोवेशे राजपुत्रशते हते दन्तिनः रम्भाकाण्डवने भग्न इव भूभुजां चक्रे च विद्रुते सौभद्रशरदारितः सुयोधनो ह्रिया निःशश्वास । ततो लक्ष्मणोपमो दुर्योधनसुतो लक्ष्मणोऽभिमन्युं समभ्येत्य विशिखावलिं प्राहिणोत् । एवमालोक्य सौभद्रः क्षणं योधयित्वा भल्लेन तस्य मुक्तावलीतारापंक्तिसेवितमाननंशशांकमिव कण्ठमूलाज्जहार । एवं प्रियपुत्रे निपातिते क्रुद्धः कौरवेन्द्रः सर्वमहारथैः सह सौभद्रमुपाद्रवत् । सोऽथ कृपकर्णद्रोणद्रौणिप्रभृतीन् सहसा शरैर्विद्राव्य कोपादापततो बृहद्बलस्य शिरो-

भल्लेन चिच्छेद। ततोऽशनिदारुणैः शरैः कर्णमभिद्रुत्य तत्सचिवान् प्रहारिणो राजपुत्रांश्च निपात्य मूर्छितानकरोत्। अथ संमुखागतं द्रौःशासनिं पृषत्केन परामुखं कृत्वा कुंजरकेतनं भोजं जघान। ततः स शल्यं शरजालैर्विरथं विधाय मोहयामास। अथ शत्रुंजयमेघवेगचन्द्रकेतुसूर्यभासमुवर्चसो हत्वा गान्धाराणां क्षयं व्यधात्। अत्रान्तरे सहायार्थं संमुखागतं शकुनिं क्षतजोक्षितं कृत्वा विद्रावयामास। तस्मिन्नवसरे सज्वलत्खाण्डवविभ्रमं कौरवानीकं कृत्वा तेषां खड्गेषु कवचेषु च विम्बितो रराज। एवमालोक्य गाढविद्धो राधेयोगुरुमभ्येत्य प्रोवाच। गुरो! बालोऽप्ययमबालचरितः काकुस्थसमविक्रमं धृत्वाऽशेषं कुरुसैन्यं क्षपयति। आचार्य! अत्र काचिन् नीतिर्विधीयताम्। यतोऽयमुपेक्षितो दुर्जयत्वमभ्येति। किं बहुना। युद्धेऽस्मिन् कौरवजयाश्रियस्त्वदधीना एव। एवमाकर्ण्य द्रोणः सूतपुत्रमभाषत। वीर! पार्थात्मजोऽयं मुहूर्तेन पृतनां हिंनस्तीति सत्यम्। अस्याऽमर्यादं धैर्यं प्रौढविक्रमञ्च विलोक्य कस्य कायो रोमांचकञ्चुको न नाम जायते? अयं सखड्गरथकंकटो वीरान् सकार्मुकः सचक्रश्च देवानपि जेतुं शक्तः। तदस्य सर्वायुधविनाशने यत्नः क्रियताम्। एवमाभाष्य सकर्णो द्रोणः सर्वमहारथैः सह द्रावितानीकं सौभद्रं समभ्यधावत्। सोऽथ मण्डलीकृतकार्मुकः संमुखापतितांस्तान् नदीवेगानचल इव शरैर्विमुखाँश्चकार। ततः कर्णः पार्श्वेन तस्यानतं धनुश्चिच्छेद। हार्दिक्यो रथं गौतमश्च सारथिं जघान। ततो द्रोणमुख्या विरथं छिन्नधन्वानं च तमुपाद्रवन्। ततोऽसौ दीप्तखड्गमनेकतारकं चर्मचादाय मण्डलानि चरन् दुर्लक्ष्यः समपद्यत। व्योम्नि सहस्रांशुमिव चरन्तमभितोमहारथा मूर्ध्नि पतन्तं न मेनिरे। ततो द्रोणःस्वक्षुरप्रेण तस्य खड्गं द्विधाऽकरोत्। ततः स सुदर्शनोपमं चक्रं समादाय राजचक्राणां क्षयं चक्रे। ततो द्रोणमुख्या महारथाःस्वसंहारं शंकित्वा शरैस्तच्चक्रं तिलशश्चक्रुः। अथाऽपरो भीम इव गदापाणिः स सुबलात्मजं कालिकेयं सहसा जघान। ततःस गदया गान्धारराजपुत्राणां सप्तसप्ततिं हत्वाऽन्यानपि ब्रह्मवसातीयान् पातयामास। सोऽथ केकयरथं संचूर्ण्य शैलमण्डलसंनिभं गजानीकं वज्रपातनिर्भिन्नमिव चकार।

ततस्स दौःशासनेः ससारथिं साश्वंच रथं निष्पिष्य गजघातिन्या गदया तं गदापाणिमभ्याक्रमत्। अथ तावन्योऽन्यं मंडलानि चरन्तावभिजघ्नतुः। एवं गुरुप्रहाराभिहतौ तौ महाभुजौ भूमौ पेततुः। एवमालोक्य महारथा दूरात् तं पतितं सौभद्रं बाणैर्जघ्नुः। अत्रान्तरे दौःशासनिः समुत्थाय सायकांचितसर्वांगं विकीर्णाकुलकुन्तलं च तं गदया मूर्ध्न्यताडयत्। एवमनिलैर्बालरसाल इव तस्मिन्वीरे निपतिते सर्वं जगदुद्यानं वीतशोभमभूत्। अथ क्षत्रवेणुवनानलं प्रशान्तमपि तं दृष्ट्वा कदाचित् पुनरुत्तिष्ठतीति

भूभुजां हृदयभ्रम आसीत् । ततः सुरविद्याधराङ्गनाश्चन्द्रवदनं तं भूमिपतितं विलोक्य मुहुर्मुहुर्बाष्पं मुमुचुः । बालो लूनधनुः श्रान्तो विरथश्च सर्वैर्महारथैर्हत इति दिवि निःस्वनोऽभूत् । ततः प्रहृष्टैः कुरुभिः समन्ततो लब्धलक्ष्यैश्च सैनिकैर्गर्जद्भिर्निर्जिताःपाण्डुसेना धर्मनन्दनं दुद्रुवुः । अथ युधि पातिते सौभद्रे शोकार्त इव सूर्योऽस्ताद्रिकन्दरां प्राविशत् । ततो युधिष्ठिरमुखा आहवे संमुखंहतमशोच्यमपि सौभद्रं स्नेहाच्छुशुचुः । अत्रान्तरे जिष्णुर्विमना इव शिबिरं समाययौ । प्रायः पूर्वमेव मनांसि शुभाशुभं कथयन्ति ॥ ततोऽसौध्वस्तच्छायं सैन्यं विषनाराचानिर्भिन्नानिव भ्रातॄंश्च विलोक्य दिवसप्रोषितपुत्रदिधृक्षया ससंभ्रमस्तानपृच्छत् । कच्चिन् ममात्मजो द्रोणविहितचक्रव्यूहं प्रविश्य कूटयोधिभिः कुरुभिर्युध्वा न प्रत्यागतः ? मयाऽसौ बालो व्यूहप्रवेशस्तु शिक्षितो न निर्गमः । अतो ध्रुवं स राजीवलोचनो मे पुत्रो हतः । एवमाभाष्य शोकदहनक्वाथ्यमानो धनंजयस्तनयवृत्तान्तं श्रुत्वा मोहात् स्थाणुरिव बभूव । एवमालोक्य हृषीकेशः शोकं संस्तभ्य पार्थं लब्धसंज्ञमुवाच । महावीरोऽसौ क्षणभंगुरं शरीरं परित्यज्य कल्पस्थिरां-यशोमयीं तनुं प्रविष्टवान् । एवमाकर्ण्य पार्थोऽब्रवीत् । अहो नु कश्चिदपि युष्माकं मध्ये-मत्पुत्रमरिमध्यगं रक्षितुं समर्थो नाऽभवत् । नूनं भवतां शस्त्रपरिग्रहोऽयं मिथ्या । हा ! समग्रगुणाभिरामं रामविक्रमं तं तनयं पुनः क द्रक्ष्यामि । केशव ! नूनं रिपुवेष्टितः स पतन् मां त्वां वा प्रत्यपकारार्थं सस्मार । पीयूषवर्षिणा पुत्रेण तेन रहिता सुभद्रा व्यक्तमद्य हता । हा पुत्र ! दिवि देववधूजनो नवमन्मथमिवायान्तं त्वां दृष्ट्वा कान्तसंस्यत इति मन्ये । संप्रति मां विहाय क्व गतोऽसि ? समागत्य परिष्वजस्वेत्युक्त्वा मूलनिर्लीनस्तालइवभूमावपतत् । ततः संज्ञां प्रतिलभ्य जयद्रथं च हेतुं श्रुत्वा सुतक्षयप्रकोपाग्निपीतशोकार्णवो जगाद । यत् सर्वभूभुजां पश्यतामनस्तगे तिग्मकरे श्वो यदि जयद्रथो हतो न भवेत् तदाहमनृतशान्तये दहनं प्रवेक्ष्यामि। अत्र गुरुद्रोहविश्वासघातनिक्षेपापहरण भुक्तस्त्रीत्यागनिषिद्धाचरणविहितपथत्यागादीनि पातकानि मां लगेयुर्यदि प्रतिज्ञाविमुखोऽहं स्याम् । श्वः प्रभाते दिवि भुवि वा पातालेऽथवा मेरुमन्दरकन्दरेऽपि स्थितमनिवारिता मद्बाणा दारयिष्यन्तीत्युक्त्वा कालीयविद्विषा सह शंखं दध्मौ । येन सकुलाचला पृथिवी चकंपे । अस्मिन्नवसरे चारैः पार्थभाषितं विज्ञाय भीतः सैन्धवो दुर्योधनमेत्य तस्मै तद्वृत्तं न्यवेदयत् । ततः सानुगः कौरवस्तं समादाय द्रोणमभ्येत्य च पार्थस्य सैन्धवविषयिणीं घोरां प्रतिज्ञां व्यजिज्ञपत् । एष जयद्रथो वदति । यद् दिनमेकमलक्षितः क्वापि तिष्ठामि वा सर्वे पार्थिवाः संहता मां रक्षन्तु । इति दुर्योधनेनोक्ते भारद्वाजस्तं

प्रोवाच मा भैषीः । श्वोऽहं त्रिदशैरपि दुर्भेद्यं महाव्यूहं कर्ताऽस्मि । तत्राहं सैन्धवार्थिनमायान्तं धनंजयं वेलाशैलो जलधिमिव तं सायकैर्वारयिष्यामि । एवं द्रोणेनोक्ते प्रहृष्टाः कुरुपुंगवाः प्रतिज्ञाभंगवन्हिना पार्थं हतममन्यन्त । कदाचित् क्रुद्धोऽर्जुनोऽखिलां सेनां विनाशयेदिति पार्थभयात् कुरवो रात्राविवोत्थितास्तस्थुः । अत्रान्तरे शौरिः पुत्रशोकव्यथातारप्रलापिनीं सुभद्रां याज्ञसेनीं च सान्त्वयितुं ययौ । ततः केशवेन समाश्वासिता सुभद्रा वाष्पगद्गदं विललाप । हापुत्र ! नयनानन्द ! पद्मपत्राक्षं ते वदनं कदा पुनर्द्रक्ष्यामि । इयं ते प्रियामहिषी नवोढोत्तरा भर्तुमाहितसंकल्पा गर्भगौरवाद् रुद्यते । पितॉरिनाथे कृष्णेमातुले भीमे च त्रातरि रणे धूलिधूसरितः कथमनाथवच्छेषे ? वत्स ! सदाचारव्रतजुषां ब्रह्मण्यवदान्ययज्वनां च गतिमवाप्नुहीति प्रलापमुखरां तां समाश्वास्य माधवो वीतनिद्रं पार्थं तूर्णमुपाययौ । ततोऽर्जुनः कृष्णाज्ञया जपपरो विधिवत्परिकल्पिते पवित्रशयने निद्रां लेभे । सोऽथ व्योमगः स्वप्ने विष्णुना सह दिव्यपर्वतमारुह्य चन्द्रार्धशेखरं शिवं ददर्श । अथ कृताञ्जलिः कृष्णसखस्तं प्रणम्य भक्त्या सानन्दं तुष्टाव । निःशेषदुष्कर्मविषहारिणे शर्वाय नमः । भुवनप्रभवाप्यायकारिणे भवाय नमः । दैत्येन्द्रद्रावितेन्द्रभयच्छिदे रुद्राय नमः । ऊर्द्धरेतसे श्रेयोधाम्ने वामार्धाय नमः । व्यालाकुलाय सेव्याय नमः । त्रिगुणाय त्रिनेत्राय त्रिमूर्तये त्रिशूलिने च नमोनम इति स्तुतो रुद्रः स्वप्ने महाभुजगविग्रहं धनुरस्त्रं च सस्थानकं पार्थाय प्रादर्शयत् । अथ धनंजयः पूर्वलब्धं पाशुपतास्त्रं दृष्ट्वा चण्डीशान्मन्त्रं च प्राप्य कृतकृत्यो व्यबुध्यत । ततो हृष्टो धनंजयः कृष्णाय प्रभाते तन्निवेद्य समग्रं प्रतिज्ञाभारं स्वल्पममन्यत । अत्रान्तरे कृतावश्यकरणीयाः स्नात्वाऽग्निंसंपूज्योत्साहपूर्वकं कुरुपाण्डवा रणांगणमवतेरुः । ततो द्रोणः पृथुचक्रपरिष्कृतं सुभटकोटिभिश्च गुप्तं विकटाटोपं शकटव्यूहं व्यधात् । तन्मध्ये महादलं नृपतिकेसरं पद्मं चतुरङ्गिणीसमेतं तदन्तरे च कृतवर्मप्रभृतिभिः सूचिव्यूहं कृत्वा सूचिपाशे वीरवृतं जयद्रथं न्यवेदयत् । एवमनीकेषु व्यूढेषु द्रोणाचार्यः सेनाग्रे गाण्डीवधन्वानमपश्यत् । ततःप्रवृत्ते युद्धे चण्डकरस्येव तस्य महौजसस्तेजो महीपाला न सेहिरे । अथ दुर्निमित्तशताकुले भुवने प्रकंपिते कृष्णार्जुनौ श्वेताश्वस्यंदनस्थितौ शंखौ प्रदध्मतुः । ततो मिलितयोः सेनासमुद्रयोर्व्यालनीलबलत्खड्गातरंगः संगरोऽभवत् । अथार्जुनः शूरशिरोभिः सभूषणैर्बाहुभिश्च महीमाच्छादयन् द्रोणानीकं प्रविवेश । सोऽथ पूर्वोत्सृष्टशरं गुरुं प्रणम्य वृद्धमनुमान्य प्रसाद्य च पुनस्तं दीप्तशरजालैरवाकिरत् । ततोऽच्युतसारथिस्तूर्णं जयद्रथाकांक्षी द्रोणं प्रदक्षिणी

कृत्य च वातरंहसा व्यूहं प्राविशत् । ततो लाघवाद् द्रोणमुत्सृज्य श्वेतवाहने प्रविष्टे चक्ररक्षौ युधामन्यूत्तमोजसावपि विविशतुः । ततो मन्दरसंरब्धक्षुभिताम्भोधिविभ्रमो निर्घोषो विदीर्यमाणस्य व्यूहस्याऽभवत् । अथ कुञ्जरभेदिनस्तस्य पुरः पातितभूभुजमुखानि पद्मवनानीव रेजुः । यत्र यत्र धनंजयो गत स्तत्र तत्रदारुणः शब्दोऽभूत् । अहो गतः इतःवृतः लब्धः एष हन्ति वयं पातिता इति निनादः सर्वत्र प्रासरत् ।

अथ समरेऽजय्यं द्रोणं त्यक्त्वा शरवर्षाभ्रे फल्गुने प्रविष्टे कुरुकाननं चकंपे । ततोऽर्जुनस्तूर्णमभिद्रुतान् कृतवर्ममुखान् जित्वा यवनकाम्बोजौ जघान । ततो द्रोणो धनंजयमभ्येत्य निरोद्धुम् ब्रह्मास्त्रेण ज्वालाजालजटं नभश्चक्रे । ततोऽर्जुनो ब्रह्मास्त्रेणैव तत् परिहारं कृत्वा गुरुं परिवर्ज्य भोजानीकं प्रति प्रायात् । तत्र भोजं विमुखं विज्ञायाग्रे प्रयान्तं पार्थं श्रुतायुधोऽभ्याक्रमत् । अथ पार्थस्तद्भुत्सृष्टशरान् विषह्य रथं च चूर्णयित्वाऽस्य सर्वायुधक्षयं विदधे । ततोऽसौ वरुणदत्तां गदामादाय केशवमताडयत् । ततः सा अयोधे पातिता प्रतिनिवृत्य तमेव जघान किंतु केशवस्य च तया बालबक्रोऽपि नाभवत् । एवं श्रुतायुधवीरवधे पार्थरथोऽभग्नप्रणयां गतिमवाप । ततो वानरध्वजं व्रजन्तं निवारयितुं काम्बोजसुदक्षिणोऽभ्यायात् । एवमालोक्य पार्थः शरवर्षिणस्तस्य पूर्वं कार्मुकं छित्वाऽनन्तरं तन्मुक्तां शक्तिमपि चकर्त । ततोऽसौ पार्थशरासारविशारुतनुर्नृपोऽम्बराद्विद्याधर इव सहसा पपात । एवं वीरे काम्बोजे निहते बलार्णवे च भज्यमाने क्रुद्धः श्रुतायुः पार्थमुपाद्रवत् । ततस्तत्तोमरशूलप्रहतोऽर्जुनः क्षणं मुमोह । अथ लब्धसंज्ञो धनंजयः शक्रास्त्रं समुदीर्य साश्वसूतरथं स्वसुतसमेतं च तं कथाशेषं चकार । अथ पाण्डवोऽगवंगकलिंगदाक्षिणात्यांश्च निहत्य तुरुष्कचीनम्लेच्छानामपि वरूथिनीं शरैर्निपात्य रक्ततरगिणीं विदधे । ततोऽम्बष्ठाधिपतेः शिरश्छित्वाऽच्युतसारथिरवारितगतिर्विवेश । अत्रान्तरे कौरवेश्वरो द्रोणमुपसृत्य बभाषे । आचार्य ! पार्थकृतनृपकदनं पश्य । किं बहुना । यदि ते सरलचेतसः शिष्यानुरोधो न स्यात् । तर्हि वराकः पृथासुतस्त्वां कथं नु विलंघयेत् ? देव ! गतोदके सेतुबन्धो न कल्याणाय । भवता च दत्ताभयो जयद्रथो हेलयैव स्वयं कालकरालवदनोदरे प्रवेशितः । गुरो ! यदि त्वयाऽप्युपेक्षा क्रियते । तर्हि मम सैन्येषु यदृच्छया चरन्तं तं सामान्यः को निवारयिष्यति एवमाकर्ण्य भारद्वाजो राजानं जगाद । राजन् ! पार्थो युवा अतस्तादर्थ्यवेगोऽसौ वृद्धंमां समुल्लंध्य समागतः । मया च व्यूहद्वारे भीमसात्यकिपार्षता रुद्धाः । यदि बभित्सुं तं पृष्ठतो व्रजामि तर्हि भीमादयोऽप्यन्तः प्रविशन्त्येव । अस्तु संप्रति ते दुष्करं हितं

करोमि । येन त्वं रणे देवानामपि दुर्जयो भविष्यसि । पुरा वृत्ररणे रुद्रः सुरेन्द्राय दिव्यं मन्त्रमयं वर्म प्रादात् । येनाऽसौ दुर्भेद्यः संजातः । तद् गुरुमुखान्मया प्राप्तम् । अधुना तेनैव ब्रह्मसूत्रेण तव शत्रुगणान् बद्ध्वा शत्रुनिवर्हणं करोमीत्यभिधाय कुरुभूपतेः प्रस्थितस्य पार्थं जेतुं मन्त्रेण बबन्ध । मंत्रशास्त्ररहस्यविद् द्रोणाचार्यः ।

अथ कौरवेश्वरो गुरुणाऽऽमुक्तदिव्यकवचो गजवाजिरथानीकैस्तं प्रययौ । अस्मिन्नवसरे व्यूहमुखे द्रोणशल्यादिभिः सह धृष्टद्युम्नादयो युयुधिरे । तत्र सात्यकिद्रुपदविराटकुन्तिभोजघटोत्कचद्रौपदेयाश्च युधिष्ठिरादीन् पुरस्कृत्य दुःशासनविकर्णचित्रसेनालायुधालम्बुसबाह्लिकशकुनिद्रोणिवृषसेनगौतमान् महारथान् व्यूहगर्भविनिर्गतान् निजनामाङ्कितशरैरवाकिरन् । तस्मिन्नवसरे रथाग्रे योधा मिथो रुधिरावर्तदुर्गं कुर्वाणाः शस्त्रवृष्टिभिः कबन्धताण्डवोखण्डसंरंभदलिता दिशश्चक्रुः । अत्रान्तरे श्वेतहयः कुरुवाहिनीं प्रविश्य सैनिकांश्छिन्नभिन्नांश्चकार । एवं लोकातीतशक्तिसम्पन्नेन कृष्णचंद्रेण सहसा प्रेरितः स रथः क्रोशद्वयमतिचक्राम । ततो हेमसंनाहास्ते हया गगनं गाहमाना इव जवदीर्घैः प्रभाजालैर्दिशः पल्लविताश्चक्रुः । तस्मिन्नवसरे यत्रार्जुनेषवश्चेरुस्तत्र हतोगजश्छिन्नो रथो नरेश्वरोऽयं पतित इति सकरुणो निःस्वनोऽभवत् । अत्रान्तरे विन्दानुविन्दावावन्त्यौ पाण्डवमभिद्रुत्य नानाशस्त्रवर्षैः सकेशवमदृश्यं चक्रतुः । ततोऽर्जुनस्तद्रथौ शरैश्छित्वा शिरसी च चकर्त । अथार्जुनो विन्दानुविन्दयोः सैन्यं हत्वा निजाश्वान् व्यथितांश्च वीक्ष्य कृष्णं प्रोवाच । सखे ! दस्युशस्त्रशरक्षतान् क्लान्तान् हयानुद्धृतशल्यान् कृत्वा जलं पायय । एवमुक्त्वा स रथादवतीर्य पादचारीदमन्तरमित्याप्तान्नरेश्वरानेक एवाऽयोधयत् । ततःपार्थास्त्रजालानां तदस्त्राणां च निर्घर्षनिःसृतज्वालाकरालनभोऽभवत् । अथ शूरास्सम्मुखमाजग्मुः । एवमालोक्य यावदर्जुनः शरपञ्जरमंदिरं रचयति । तावदेव कृष्णः पीतजलान् हयान् पुनरयोजयत् । ततस्ते वातरंहसो हया कृष्णसंकेतमवाप्य शक्राश्वविजिगीषया गगनमारुहन् । ततः स्वल्पावशेषे दिने तूर्णं सैन्धवकांक्षिणः सव्यसाचिनः सायकैः कौरवचमू चकंपे । ततो विद्रुतेषु नरेन्द्रेषु गजघटावने च भग्ने द्रोणानुबद्धकवचो दुर्योधनस्तत्र समाययौ । एवमालोक्य कृष्णचन्द्रोऽर्जुनमुवाच । सखे ! स्थवीयसां निकाराणां कर्ताऽयं समुपस्थितः । अतः पूर्वमेनं कुलकंटकं जहीति पुष्कराक्षेणोक्ते जिष्णुसुयोधनौ वीरौ मिथो युद्ध्यमानौ सुरेन्द्रनमुचिभ्रमं चक्राते । ततः कुरुराजप्रेरिताविशिखावली किरीटिनं हंसालिः क्रौञ्चाद्रिमिव विवेश । ततो गोविन्दः पार्थबाणान् सुयोधने वन्ध्यान् दृष्ट्वा विस्मयेन किमेतदिति जगाद ? निशम्यैवं कृष्णवाक्यं पार्थो

विहस्य प्रोवाच । कृष्ण ! येनायं पापः प्रतिभांश्रितस्तत्कारणं मया ज्ञातम् । गुरुणाऽस्य गात्रे वज्रसंनिभं वर्म बद्धम् । परं चैतद्विनाशने प्रतियोगमहमपि जाने । एवमाभाष्य कवचोच्छित्तये यद्दिव्यास्त्रं व्यधात् तद् द्रोणपुत्रो दूरादेव महास्त्रेण विदारयामास । एव मालोक्य दिव्यास्त्रं द्विष्प्रयोज्यं न भवतीति विचिन्त्य पार्थः सुयोधनस्य रथाश्वकार्मुकाणि चिच्छेदं । ततोऽर्जुनोऽस्याहस्तत्राणंवर्म शरै विंद्ध्वा तं युद्धाविमुखं चकार । अथ कर्णशिखिध्वजकर्णसुतमद्रराजसुयोधनयूपकेतुभूरिश्रवःप्रभृतयो नृपा घोरं युयुधिरे । एवमालोक्य लघुहस्तोऽर्जुनः समापततां तेषां वर्मच्छत्रधनूंषि वाणै श्चिच्छेद । तस्मिन्नवसरेऽसौ विवर्म्मणां तेषां पद्मगर्भानिभानि शरीराणि रुधिरै र्बालातपारुणानीव व्यधात् । ततो जिष्णुना वीरेषु वध्यमानेषु खड्गभुजः कालो निजोत्सव इव ननर्त । अत्रान्तरे व्यूहमुखस्थितद्रोणो महारथपरिवृतं धर्मसुतं जिघृक्षया समुपाद्रवत् । सोऽथ मत्स्यपांचालसृंजयकेकयान् स्वल्पावशेषान् कृत्वा राजानमपि शरैर्विरथं चकार । एवं सर्वोपायाऽसमर्थं युधिष्ठिरं दृष्ट्वा सर्वे सैनिका हृतोनृप २ इति स्फारतारं प्रचुक्रुशुः । ततोऽजातशत्रुर्यां प्राणहारिणीं शक्तिं प्राहिणोत् तां द्रोणो ब्रह्मास्त्रेण क्षणाद् भस्मसादकरोत् । अत्रान्तरे सहायार्थमागतं सहदेवरथं समारुह्य नृपो द्रोणं त्यक्त्वाऽन्यत्र ययौ । अथ धर्मतनये विद्रुते कोपाकुलो द्रोणो शरश्रेणिशिखाशतैः पाण्डवचमूं ददाह । ततो बृहत्क्षत्रो क्षेमधूर्तिं सहदेवो धृष्टकेतुं सात्यकिर्व्याघ्रदत्तञ्चावधीत् । एवं परैर्विध्यमानं बलं दृष्ट्वा द्रोणपुत्रः शिरः कूटावशेषाणि पाण्डुसैन्यानि व्यधात् । ततो बकभ्राताऽलम्बुसः शरशतैर्भीमसेनं योधयित्वा तत्सेनाञ्च माययाऽवधीत् । अथ भीमो राक्षसेन प्रवर्तितां रुधिरापगां दृष्ट्वा त्वाष्ट्रेणास्त्रेण तन्मायां छित्वा तमजयत् । अत्रान्तरे भीमसेनसहायार्थं समागतो घटोत्कचस्तं महाकायं निवारयामास । ततस्तयोर्द्वन्द्वयुद्धे प्रवृत्ते लब्धावकाशो घटोत्कचस्तमलम्बुसं समाकृष्य भूमौ पातयित्वा च तं व्यसुं विदधे । एवं समरे घटोत्कचेन राक्षसे निहते सर्वभूभुजां घोरं भयमाविरभूत् । अत्रान्तरे युधिष्ठिरो दूरस्थ पार्थस्य शंखनिर्घोषमशृण्वन् शंकाकुलितचेतसा सात्यकिं प्रोवाच । वीर ! पश्य । गुरुबन्धुसुहृदां दोर्दर्पप्रदर्शनकालोऽयं तवाऽग्रे समुपस्थितः । सांप्रतं शत्रुमध्यगस्य किरीटिनः शंखशब्दो न श्रूयते । धुरन्धर ! शौर्यशालिप्रवरं त्वां विहाय कोऽन्यो भारमीदृशं बोढुं समर्थः ? पात्रे पृथ्वीं वितरतां शरणागतं रक्षतां मित्रार्थे च प्राणांस्त्यजतां समानफलं श्रूयते । लोकेऽस्मिन् पवनाकंपितपिप्पलदलालोलैः प्राणैर्यैः स्थिरं यशः क्रियते । त एव भवद्विधा धन्याः । सखे ! त्वयि पार्थं द्रष्टुं याते भीमपार्ष-

तद्गुप्तस्य मे द्रोणग्रहणजभयं नास्तीति सत्यं विद्धि। एवमाकर्ण्य सत्वसागरः सात्यकिः परानीकविभित्सया तथेत्युक्त्वा सज्जोऽभवत्। ततोऽसौ शुभ्राश्वं रथमास्थाय भीमे च रक्षाभारं निधाय मंगलालंकृतो युद्धार्थं प्रययौ। सोऽथ भारद्वाजमासाद्य वैनतेयवद्राज-भुजंगानां क्षणमाकंपविभ्रमं चक्रे। अथाचार्ययुयुधानयोः स्कन्दतारकयोरिव सर्वलोकसंमोहनं युद्धमभूत्। तत्राचार्यं दुर्जयं मत्वा प्रत्युत्पन्नमतिः सात्यकिः प्रोवाच। गुरो! तव शिष्यं फल्गुनमन्वेष्टुं प्रस्थितस्य मेऽस्मिन् स्वल्यावशेषेऽह्नि विघ्नं कर्तुं नार्हसि। तच्छ्रुत्वा चापमाकृष्याचार्यो बभाषे। सात्यके! मयि जीवति त्वया प्रवेष्टुं न शक्यम्। निशम्यैवं शैनेयो वातजवेन रथेन पराहूतं तं वञ्चयित्वाऽग्रे समाविशत्। सोऽथ रणे कृतवर्ममुखान् जित्वा म्लेच्छाकिरातकाम्बोजांश्च न्यपातयत्। ततोऽनिष्टापत्तिं विचिन्त्य कृतवर्मा व्यूहाग्र-मुद्यतान् पाण्डवान् निर्गत्य निवारयामास। अत्रान्तरे जलसंधो जवेन प्रविशन्तं सात्य-किं विलोक्य तं सायकैर्न्यरुणत्। ततः शैनेयः कुंजरघटान्भिन्दन् तदुत्सृष्टाञ्छरवृष्टिं शरैर्विक्षिप्य तस्य शक्रायुधोपमं धनुश्चिच्छेद। ततोऽसौ गजारूढः सर्वायुधव्ययं कृत्वा सावेगः सात्यकिमुपाद्रवत्। एवमालोक्य सात्यकिः पूर्वं तस्य भुजौ छित्वाऽनन्तरञ्च सरत्नमुकुटं शिरश्चिच्छेद। तस्मिन् हते युयुधानशरार्दितो नागेन्द्रो विद्रुत्य कौरवानीकं पिपेष। एवं मागधानीकं विदार्य यदुपुंगवः सात्यकिर्दुर्योधन मुखान् वीरानयोधयत्। ततोऽसौ तत्रत्यान् सुभटान् विजित्य सुदर्शननृपते रुचिरं शिरश्चकर्त। ततोऽसौ शवरान् भर्त्सयन् यववान् पातयन् भोजान् मर्दयन् बर्बरान् नाशयन् ताम्रलिप्तिकान् मोहयन् शकान् खण्डयन् मुण्डान् मुण्डयन् कुविन्दान् कुत्सयन् दस्यूँश्च द्रावयामास। अत्रान्तरे सात्यकिशरविद्धो दुःशासनः समरं विहाय तूर्णं गुरुसंनिधावगमत्। अथ द्रोणस्तं विलोक्य प्रोवाच। वीर! कोऽयं ते संभ्रमोऽस्मिन्नवसरे? संप्रति त्वं प्रतिनिवृत्य जयद्रथं रक्ष। अहो! सात्यकिशरैर्वरूथिनीं भिन्नां दृष्ट्वाऽपि योद्धव्ये किं विद्रुतोऽसि? । पश्य यदा शैनेयेनापि दुष्करं कर्म विहितम्। तदा भीमसेन पार्थौ तु न जाने कीदृग्विधं कर्म करिष्यतः? अपरंच। नैषा कौरवसभा न सा पाञ्चाली यत्र त्वं कृष्टवानसि। इमास्तु प्राणपणप्राप्या यशोविक्रमभूमयः सन्ति। किं बहुना पाण्डुनन्दनै र्युष्माकमद्यापि संधी रोचताम्। यतः संप्रत्यपि वीरविनाशकाः पार्थसायका नान्तं याताः। अथवा। तूर्णं शात्रवैरपराङ्मुखो भूत्वा युद्ध्यस्व। यतो भग्नप्रधाना हि सेना वार्यमाणापि दीर्यते। निशम्यैवं कोपातुरो दुःशासनः सुधन्ववीरकेतुचित्रकेतुचित्ररथान् पाञ्चालानवधीत्। ततः क्रुद्धो धृष्टद्युम्नः सर्वाभरणभेदिभिः शरैर्द्रोणं मूर्च्छितं

कृत्वा सेनामदारयत् । ततः खड्गपाणिः पार्षतो यावद् द्रोणं हन्तुं प्रयतते तावल्लब्ध संज्ञो द्रोणोऽर्धचन्द्रैः शरैस्तमपूरयत् । ततो वृश्चिकैरिव तैर्व्याप्तः पराङ्मुखो धृष्टद्युम्नो गुरुप्रेरितपृथुसायकैर्दारित श्च प्रययौ । अथ पाण्डवानामनीकिनीं दारयन् क्रुद्धः शोणहयो भूमिपालानां शिरोभिः क्ष्मामपूरयत् । अत्रान्तरे सात्यकिः शरवर्षिण मायान्तं दुःशासनं वीक्ष्य शरैस्तं विरथध्वजसायकं छिन्नवर्माणं च चकार । ततः प्रहारशकलीकृतै र्विद्रुतै र्म्लेच्छैः संत्यक्तं विमुखीभूतं च तं सात्यकि र्भीमस्य तां प्रतिज्ञां विचिन्त्य नावधीत् । अस्मिन्नवसरे शिशुपालसुतो रुक्मरथः पाञ्चालवाहिनीं विशन् द्रोणाय दीप्तां शक्तिं प्राहिणोत् । अथ युधि गुरुस्तदश्वस्य तूर्णं शरशतैः क्षयं कृत्वा मौलिरत्नांशुच्छुरितोष्णीषं शिरश्चकर्त । ततो धृष्टकेतौ हते सति बाणवर्षी जलसंधसुतेऽपि क्षणाद् द्रोणानलपतंगतां प्राप । अथ धृष्टद्युम्नसुतं क्षत्रवर्माणमाशुगै र्हत्वा भार्गवो हैहयानिव द्रोणः पांचालान् जघान । ततस्तस्मिन् घोरे महाहवे पाण्डुसेनासु भग्नासु व्यथितो जनः क्रूरवर्माणमाचार्यं निनिन्द । अथ शैनेये चिरप्रविष्टे सति पुनः शंकितो धर्मजो लंबमाने रवौ भीमं समेत्य प्राह । भ्रातः ! किरीटिनः शंखशब्दोऽद्यापि न श्रूयते । अतः सर्वैर्महारथैर्मिलित्वा किमप्यनिष्टमस्य विहितमित्यहं मन्ये । हे भीम ! देवशत्रुतमोविध्वंसकं भास्करोपमं तवानुजं विना कथं जीवितुमुत्सहे । अपरं च । घोरः पाञ्चजन्यस्य निर्घोषः श्रूयते । अतः कष्टं, पार्थवधान् माधवो योद्धुमुद्यत इति जाने । तस्माद् भो वीर ! त्वं गत्वा सव्यसाचिनो वृत्तान्तं जानीहि । यतस्तिमिराक्रान्ता दिशोऽहं पश्यामीति युधिष्ठिरेणोक्ते वृकोदरस्तं जगाद । राजन् ! धनजंये मिथ्या शंकां कर्तुं नार्हसि यतो विबुधारातिवधूवैधव्यदायिनं पार्थं युधि धर्तुं कः प्रगल्भते ? राजन् ! तथापि तव शासनं शिरसा गृहीत्वा कुरुवाहिनीं दारयन् जिष्णुपदवीं चरामीत्युक्त्वा मारुतिः पक्षिराज इव स्यन्दनेन द्रुतमभ्यधावत् । ततोऽसौ रुक्मपुंखैः शिलीमुखैः कुरुवनमपूरयत् । एवमालोक्याचार्योऽब्रवीत् । कौन्तेय ! मामनिर्जित्य वाहिनीं भेत्तुं न शक्यइति कथयित्वा द्रोणः पाण्डवं शरवर्षैरवाकिरत् । ततस्तद्बाणाभिन्नो वृकोदरो बभाषे । द्रोण ! यथा त्वं मन्यसे तथाऽधुना भवान् नो गुरु र्न । किमन्यत् । पार्थो हि मान्यान् पूजयति । परमहं तु भीमोऽस्मीत्यभिधाय तस्मै वज्रोपमां गदां प्राहिणोत् । ततो द्रोणत्यक्तो रथस्तया शकलतां ययौ । अथ द्रोणेऽपक्रान्ते भीमसायकवर्षिणं सानुजं कौरवेश्वरं भीमः शरैरपूरयत् । ततः सुषेणवृन्दारक दीर्घनेत्रदुर्विमोचनचित्रकान्तसुदर्शनान् निपात्य सैन्यं गदानिर्भिन्नं चक्रे । अत्रान्तरे

द्रोणस्वबलं विद्रुतं दृष्ट्वा पुनर्भीममुपाद्रवत्। ततो द्रोणभीमयोर्दारुणं युद्धमारब्धम्। एवमालोक्य देवा मिथः प्रोचुः। युद्धमिदं भार्गवकाकुस्थरणं स्मारयति। अथ वृकोदरः स्यन्दनादवरुह्य गुरुरथं दोर्भ्यामुत्क्षिप्य दूरदूरे चिक्षेप। अत्रान्तरे द्रोणो भग्नरथादवप्लुत्य प्रययौ। ततः पवनात्मजो रणसंघातान् पोथयन् राजवक्त्राणि पातयन् व्यूहं प्रविवेश। ततः संमुखागतं कर्णानीकं विदारयन् सात्यकिपार्श्वमगमत्। ततो भीमकार्मुकरवं समाकर्ण्य तं नादं च परिज्ञाय ननाद। तच्छ्रुत्वा दूरात् कृष्ण धनंजयावपि शंखौ प्रदध्मतुः। ततस्तन्नादेन साध्वसकृताशब्देन च भुवनानि चकंपिरे। अथ युधिष्ठिरः कृष्णयोस्तुल्यशंखनादं श्रुत्वा हर्षेण रिपुसागरात् समुत्तीर्णं पार्थं मेने। ततो भुजशालिना भीमेन भज्यमानं बलं दृष्ट्वा कर्णः कोपाद् बाणमयं जगत् कुर्वन्नभ्याययौ। एवमालोक्य नदत् पवनसूनुस्तमायान्तं शरैर्विद्धा कृत्तध्वजस्यन्दनकार्मुकं विमुखं चकार। ततो राधेये रणे भग्ने म्लानमुखो दुर्योधनो द्रोणमागत्य प्रोवाच। गुरो! यदि ते प्रियशिष्योऽर्जुनस्त्वामुल्लंघ्य गतः। स तु सह्यः। परं युयुधानवृकोदरौ प्रसभं प्रविष्टौ तत् कथं सहामहे। किमन्यत्। विधिवैमुख्यमस्मासु सत्यं विजृम्भते। किं बहुना। वीर्यमहोदधिर्भवानपि यत्र वेलामतिक्रान्तः। निशम्यैवं कुरुराजवचनं द्रोणः प्रत्यवदत्। पुरः सैन्यं पश्चाच्च गृहीतं कथं धार्यते। मयेतो यत्नाद् रक्ष्यमाणमपि प्राविदीर्येत एव। अपि च। सर्वे पाञ्चालसृंजया अवारिता अन्तः प्रविशन्त्येव। अतः सैन्यद्वारमेवात्र मया सर्वात्मनाऽतियत्नेन रक्षणीयम्। भवांश्च सर्वैरेभिः कर्णमुखैर्महारथैः सार्धं पार्थसात्यकिभीमानां वारणे किं न पर्याप्तः? अलमतिप्रपञ्चेन। यतोऽस्मिन् मुहुर्तशेषेऽह्नि तूर्णं जयद्रथं गत्वा रक्ष। अधुनैव रणद्यूते तत्पणावेव जयाजयौ भविष्यतः। इति गुरुणोक्तो राजा पाञ्चालनन्दनौ गत्वा सर्वैर्महारथैः सह किरीटिनश्चक्ररक्षौ विरथौ चकार। अत्रान्तरे कर्णः पुनर्वृकोदरं समागत्य शरैस्तं ज्वलितानलसंनिभं चक्रे। ततो भीमभुजोत्सृष्टैः पत्रिभिर्विद्धः सूतजश्छिन्नायुधरथो रणं तत्याज। ततः कुरुबले भग्ने मानी कर्णः समाश्वस्य रथेन नदन्तं भीमं पुनरादुद्रवत्। अथैवं कर्णभीमयोर्घोरे समरे प्रवृत्ते मिथो विशिखव्रातैर्नरनागरथक्षयो बभूव। अथ भीमः सूतपुत्रस्य तालोपमं धनुश्छित्वा मनोरथैः सह तस्य घननिर्घोषरथं जघान। ततः कर्णं विरथमालोक्य कुरुराजादिष्टो दुर्जयस्तमुपाद्रवत्। ततो भीमः शरवर्षिणं दुर्योधनानुजं गदया हत्वा कर्णं शरैरपूरयत्। अथ सूतपुत्रः पुनः स्यन्दनमास्थाय वृकोदरं बाणविद्धं चकार। अथ पावनिः कोपं कृत्वा गदां विसृज्य जवात् तद्रथं पिपेष।

एवमालोक्य सुयोधनः कोपात् कर्णगुप्तये दुर्मुखमादिदेश । ततोऽसौ भीमः कौरव मायान्तं तं शरैर्निर्भिन्नहृदयं कृत्वा रथादपातयत् । ततो दुःखाकुलः कर्णो दुर्मुख रथमारुह्य भीमाय दुःसहान् बाणान् प्राहिणोत् । ततो भीमोत्सृष्टाः शराः सनिश्वासा महोरगा इव कर्णं विनिर्भिद्य पातालतलं समाविशन् । सोऽथ महाधनुर्धरो गाढविद्धोऽपि जवव्यालोलकेतुना रथेन कुरुसैन्यधृतिमुन्मूलयन्निव दुद्राव । ततो जय दुर्मददुर्धरदुःसहदुर्मर्षणा भीममभ्यधावन् । एवमालोक्य स युद्ध्यमानांस्तान् वीरान् महावातो घनानिव पातयामास । एवं तेषु हतेषु वीरेषु महावीरो राधेयो विपुलं धनुर्धुनानो भीममयोधयत् । ततो भीमोऽस्य धनुश्छित्वा नर्दन् करेभ्यो वीरायुधान्यपि न्यपातयन् । ततःसुयोधनश्चित्रचित्रायुधविकर्णशत्रुंजयशत्रुंसहचित्रसेनादीन् सप्तानुजान् कर्णसहायार्थं प्रेषयामास । ततस्ते भीमेन सह युध्यमाना वीरगतिं प्रापुः । अथांगराजस्तान् पतितान् वीक्ष्य करुणापूर्णनयनोऽन्यंरथमारुह्य पुनर्भीमं योद्धुमुपाद्रवत् । एवमालोक्य युद्ध्यमानो वृकोदरोऽधिकसंरम्भाद् वज्रवेगैर्विशिखैस्तमपूरयत् । ततः कौरवेश्वरो भीमचापच्युतैः शरैराच्छादितं कर्णं दृष्ट्वा चित्राक्षचित्रासुचित्रवर्मचित्रकेशचारुचित्रोपाचित्रचित्रवाणान् तद्गुप्त्यै व्यादिदेश । ततो भीमस्तानभिमुखान् दृष्ट्वा शैलेभ्यः पादपानिव रथाग्रेभ्यो बाणैरुन्ममाथ । एवं विक्रमशालिषु तेषु राजपुत्रेषु हतेषु भीमकर्ण शरैः क्षिप्रं विपुलो जनसंक्षयो बभूव । अथ बाणभिन्नोऽधिरथि र्व्यथां संस्तभ्य कोपाद बाणमयं नभश्चक्रे । ततः कर्णशराः भीमं व्यश्वसूतधनुर्ध्वजं चक्रुः । अथ वृकोदरः क्षीणायुधत्वमवाप्य कर्णाय द्विरदान् हयाँश्च प्राहिणोत् । सोऽथ ताञ्छरैश्चिच्छेद । तस्मिन्नवसरे कर्णः कुन्तीवचः स्मृत्वा विषमस्थमपि वृकोदरं न जघान । यतः साधवः सत्यशीला हि भवन्ति । ततो राधेयो भीममवदत् । मूढ ! महद्भिर्मा युद्ध्यस्व । हंहो बहुभुजस्तवनेयं युद्धभूरुचिता । मांसास्थिकूटकुट्टाकस्तु सूदशालासु शोभते । अथवा भारयोग्यस्य ते शरीरस्य कानने लब्धवृत्तयस्तूबरका एव युक्ताः । अत्रान्तरे कंसारिर्भीमं कृच्छ्रदशास्थितं विलोक्य फल्गुणाय न्यवेदयत् । ततोऽर्जुनः शरैः कर्णंतूर्णमाच्छादयामास । अथाऽर्जुनशराविद्धः कर्णो भीत्या दुद्राव । अथ वृकोदरे सात्यकिरथारूढे पार्थो व्योमवर्त्मना कर्णाय नाराचं प्राहिणोत् । ततो वज्रतुल्यं तमायान्तं दृष्ट्वाऽश्वत्थामा दूरात् पतत्रिभिराशु चिच्छेद । अथार्जुनो बाणशतै द्रौणात्मजमपूरयत् । सोऽपि तत् सायकविद्धः सेनासंगरं समाविवेश । ततो वीरचक्रं विदारयन् यत्र पापो जयद्रथो महारथैर्गुप्त आस्ते तं सूचिव्यूहं धनंजयो नाससाद । अत्रान्तरे शरज्वालालीढक्षितिपकाननं सात्यकिं

मलम्बुषोऽभ्याद्रवत्। विलोक्यैवं सात्यकिः शरैस्तं निवारयामास । ततस्तयोर्मुहूर्तं जयपराजयहीनं तुमुलं युद्धं बभूव । ततोऽवसरमवाप्य पूर्वं भल्लेनतस्यः शिरश्छित्त्वाऽन्येषामपि पञ्चशतराजपुत्राणां शिरांसि चकर्त । अथैवं रणवीरचमूं क्षपयन्तं सात्यकिं वीरकेतुर्भूरिश्रवाः स्वयमभ्यधावत् । ततस्तयोरसाधारणयुद्धं दृष्ट्वा सर्वे चकिता बभूवुः । ततस्तौ परस्परं चापस्यन्दनौ छित्वा खड्गचर्मधरौ चिराय युयुधाते । ततो जवादलक्ष्यवपुषोश्चित्रमण्डलचारिणोस्तयोः स्थगितसंग्रामा वीराः प्रेक्षकतां ययुः । ततः सोमदत्तिः केशेषु सात्यकिमाकृष्य वक्षसि पादेन हत्वाऽधो न्यपातयत् । ततः कृष्णो भूरिश्रवसं सात्यकिशिरश्छेत्तुमुद्यतं दृष्ट्वा पार्थं प्रोवाच । सखे ! धर्मराजेन त्वदर्थं संप्रेषितं संग्रामे शत्रुवशमागतं क्लान्तं च सात्यकिं पश्य। दृष्टौ रणे सुभटानां जयाऽजयौ सर्वथाऽनित्यौ । यत् सात्यकिरपि क्लीबोचितां दशां प्राप्तः । चण्डपराक्रमोऽयं भूरिश्रवास्तवशिष्यसात्यकेः शिरो हर्तुं समुद्यतोऽस्तीतिजनार्दनेनोक्ते पार्थः प्रहाराभिमुखस्थ भूरिश्रवसो भुजं भल्लेन जहार । ततः किरीटिनाऽदृश्येन भुजस्तम्भे दूरादेव कृत्ते जनाः कालचक्रान्निपतितं सात्यकिं मेनिरे । तस्मिन् जयद्विपालाने प्रतापमंदिरस्तम्भे भुवि च पातिते भुजे वामकराकृष्टां सात्यकिमूर्द्धजावलिं त्यक्त्वा यूपकेतुर्धनंजयमवादीत् । पार्थ ! त्वयात्र कीदृशं वीरव्रतं दर्शितम् । येनान्यरणासक्तस्य मे भुजश्छद्मना हतः। अथवा यस्य जनार्दनो मन्त्री तस्य ते हृदि राज्यलोभेन या कूटयुद्धविदग्धता जाता सा समुचितैवेत्युक्त्वा वामहस्तेन शरशय्यां विधाय भ्रूमध्ये निहितेक्षणो ध्यानमग्नो बभूव । अथार्जुनो निन्दामुखरितान् नृपान् प्रोवाच । क्षत्रियाः ! विषमावस्थायां विह्वलो सात्यकिर्मया रक्षितः । यदि शिष्यस्य सख्युश्च वा हन्ता मया कृत्तहस्तः कृतस्तर्हि कोऽपराधो मम ? ह्यः समेत्य सर्वपार्थिवैश्छिन्नधनुर्विरथो निःसहायोऽभिन्युर्हतस्तदा किं यूयमाहवे निर्दोषाः ? अत्रान्तरे लब्धसंज्ञः सात्यकिः क्रोधाद् वृत्तान्तमविज्ञाय कृष्णादिभिर्वार्यमाणोऽपि सात्यकिस्तच्छिरश्चिच्छेद । एवमालोक्य तत्र वीराणां धिक् शब्दः समुत्तस्थौ । दिवि च सुरा भूयो भूयः सोमदत्तेश्चरितं प्रशशंसुः । पुरा सात्यकिनिर्जितः सोमदत्तस्त्रिपुरारिं तपसा समाराध्य सात्यकिजेतारं भूरिश्रवसमात्मजं लेभे । एवं तस्मिन् वीरे निपतिते जयद्रथं हन्तुं श्वेताश्वस्तूर्णं निबिडराजमण्डलं विवेश । ततोऽसौ भास्करेऽस्ताद्रिचूडामणितां गन्तुमिच्छति सर्वमहारथैर्गुप्तं सैन्धवं दृष्ट्वा कोपारुणया दृशैव कर्णान्ताकृष्टसायकस्तं ददाह । ततो सैन्ये विलुलितेऽम्बुधौ परावृत्त इव सिन्धुराजो हतोहत इति महास्वनो बभूव । ततः कर्णकृपद्रौणिदुःशासन-

सुयोधनाः सर्वमहीपालैः सह धनंजयमयोधयन् । ततोऽर्जुनः शरैस्तूर्णं तान्ध्वस्तवर्मरथध्वजान् विधाय राजचक्रं चूर्णयन् सैन्धवमुपाद्रवत् । अथ जयद्रथोऽपि कृष्णसारथिमर्जुनं विलोक्य निरन्तराऽऽकृष्टैः सायकैस्तमपूरयत् । ततो दिनान्ते मधुरिपुः सव्यसाचिनमाह । सखे ! दिव्यपत्रिणा शीघ्रं सिन्धुपतेः शिरश्छिन्धि । पुरा वृद्धक्षत्रः पिताऽस्मै वरं प्रादात् । यदाऽस्य शिरः क्षितौ पतिष्यति तदा सोऽपि निपतिष्यति । पिताऽस्य समन्तपञ्चके तपश्चरति । संप्रति त्वं रिपुशिरस्तदंके पातय । तस्मादेतच्च गां प्रयातु । निशम्यैवं जिष्णुर्जवाच्छत्रुशिरश्छित्वा सन्ध्याध्यानस्थजनकांके न्यपातयत् । ततो यावदज्ञातवृत्तस्य वृद्धक्षत्रस्यांकात् तच्छिरो क्षितौ न्यपतत् तावदेव तस्याऽपि शिरो धरातले निपपात । ततस्तस्मिन् वीरे निपातिते कृष्णाऽर्जुनौ दिशः स्फोटयन्निव शंखावध्मासिष्टाम् । अथ व्यूहे विघटिते कुरुराजवरूथिनी महावातैरब्धौ नौकेव विचचाल । तच्छ्रुत्वा भीमो जयद्रथं हतं मत्वाऽतितरां ननाद । ततो युधिष्ठिरोऽपि प्रहृष्टो नानावाद्यानि प्रतिजग्राह । तस्मिन्नवसरे पार्थेन सप्ताक्षौहिणी हत्वा जयद्रथोऽपि हतः । अतो दैवस्य किमपि दुर्गं नेति जनाः परस्परमूचिरे । अथ निर्विभागे नृपतिक्षये युद्धे प्रवृत्ते जिष्णुः शरैः द्रोणकर्णकृपान्पराङ्मुखान् विदधे । अथ बाणविद्धः सात्यकिः हरिप्रदत्तरथमारुरोह । अथार्जुनो रणे मारुतेरपमानं कलयन् पुनरपि कर्णस्य वधाय प्रतिज्ञां व्यधात् । ततः सात्यकिफल्गुनौ युधिष्ठिरमवाप्य प्रमोदादभिनन्द्य च पराक्रमं मिथः प्रशशंसतुः । अथ युधिष्ठिरः कृष्णौ सानन्दं परिष्वज्य जगन्नाथं विष्णुमेव विजयकारणं मत्वातुष्टाव । अत्रान्तरे बाष्पाकुलः सुयोधनो द्रोणमभ्येत्य गुरो ! त्वयाऽऽश्वस्तोऽपि जयद्रथो निहत इत्युवाच । निशम्यैवं द्रोणोऽवदत् । राजन् ! यावत् तव वैरिणौ न हन्मि ताव न्निधनाय दीक्षितोऽहं कवचं न त्यक्ष्यामीत्याचार्येणाऽभिहते सर्वे दुर्योधनाऽनुगा रणमखे प्राणाहुती दातुं दृढनिश्चया बभूवुः । अथ शस्त्रास्त्रसज्जिता दुर्योधनप्रमुखाः परे घोरं संगरं चक्रिरे । तत्रार्जुनगर्जनै र्भीमसिंहनादैर्द्रोणकार्मुक निर्घोषैश्च पृथिवी समकंपत । ततस्तत्र निरन्तरं युध्यमानानां कुरुपाण्डवभूभुजां सा विभावरी साक्षात् कालरात्रिरिव बभौ । तस्मिन्नवसरे तमांसि खड्गद्विरदेषु वैपुल्यं छत्रव्यजनेषु च दारिद्र्यं प्रापुः । अत्रान्तरे द्रोणो महास्त्रौघै राजमण्डलं क्षपयन् रत्नमुकुटमण्डितं शिनिशिरः प्रोच्चकर्त । एवमालोक्य भीमसेनोऽपि रथाद्रथमभिप्लुत्य च मुष्टिना कालिंगराजपुत्रं जघान । ततो वृकोदरस्तूर्णं कालिंगकुल संहारं कृत्वा ध्रुवजलधाराऽभिधौ राजपुत्रावदारयत् । अथ भीमःकर्णं विमुखं विधाय पदा दुर्योधनानुजं निष्पिपेष । अत्रान्तरे सात्यकिरपि

सोमदत्ततनयं शलं हत्वा तत् पितरं पुत्रशोकविधुरं चकार। एवं कुरुचमूं दारयन्तं सात्यकिं दृष्ट्वा बाणैर्दिशः संपूरयन्नश्वत्थामा समाद्रवत्। अथाऽपरंरुद्रमिव सैन्यं क्षपयन्तं दृष्ट्वा निशीथे द्विगुणोत्साहमवलम्ब्य घटोत्कचस्तमभ्यधावत्। ततोऽश्वत्थाम्नि प्रभाधाम्नि बाणप्राकिरणे रणे प्रवर्तमाने घटोत्कचो राहुजृम्भाविजृम्भितं कुर्वन् रेजे। अथ रात्रौ द्रौणिमुक्तशराणां दिव्यरुचो भूतानां नेत्राणि न सेहिरे। ततस्तत्र द्रौणिरेकाकी हैडम्बवशवर्तिनीं निशाचराक्षौहिणीं सायुधां दलयन्नयोधयत्। अथ घटोत्कचः कालानलप्रभं चक्रं छित्वाऽञ्जनपर्वाणं तत् पुत्रं जघान। ततो द्रौणिः क्रुद्धोराक्षसविमोहिनीं मायां छित्वा विशिखैर्धृष्टद्युम्नानुजाञ्जघान। अथ द्रौणिः कुन्तीभोजसुतान्हत्वा प्रहारिणां च सहस्राणि रणक्षेत्रे जघान। ततः काल इव विचरंतं तं दृष्ट्वा सर्वे चकिता बभूवुः। अत्रान्तरे भीमसेनो बाह्लीकाधिपतेः शिरश्छित्वा वीरबाहुप्रभृतीन् दशदुर्योधनानुजान् जघान। एव मालोक्य सहायार्थमागताः सप्तगान्धारा अपि युद्ध्वा गतिं प्राप्ताः। ततो ऐन्द्रवारुणवायव्यास्त्रैः कौरवचमूं निघ्नन्तं युधिष्ठिरं द्रोणः स्वयमयोधयत्। ततस्तत्र द्रोणो यद् ब्रह्मास्त्रं प्रायुंक्त। धर्मसूनुस्तेनैव तत्प्रतीकारं चक्रे। अथ सुयोधनः सानुगपाण्डुतनयैर्मृद्यमानां चमूं दृष्ट्वा कर्णमुपसृत्य प्रोवाच। सखे! संग्रामे जयिभिः पाण्डुसूनुभिर्वध्यमानानां सैन्यानां विरावमाकर्णय। किं बहुना। निरालोकेऽस्मिन् तुमुले संख्ये त्वमेवैकः शूरः परायणमसि। एवं स्वयं भूभुजाऽर्थितो राधेयः पाण्डुसेनासु शरावलिं क्षिपन् प्रोवाच। राजन्! वीरशेखरे भीष्मे शरशय्यास्थिते क्रमादायातो भारो मामेवानुसरति। अत्र किमुच्यते। अद्यैव वासवदत्तया शक्त्या हरस्यापि वीरव्रतहरं किरीटिनं पातयामीति सूतपुत्रेणोक्ते प्रहसन् कृपःप्रोवाच। अवीरेऽस्मिन् लोके त्वमेव वीरतां गतोऽसीति सत्यम्। अहोनुराधेय! तवामुना मिथ्याजल्पितेन वीराणां श्रवणौ बधिरीकृतौ। वीरमानिन्! यदा त्वयि विद्यमाने सिन्धुपतिर्हतस्तदाधुना श्रुतोदन्तइव कथं जल्पसि। सर्वे वयं तव पाण्डुसुतस्य च सत्वतारतम्याऽभिज्ञाः। संप्रत्यात्मश्लाघां त्यक्त्वा यथाबलं युद्ध्यस्व। निशम्यैतत् कोपात् कर्णोऽब्रवीत्। यद्वीरास्तु प्रावृषेण्यवारिदा इव सफलं गर्जन्ति। रे जठर! त्वं तु निराचारतामवलम्ब्य मोहादित्थं वदसि। अन्यथा स्वपक्षीयोभूत्वाऽपि त्वं परपक्षबन्दीव परान् कथं स्तौषि? ब्रह्मबन्धो! पुनर्द्वेषाद्यद्येवमभिधास्यसि। तदाऽनेनैवाऽसिना तव जिव्हां छेत्स्यामि! निशम्यैवं तद्वचनं द्रौणिः संरम्भात् कुपितंमातुलं वीक्ष्य करवालमाकृष्य च कर्णमुपाऽद्रवत्। विलोक्यैतत् कौरवसैन्यं सर्वं निश्चलमभूत्। अथ राजा त्रिजगत्प्रलयक्षमम् रुद्रतुल्यं सगौतमं तमायान्तं दृष्ट्वा नयवाग्भिः स्वयं

न्यवारयत् । ततो द्रौणिकर्णौ प्रसाद्य सर्वैर्महारथैः सह रणोन्मुखः कुरुराजः पाण्डवचमूं विवेश । अथाकर्णाञ्चितकोदण्डमुक्तकर्णशरैर्यौधिष्ठिरसैन्यं समन्ततो विप्रकीर्णमभूत् । एवमालोक्य पार्थजलदोऽत्युत्कटकर्णाग्निं बाणधाराभिः सहसाऽऽवृणोत् । ततोऽर्जुनशरच्छिन्नचापरथध्वजःकर्णो भग्नमनोरथत्वमेत्य कृपरथमारुरोह । अथाश्वत्थामा शत्रुभिर्युद्ध्यमानं वीरदुर्योधनं दृष्ट्वा सहसा पाण्डवचमूंनिजघान । तस्मिन्नवसरे द्रोणपुत्रेण बध्यमानाः पाञ्चाला भीत्या दिशः प्रययुः । ततो द्रौणिर्धृष्टद्युम्नं जित्वा तदनुगांश्च हत्वा रणस्थले कृतान्तोद्यानविभ्रमं चक्रे । अत्रान्तरे भीमार्जुनसहितो युधिष्ठिरः स्वयमागत्य कौरवीं सेनां विद्राव्य द्रोणशेषामिवाकरोत् । अथ सात्यकिः पृथुविक्रमं सोमदत्तमायान्तं दृष्ट्वा कुमारस्तारकमिव तमयोधयत् । ततः सात्यकिस्तद्बाणाघातव्यथां संस्तभ्य वज्रोपमेन शरेण तं विदार्य धरण्यामपातयत् । ततो दिव्यास्त्रग्रामदुस्तरे द्रोणाऽर्जुनरणे रक्ताम्बरवती शर्वरी कालरात्रिरिव विबभौ । अथ किरीटिप्रमुखैर्द्रोणद्रौणिकृपेरितैश्च भज्यमानानां सैन्यानां भयदो रवो बभूव । ततो दुर्योधनादेशाद् गाढे तमसि गजाश्वोत्संगसंगिभिर्दीपैर्वीरा युयुधिरे । ततः संगरे विमर्दनष्टेषु तेषु दीपेषु वैराग्यपनयैरिव निशीथो यौवनं प्राप । ततो निर्विभागे युद्धे प्रवृत्ते धर्मनन्दनः कौरवेश्वरं कर्णञ्च सहदेवमजैषीत् । ततः कर्णसुतो वृषसेनः सायकैः पाण्डवसेनां द्रौपदश्च रोषात् कुरुसैन्यं व्यदारयत् । अत्रान्तरे भारद्वाजस्य पश्यतो धृष्टद्युम्नो द्रुमसेननृपमवधीत् । ततो दुर्योधनगिरा द्रोणकर्णौ कृत्तनृपशिरोभिर्युद्धस्थलं पद्माकरमिव चक्रतुः । अथ कर्णो धृष्टद्युम्नमुखान् जित्वा पाण्डवचमूं विद्राव्य राजकदनं चक्रे । एवमालोक्य पाण्डुपुत्राणां सकला जयाशा तनुतामयासीत् । ततः कृष्णवचनात् कृष्णरात्रौ घटोत्कचः कृष्णाकोप इव त्वरितं कर्णमुपाद्रवत् । एवमालोक्य भयभीताः सैनिका दावं विलोक्य मृगा इव समन्तात् पलायाञ्चक्रिरे । ततः पार्थः सहसा समागत्य स्फाराभिःशरधाराभिःकर्णमपूरयत् । अत्रान्तरे जटासुरसुतोवली कौरवेश्वरमामन्त्र्यांगराजरक्षायै समभ्यायात् । ततः शस्त्रास्त्रशिलापावकवर्षिणोर्घटोत्कचालम्बुसयोस्तुमुलं युद्धं प्रावर्तत । तस्मिन्नवसरे तयोर्माया विमोहिता बहवो योधाःकृतान्तनगराऽतिथयो बभूवुः । अथावकाशमवाप्य भैमी रथाद्रथमभिद्रुत्य दोर्भ्यां मित्रमिव गाढमालिंग्य च पीडयांचकार । ततो घटोत्कचो राक्षसं तं विनिष्पिष्य खड्गेन तच्छिरश्चकर्त । अत्रान्तरे समायातं दुर्योधनं वीक्ष्य प्रोवाच । नृपाधम ! गृहाण पूजायां तव मित्रशिर इत्युक्त्वा गर्जन् कालइव कर्णमभ्याक्रमत् । ततः कर्णराक्षसयोर्घोरं समरं प्रवृत्तं दृष्ट्वा दिवि स्थिता विबुधा रामरावणसंग्राममस्मरन् ।

तत्र विशालाकारैर्विशिखैस्तथा प्रज्वालितैरुल्मुकैर्विद्धोऽपि कर्णो नाऽभैषीत्। ततः कर्ण-सायकैर्निर्भिन्नो राक्षसः कर्णविध्वंसाय चक्रं प्राहिणोत् । एवमालोक्य कर्णस्तेजः पिंज-रिताम्बरं तच्चक्रं बाणैः खण्डशश्चकार। अथ घटोत्कचः कोपाद्विमोहिनीं मायां स मवलम्ब्य तत् सूतध्वजरथं च पिष्ट्वा व्योम्न्युत्पपात । ततोऽसौ सिंहगजादीनां नानारूपाणि धारयन् विपुलाः शिलाः प्राक्षिपत्। तस्मिन्नवसरे कुरुसेनासु राक्षसो भुवो वन्हिं दिवः शस्त्रं दिग्भ्यो राक्षसमण्डलं च विसृजन् वैकर्तनमयोधयत् । ततो दिव्यास्त्रतेजसा कर्णो मायां विधूय पाण्डवचमूं निर्दहन् राक्षसमपि सायकैर्विव्याध । एवमालोक्य हैडिम्बानुचराः कोपात् कर्णमभ्याद्रवन्। वैकर्तनः सायकैस्तान् विद्ध्वा निःशेषानकरोत् । ततो भैमिरष्टाष्टचक्रा मशनिं स्वयं रुद्रेण निर्मितां कर्णाय ससर्ज । ततः सा राक्षसेन्द्रविसृष्टाऽशनिः कर्णरथं सहसा भस्मसाद् व्यधात् । अत्रान्तरेऽन्यरथमास्थाय कर्णो ये ये पिशिताशनाः पुनः सहायार्थं समायातास्तानपि विशिखैर्जघान । एवमालोक्य महामायो घटोत्कचो यावदन्त-र्हितोऽभवत् तावदेव सुयोधनप्रेरितोऽलायुधः समागच्छत् । ततोऽसौ कोपात् सायकान् विससर्ज । ज्ञात्वैवं तद्वधाशाया भीमो गदां प्राहिणोत् । बलवान् राक्षसो गदया तां गदां हत्वा जलदवद्गर्जन् खमुत्पपात । अथ कूटयोधिनाऽलायुधेन रजन्यां संसक्तं भीमं दृष्ट्वा कृष्णः क्षणं सन्देहाकुलितो बभूव । ततः कृष्णवचसा वीरप्रवरोघटोत्कचः कर्णं त्यक्त्वाऽलायुधं समभ्यायात् । ततस्तयोर्मुहूर्तं नियुद्धमभूत् । तत्र घटोत्कचस्तं बाहुभ्यां निष्पीड्य धरायां पातयामास । अथाऽसौ यावदुत्तिष्ठति तावदेव तीक्ष्णक्षुरेण तच्छिर-श्चिच्छेद । अथ हैडिम्बः पुनः कर्णं समभ्येत्य शिलावर्षैस्तं ताडयामास। कर्णोऽपि पार्थ-वरूथिनीं क्षपयित्वा शरजालैर्घटोत्कचं पूरयामास। तत्राऽसौ शिलोल्मुकवृक्षायुधैः कौरव-सेनां विदलयन् महाभयं जनयामास। विलोक्यैवं निशीथे राक्षसयुद्धं भग्नस्यन्दनकुञ्जरा बहवो महीपाला दुद्रुवुः। अवसरेऽस्मिन् भयंकरे केवलमेकः कर्ण एव निश्चलः सायकैः खं पूरयांबभूव । ततो ये त्रिशूलगदाचक्रभुशुण्डिशरतोमराः परस्परं न्यपतन् । तै रुभयपक्षसैनिका नाशं प्रपेदिरे । अवसरेऽस्मिन् विद्रुते च सैन्ये धैर्यशालिनि राधेये च स्थिते राक्षसेन्द्रमायया सर्वं जगदकंपत । विलोक्यैवं स्वस्तीत्युक्त्वा सिद्धाद्या गगन-स्थिता देवगणाः कर्णसहानुभूतिं प्रदर्शयामासुः । अत्रान्तरे कौरवः कर्णमभ्येत्य प्रोवाच । सखे ! यद्यपि त्वया रणे महावीरता प्रदर्शिता । तथाप्यस्मत्सैन्यसंहारमपि पश्य । या शक्तिस्त्वयाऽर्जुनवधे धार्यते तयाऽयमेव कथं न हन्यते ? यदा रात्रावेव सर्वसंहारो भविष्यति तदा प्रातः पार्थवधाय कां शक्तिं प्रयोजयिष्यसि । निशम्यैवं

कर्णः शक्रदत्तां सुपरिरक्षितामेकवीरवधायत्तां तां च शक्तिं नभःस्थले प्राक्षिपत् । साऽथ वीरराक्षसदृढवक्षःस्थलं सद्यो विदार्यापराप्राणशक्तिरिव त्रिदिवं जगाम । ततो दग्धमायो हैडम्बो भिन्नहृदयः पतन् पर्वतोपमदेहभारेण कुरुवाहिनीं पिपेष । एवं महापराक्रमे घटोत्कचे हते प्रहृष्टकुरवो मुहुर्मुहुः कर्णं प्राशंसन् । ततः कर्णे शक्तिहीने पाण्डवानीके च विषण्णे कंसारिरानन्देन ननर्त । एवमालोक्य घटोत्कचवधदुःखितोऽर्जुनो जिन्दन्निव प्रोवाच । जनार्दन ! विषादसमये कोऽयं ते प्रहर्षः ? निशम्यैवं कृष्णचन्द्रोऽब्रवीत् । सखे ! हैडिम्बवधेन कर्णोऽधुना जितः । यदि स तां शक्तिं घटोत्कचे नापातयिष्यत् तदा सा त्वामहनिष्यत् । अस्माकं सौभाग्यादेव कर्णदोर्दण्डाच्छक्तिर्विनिःसृता । एतन्मम हर्षकारणम् । पुरा युद्धमिदं ज्ञात्वा जरासंधैकलव्यशिशुपालादयो मया शक्तिभिर्हताः । केवलमेकः कर्ण एव रणेऽजेय आसीत् । पार्थ ! रणे कर्ण एकाक्येव दुर्जयः किं पुनर्वासवदत्तया शक्त्या संपन्नः । हे मित्र ! प्रतिनिशं कौरवैः प्रेर्यमाणोऽपि स मन्मायामोहितस्त्वयि शक्तिं नोत्सृष्टवान् । इत्युक्तवति श्रीकृष्णे क्रोधान्धाः कुरुपाण्डवा निर्विभागं युयुधिरे । एवं कृष्णवचनं श्रुत्वा समाश्वस्तो युधिष्ठिरः कोपं कृत्वा कर्णमुपाद्रवत् । अत्रान्तरे भगवान् व्यासोऽभ्येत्य धर्मराजं प्रोवाच । दिष्ट्या कर्णशक्त्या जगदनर्जुनं न कृतम् । संप्रति वीर ! निराकुलस्त्वं युद्ध्यस्व । किं बहुना । सर्वे नृपा इतश्चतुर्भिर्दिवसैर्न भविष्यन्ति । धर्मवीर ! क्रोधं त्यज । यतो जयः सदैव धर्मानुग इत्युक्त्वाऽन्तर्हिते व्यासे भीमार्जुनयुधिष्ठिरा द्रोणकर्णकृपादिभिः सह घोरसमरं कर्तुमारेभिरे । तत्र सा त्रियामा शूराणां कालरात्रिर्यक्षरक्षसामुत्सवदात्री महीभुजां च सहस्रयामतां याता । ततः सैन्ये निद्राकुले यशोनिधिः पार्थः कारुण्याद् जगाद । निरालोकेऽस्मिन् मुहूर्ते सर्वे महारथा निद्रामुकुलितेक्षणाः क्षणं विश्रान्तिं भजन्तु । निशम्यैवं सर्वे सैनिका धनंजयं प्रशंसन्तो गजरथस्कन्दनिषण्णाःश्रममपानयन् । अत्रान्तरे जगत् कुञ्जरकर्णशंखो दिगंगनामण्डनदर्पणः श्रीसुधांशुः समुद्ययौ । अथ प्रभाते दुर्योधनवाक्शल्यैरर्दितो द्रोणः क्रुधा दिव्यास्त्रैरनस्त्रज्ञानपि ददाह । पुनर्निर्मर्यादे समरे प्रवृत्ते द्रोणेन वध्यमानानां सैन्यानां तुमुलाक्रन्दो बभूव ! एवमालोक्य व्योमचारिणः किमयं रुद्रोऽकालकल्पान्ते लोकान् संहर्तुमुद्यत इति सशंकिरे । ततश्चेदिसोमकपाञ्चालमत्स्यकेकयसृंजया द्रोणसायकैः पीडामवाप्य न शर्म लेभिरे । अथ विराटद्रुपदौ शितशरैर्भारद्वाजं संच्छाद्य वार्द्धक्येऽपि सर्ववीराणां तूर्णं विस्मयमुत्पादयामासतुः ।

अथ द्रोणो विपुलविक्रमान् पार्षतसुतान् हत्वा भल्लाभ्यां विराटद्रुपदावपि वि-

व्याध । ततो मुहूर्तं द्रोणेन युध्यमानौ तौ विराटद्रुपदौ वीरगतिमलप्साताम् । अथ पवनात्मजो मत्स्यपाञ्चालसेनासु भग्नासु धृष्टद्युम्नमुखैः सह द्रोणानीकमभ्यधावत् । ततो वीराः कर्णसौबलहार्दिक्यदुश्शासनमुखा भीमपार्षतसैनेयार्जुनाद्यानयोधयन् । अथ कंसारिः पांचालचेदिमत्स्यानां रणे कदनं कुर्वाणं द्रोणं समीक्ष्य पाण्डुनन्दनं बभाषे । सखे ! दिव्यास्त्रज्वालावान् क्षत्रियानलोऽयं जामदग्न्यशिष्यः संमुखागतोऽस्ति । अतो महोपायं विना नः केन सोढुं पार्यते । यतः सर्वात्मना युद्ध्यमानोऽयं गुरुरद्यैव निष्पाण्डवं जगत् कर्तुमुद्यतइत्यहं जाने । एष पुत्रं निहतं श्रुत्वा ध्रुवं न योत्स्यते । तस्माद् युक्तिमुपाश्रित्य जयार्थं नीतिर्विधीयताम् । तच्छ्रुत्वाऽर्जुने कर्णौ पिधाय निम्नानने स्थिते युधिष्ठिरे च मूके भीमसेन एव यदुनाथाऽभिप्रायमवलंबमानो गदयाऽश्वत्थामाभिधं मदकुञ्जरं हत्वा द्रोणाऽग्रे पुत्रवधमुच्चैरश्रावयत । निशम्यैवं द्रोणस्तनयं दुर्जयं मत्वा भीमं च संकुचितं विलोक्य प्रत्ययं नागमत् । सोऽथ धृष्टद्युम्नजिघांसया पांचालान् प्रविश्य वीरयोधानां षडयुतानि सरथसैन्यानि जघान । ततस्तत्र द्वितीयो रुद्रइव क्रुद्धो द्रोणो ब्रह्मास्त्रेण चेदिपाञ्चालमत्स्यानां प्रयुतान्यदहत् । अथाऽसौ चतुर्वर्षशतोऽपि प्रभद्रकसोमकान् निघ्नन् दर्पाद् युवेव विचचार । एवं विलोक्य सर्वे मुनयस्तं क्रूरतरकारिणं समभ्येत्य तस्माद् घोरसंहारवैशसान् निवारयामासुः । ततो मुनिसंघे गते द्रोणो भीमवचः स्मृत्वा शंकितधिया सत्यविक्रमं युधिष्ठिरमपृच्छत् । अथ गोविन्दप्रार्थितो राजा लोकसंहारशान्तयेऽश्वत्थामा हतो नरो वा कुञ्जरोवेत्यभाषत । अत्रान्तरे ये हया युधिष्ठिरं वहन्तो भूमिं न पस्पर्शुस्तेऽसत्यभाषणात् तूर्णं नीचगामिनो बभूवुः । ततः सविषनाराचैर्मर्मविद्ध इव द्रोणः स्ववधं निश्चित्य चित्रितइवाऽतिष्ठत् । अत्रान्तरे कटुवादी धृष्टद्युम्नो द्रुतमवदत् । अहो नु ! ब्राह्मणो भूत्वाऽपि पिशिताशीव निहतेऽपि पुत्रे कलुषं कर्म करोषि । निशम्यैवं द्रोणः क्रुधा सह चापं त्यक्त्वा मौनमवलम्ब्य चान्तरं ज्योतिः स्वरूपं दध्यौ । ततस्तस्य षट्कोशसंघस्य संपुटत्रयपातनाद् ब्रह्मरंध्रविनिष्क्रान्तं ज्योतिः सहसा व्योम्नि समाविवेश । अत्रान्तरे क्रोधान्धो धृष्टद्युम्नः पाण्डवैर्निवार्यमाणोऽपि केशेष्वाकृष्य ध्यानासक्तस्य त्यक्तशस्त्रस्य च गुरोः शिरः खड्गेन चकर्त । ततस्तां दुर्घटनां समीक्ष्य सर्वे नृपा धृष्टद्युम्नं मुहुर्मुहुर्निनिन्दुः । एवं श्रीद्रोणाचार्ये हते कौरवपक्षीया महारथा भयमवाप्य समान्ताद् दुद्रुवुः । ततो द्रौणिः कुरुबलं भग्नं दृष्ट्वा शंकया साश्रुनेत्रं सुयोधनं किमेतदिति पप्रच्छ । अथास्मिन्नधोमुखे दुःखाद् वक्तुमनीश्वरे दुर्योधने तत् प्रेरितो गौतमोऽस्मै पितृवधं निवेदया-

मास । तच्छ्रुत्वा द्रौणिः पाण्डवनीतिं क्रूरकर्मयुतां विनिन्दन् पाञ्चालाय चुक्रोध । ततोऽसौ पाणिम् पाणिनाऽऽपीड्य साश्रुलोचनोऽब्रवीत् । अहो ! ममापि जनकोऽवाप्तवान् केशाकर्षणम् । अहह ! वकव्रतोऽयं कौन्तेयो मम पितरं हत्वा कथं मयि जीवति मेदिनीं प्राप्स्यति ? किं बहुनाऽद्यैव मत्कोपनिर्दग्धे सराजके पाण्डुपुत्रे वीराः क्षत्रकुलच्छिदो भार्गवस्य रामस्य च युद्धं स्मरिष्यन्ति । मातुल ! एषोऽहं सांप्रतं महाक्रोधाग्नेरुपहारतां धृष्टद्युम्नं पार्षतपशुं कृत्वा महीमिमामकृष्णपार्थां सहसैव कर्तुं समुद्यतोऽस्मि । पुरा पिता मह्यं कृपया नारायणास्त्रं प्रादात् । मयाऽद्य तेन संहृताँल्लोकान्खेचराः पश्यन्त्वित्युक्त्वा नियतः शुचिर्दीप्तं तदस्त्रं संदधे । येनाश्वत्थदलालोला जगत्-त्रयी विचचाल । ततः श्वेताश्वः स्वसैन्यं व्यथितमालोक्य निःश्वसन् धर्मतनयं जगाद । राजन् ! अत्र विभवलुब्धेन शिष्येण गुरुर्व्याजान्निहत इति प्रलापमुखरेऽर्जुने क्रोधात् पवनतनयः प्रत्युवाच । पार्थ ! क्षत्रियोभूत्वाऽपि त्वं मुनिवद् वक्तुं नार्हसि । एतादृशे घोरे रणे को न्यायाऽन्यायौ विचारयति । अस्मिन् गदापाणौ मयि स्थिते कृष्णार्जुनयोश्च समक्षे द्रौणिः किन्नामाभिनन्द्यत इति भीमेनोक्ते पार्षतः पार्थं प्रोवाच । मयाऽद्याविकर्मस्थो ब्रह्मबन्धुर्हतः । संप्रति सर्वोपायैर्विश्वकंटकस्तत्पुत्रोऽपि हन्तव्यः । एवमेव भवतापि तु भीष्मप्राग्ज्योतिषेश्वरौ निहतौ । किमनेन विवादेन ? यतो वीरवृत्तयो गहना भवन्ति । एव माकर्ण्याऽपि पार्थस्तं नाभ्यनन्दत् । अत्रान्तरे कोपसन्तप्तः सात्यकिर्धृष्टद्युम्नं बभाषे । वत ! वयं सर्वे पापा ये प्रलपंतं हन्तव्यं पुरस्थितं गुरुघ्नं च त्वां स्वस्तिवत् प्रतिभाषन्ते । निशम्यैवं द्रुपदात्मजो जगाद । रे परदोषज्ञ ! निर्दोष इव कथं वल्गसि ? पतिताचार ! किरीटिना कृत्तबाहुर्मृतप्रायो भूरिश्रवाः केनाऽन्येन निपातितः ? त्वया भूयो नैतद् वाच्य मन्यथा शितैर्बाणैस्त्वां धराशायिनं करोमीति संरम्भान् मिथो हन्तुमुद्यतौ तौ कृष्ण-गिरा सहानुजैर्भीमसेनो निवारयामास । अहह ! लोके कर्मणां गति र्विचित्रा । ततो नारायणास्त्रनिहता पाण्डवचमूः स्वल्यावशेषाऽभूत् । अथ नारायणास्त्रेण घोरे सुभटसंहारे जाते युधिष्ठिरो भयमवाप्य वीक्षमाणः पार्षतमुखान् किरीटिनं च प्रोवाच । पश्यत पश्यत । महद्भयमुपस्थितं मत्वेतः पलायन्ताम् । यतो जिष्णुस्तु गुरुनिधनादुपरतः कोपमवाप्य युद्धान्माध्यस्थ्यभावमवलंबते । येनाऽभिमन्युः सत्यजित्प्रमुखाश्च कया रीत्या हताः । यश्च दुर्योधनाय दुर्भेद्यं कवचं प्रादात् । स गुरुः किमस्य सुहृत् ? तदधुना युद्धाद्विरम्य-ताम् । धीमते पार्थायापि स्वस्त्यस्तु । एषोऽहमपि वह्निं प्रवेक्ष्यामि । यतः कालानलं द्रौणिं कः सहते ? इति धर्मराजेनोक्ते केशवो भुजावुत्क्षिप्य द्रौण्यस्त्रतेजसा ज्वलितभूपालान्

मुच्चैरुवाच । भो भो नृपाः ! शस्त्राणि परित्यज्य रथेभ्यः क्षितिं व्रजत । यतो निःशस्त्रा धरातलस्था भीरवश्चानेनास्त्रेण न हन्यन्ते । तच्छ्रुत्वा भीमो भूपालानाबभाषे । मा भैष्ट यूयम् । एषोऽहं गदामादाय द्रौणिं हन्तुमभ्युद्यतोऽस्मि । एवमालोक्य पावनिं द्रौणिर्विहसन् मूढोऽयमित्युक्त्वा शरजालैस्तमपूरयत् । अत्रान्तरे नारायणास्त्रेण समन्ततो दह्यमाना भूमिपा शस्त्राण्युत्सृज्य वाहनेभ्यश्चावातरन् । ततो रथस्थितं युध्यमानं च भीममस्त्रज्वालावलीचक्रं सहसा समापतत् । ततस्तस्मिन् समाक्रान्तेऽस्त्रे दह्यमानं भीमं विलोक्यार्जुनस्तद्रक्षार्थं वारुणास्त्रमवासृजत् । ततो निजशस्त्रगतिमव रुद्धां विलोक्य कृष्णार्जुनौ रथादवरुह्य महास्त्रसंकटपतितं वृकोदरं द्राग् भुजाभ्यामाचकर्षतुः । ततस्तौ भीमं सुरक्षितं दृष्ट्वा कृष्णपार्थौ हृष्टावभूताम् । एवमालोक्य पाण्डवाऽहितैषी दुर्योधनः पुनरप्यस्त्रं प्रयुज्यतामित्यादिदेश । तच्छ्रुत्वा द्रौणि दिव्यास्त्रं द्विःप्रयोज्यं न भवतीति राजानं प्रत्यवादीत् । ततो राजादेशात् पांचालमत्स्यकेकयसंक्षयं कुर्वाणो द्रौणिः सात्यकिपार्षतौ जित्वा सुदर्शनं पौरवं नृपं जघान । अथ पाण्डुसैन्येषु भग्नेषु क्रुद्धधनंजयः पश्चादभिद्रुतं द्रौणिं बाणवर्षैरवारयत् । ततो द्रौणिर्लोकक्षयाय ज्वालावलयिताम्बरं घोरमाग्नेयास्त्रं प्रादुश्चक्रे । ततस्तेनास्त्रतेजसा व्याप्ता नृपाः काञ्चनसंनाहैः समावृता इव धरण्यां पेतुः । ततो धनंजयोऽस्त्रेण वह्निव्याप्तामक्षौहिणीं दृष्ट्वा तत् प्रशान्तयेऽत्युग्रं ब्रह्मास्त्रं प्रादुश्चकार । ततस्तस्मिन् तिरोहिते द्रौणिः केशवार्जुनौ विमुक्तौ दृष्ट्वा मुहुर्मुहुरस्त्राणि निनिन्द । अत्रान्तरेऽपारवेदामृतसिन्धुसेतुः सरस्वतीमानसराजहंसः कृष्णोऽप्यकृष्णो व्यासः समाजगाम । एवमालोक्य त्यक्तरथो द्रौणिस्तं प्रणम्य पप्रच्छ । भगवन् ! दिव्यान्यस्त्राणि सकृष्णे पार्थे कथमफलानि जातानीति तत् कारणं वद । एतदाकर्ण्य मुनिरुवाच । विप्रवीर ! पुरा एतौ नरनारायणावृषी षष्टिंवर्षसहस्राणि तपः कृत्वा पिनाकिनं तोषयित्वा नारायणस्तत्तुल्यतां लेभे । अश्वत्थामन् ! स एष कृष्णः स्वयं लिंगार्चनव्रतो दुर्जयः । द्रौणे ! त्वमपि रुद्रांशस्तस्माद्विक्रियां मा गमः । निशम्यैवं व्यासवचोऽश्वत्थामा मन्युं परित्यज्य धिया रुद्रं च नमस्कृत्य कृष्णार्जुनौ देवावमन्यत । ततः कुरुपाण्डवैः सैन्यावहारे विहिते समरान्निर्वतमानः पार्थः पथि व्यासं विलोकयामास । तं नमस्कृत्य सोऽपृच्छत् । भगवन् ! मया समरे शूलहस्तः पुरुषो दृष्टः । तच्छूलनिःसृतैरसंख्यशूलमण्डलै श्च दह्यमाना कुरुसेनावलोकिता मया । निशम्यैवं पार्थवचो व्यासोऽब्रवीत् । वत्स ! स त्रिपुरारिर्जगत्प्रलयक्षमोरुद्रोऽस्ति । यं वरदं देवं नमस्कृत्य दिवि देवता राजन्ते । यश्च देवराजस्य भुजमस्तम्भयत् । क्रुद्धेन येन रुद्रेण दक्षप्रजापतियज्ञो विनाशितः । तं महादेवं स्तुहि ।

बालचन्द्रावतंसं तं गजासुरविघातकम् ।
आशुतोषं भज शिवं विजयाभीष्टसिद्धये ॥ १ ॥

इत्याग्रहात् समादिष्टोऽर्जुनो मुनिवरे प्रयाते श्रद्धया पिनाकपाणिं तुष्टाव । प्रभो ! त्वं ब्रह्मस्वरूपेण जगत्सृजसि विष्णुरूपेण पालयसि शिवरूपं धृत्वा च संहरसि । तस्माद्भूयो भूयोऽहं त्वान्नमामि । भगवन् ! त्रिलोक्यां त्वदिच्छानुग्रहं विना न कस्यचिद् बहुल्यं वाऽपि वांछितं सिद्धयतीति मत्त्वा शिरसाऽहं त्वां प्रणमामि । देव ! देहार्धधृतकायोऽपि त्वं तपस्वी स्थाणुर्भूत्वाप्यर्थिकल्पद्रुमो निर्गुणोऽपि च जगद्वन्द्योऽस्यतो विचित्ररूपाया तुभ्यन्नमोनमः । नीलकण्ठ ! त्वं जगद्रक्षायै विषमपि पीतवानतः कोऽपि भवादृशे देवो नाऽवलोक्यत इति विचिन्त्य भवच्चरणारविन्द चंचरीकत्वमभिलषामि । अमरनाथ ! देह्यमरपदम् । आम्नायवेद्य ! वितराप्तत्वम् । इच्छानाथ ! प्रयच्छेष्टसिद्धम् । ईशान ! ईतिमपनय । उमेश ! उपनयोत्तमं ज्ञानम् । ऊर्द्ध्वरेतः ! मामप्यूर्ध्वरेतसं कुरु । ऋग्वेदप्रिय ! ऋणत्रयमपाकुरु । एकलिङ्ग ! वितरैकाधिपत्यम् । ऐन्द्रजालिक ! ऐहिकसुखानि देहि । ओङ्कारनाथ ! ओजस्विनं मां कुरु । औदार्यसिन्धो ! औदरिकत्वमपहर । कपालिन् ! कापट्यात्पृथक् कुरु । क्षमार्णव ! क्षमस्वापराधान् । खण्डपरशो ! खण्डय हृदयाऽन्धकारम् । गुरो ! गिराशक्तिमुपयच्छ । घण्टाकर्णपते ! घटय सुघटनाम् । चन्द्रचूड ! चिन्तां परिहर । छंदोगमणे ! प्रयच्छ छंदोज्ञानम् । जटाधर ! जराजन्मजालं जारय ! ज्ञाननिधे ! वितर ज्ञानम् । झांकारिक ! श्रावय धर्मझझरम् । टङ्कक ! देहि टंककानिधिम् । ठक्कुर ! प्रयच्छ ठाकुर्यम् । डमरुरसिक ! उपदिश डामरतंत्रम् । ढुंढिपितः ! ढुंढित्वा वितर सुखसंपदम् । तत्वज्ञ ! तारय भवसागरात् । थकार ! थूर्व बाह्यऽभ्यन्तरांश्च रिपून् । दक्षिणामूर्ते ! देहि दाक्षिण्यम् । धूर्जटे ! धर्मधुरीणत्वं संप्रयच्छ । नटराज ! मा नर्तय संसारे । प्रमथनाथ ! प्रमोदं प्रयच्छ । फणिभूषण ! फणिपीडां निवारय । बहुरूप ! बन्धुवियोगमपहर । भर्ग ! भर भूलोकम् । महेश्वर ! मदमानमोह मात्सर्याणि मार्जय । यज्ञेश ! यज्ञसमृद्धिं यच्छ । रुद्र ! रोगानपनय । ललितापते ! लोभं परिहर । वामदेव ! व्याधीन्नाशय । शिव ! शान्तिन्देहि । षट्प्रज्ञ ! षड्वर्गविजयं वितर । सदाशिव ! सदानन्दं कुरु । हर ! हर कष्टसमुदायमिति प्रार्थयित्वार्जुनोऽतिसंतुष्टो बभूव । ततो दिनावसाने भूपाः स्व स्व शिविराणि प्रविश्य प्रवरवीरकथाः परस्परं श्रावयामासुः ।

इति श्रीमद्गद्यभारते द्रोणपर्व समाप्तम् ॥

ओंन्नमः शिवाय ।

# अथ गद्यभारते कर्णपर्व प्रारभ्यते ।

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥

एवं कुरुक्षेत्रे द्रोणे वीरगतिं प्राप्ते संजयोऽभ्येत्य कर्णपार्थयोर्युद्धं राज्ञे पुनर्न्यवेदयत् । अथ दुर्योधनः कर्णं द्रौणिगिरा सेनासु नायकं चक्रे । ततोऽसौ मणिमयकलशैरभिषिक्तः कुरुभूपतेर्मनोरथसुधावर्षी बभूव । अथापरेऽह्नि कौरवाणां मकरव्यूहः पाण्डवानां चार्धचन्द्रो व्यूहोऽभवत् । ततः शस्त्रास्त्रसंघर्षकीर्णवह्निकणाकुले समरे प्रवृत्ते तुमुलो निर्घोषोऽभवत् । अथ भीमः कुञ्जरमारुह्य गजरथकुलूतनृपतिं यदा जघान तदा कर्णान्ताकृष्टैः कर्णसायकैर्निर्भिन्नकुञ्जराश्छिन्नपक्षा अचला इव पेतुः । ततः पार्थसात्यकिपांचालद्रौपदेयशिखण्डिनः कृपद्रौणिमुखैर्घोरमाहवं चक्रुः । ततः पार्थः संशप्तकान् हत्वा सदण्डं दण्डाधारं शरैर्दण्डधारपुरं निनाय । अथ पाण्ड्यः कुरुचमूं दारयन् नन्वन्येषामपि भूभुजां भल्लैः शिरांसि चिच्छेद । ततोऽसौ दक्षिणापथनाथः कार्णाटिकसैन्यं नीत्वा लाटीयशस्त्रैः कुरुचमूमपीडयद् । ततः कृपद्रौणिकर्णसौबलैर्निवार्यमाणाऽपि कुरुराजवरूथिनी दुद्राव । अथ द्रौणिर्जवाद् विशिखाऽशनिवर्षिणं तमुपसृत्य जम्भारिः शम्बरमिव योधयां बभूव । ततस्तयो द्वन्द्वयुद्धे द्रौणिः क्रोधाद् भल्लेन तस्य लीलावतीलोललोचनभ्रमराम्बुजं शिरो जहार । एवं वीरवरे पाण्ड्यनरेश्वरे हते शशिहीना शर्वरीव पाण्डुसेना न शुशुभे । ततो नकुलो भूपानां रथेषु गजेषु मिश्रीभूतेषु गाढपांसुना लोकेषु नष्टालोकेषु च सहानीकं क्रूरयोधिनं म्लेच्छराजं जघान । तस्मिन् विमर्दे कर्णः कुन्तीवचः स्मृत्वा वधगोचरमपि नकुलं न जघान । तस्मिन्नवसरे पांचालसृंजयास्तु कर्णमुखैः कौरवाश्च पार्थादिभिः परित्राणं न लेभिरे । तदा तत्र क्वचिद् वीरशिरोभिः क्वचिद्धयैः क्वचिद् गजैः क्वचिच्च रथध्वजादिभिः संकीर्णा रणस्थली प्रेतपुरीव भीमाऽदृश्यत । अथ सैन्येषु हतशेषेषु श्रान्ताः कुरुपाण्डवा दिनापायेऽवहारं चक्रुः । अथ प्रभाते बलद्वये युद्धार्थं संनद्धे कर्णः पाण्डुसेनां व्यलोकयन् दुर्योधनं जगाद । सखेऽद्य तु त्वत्प्रसादमानविभवानामानृण्यप्राप्तये शत्रुसारं सव्यसाचिनं हत्वा चिरसंभृतं ते संकल्पं

पूरयिष्यामि । लोके सर्वात्मना सतां स्वगुणकीर्तनं निन्द्यं परन्तु कर्तव्यकालेषु मूकताऽपि न प्रशस्यते । अहं पार्थाद् विद्यया बलविक्रमवयोभिश्च सर्वथाऽधिकः । परन्तु कृष्णोऽस्य सारथिरनघ इत्येतदाधिक्यं मां तुदति । अयं भूपमुकुटमणिः शल्यः कृष्णादप्यधिकः स यदि मम सारथित्वमवलंबेत तदा तु पार्थं जेतुमहमुत्सहे इति वैकर्तनेनोक्ते सुयोधनो हर्षमवाप्य विनयान्मद्रराजं स्वाभिप्रायं प्रोवाच। तच्छ्रुत्वा क्रुद्धो मद्रराजो राधेयं वीक्ष्य दुर्योधनं प्राह । राजन् ! तवेयं सरलता केवलमस्माकमपमानाय। यदहं त्वया राधेयसारथ्ये नियोजितः ? किं संगरेऽस्मिन्नहमेकाकी पाण्डवान् हन्तुं न शक्तः ? यत् त्वं मां नृपमपि सूतपुत्रसारथिं कर्तुमीहसे इत्युक्त्वा सहसा सानुगे शल्ये हन्तुमुद्यते कुरुपतिस्तं प्रसाद्य प्रोवाच । मद्रराज ! अस्थाने संरंभं कर्तुं नार्हसि । किंबहुना । त्वं गोविन्दादप्यधिकोऽस्यतोऽस्माभिः संप्रार्थ्यसे । तत्रार्जुनात् कृष्णोऽधिकस्तथाऽपि परैः सारथिर्विहितः । अत्रापि कर्णादधिकोऽस्यतः सारथ्ये हठं मा कृथाः । पुरा राजतायससौवर्णस्वच्छन्दपुरवासिभिर्दैत्यैस्त्रैलोक्योपप्लवे जाते शक्रपुरोगमा देवाः शंकरं शरणं ययुः । अथ विश्वेशस्त्रिदशप्रार्थनामंगीकृत्य सर्वदेवमयरथमारुह्य विष्णुंच सायकं कृत्वा देवान् प्रोवाच। अहमस्मि सन्नद्धो युद्धार्थं परं तत्र मम सारथिः कल्प्यताम्। निशम्यैवं महादेववचनं शक्रमुखा देवाः सुचिरं धिया विचार्य विश्वकर्तारं ब्रह्माणं कल्पयामासुः । ततो हरः प्रणवप्रतोदेन स्यन्दने गृहीते पुरे चैकीभूतान् दैत्यान् विशिखाग्निना ददाह । राजन् ! पुरा यथा रुद्रस्य धाता स्वयं सूतोऽभवत् । तथा त्वमपि कर्णस्य सारथ्यमंगीकृत्य कार्यं संपादयितुमर्हसि । कार्यार्थी मनस्वी सुखं दुःखं च न गणयति । मद्रराज ! सन्तो गुणाभिजनविक्रमैश्वर्याणां फलं मित्रप्रणयपूरणं मन्यन्त इति दुर्योधनेनोक्ते शल्यः स्वच्छन्दवादी सूतोऽहं भविष्यामीत्यभाषत । अथ शल्यस्तप्तकांचनसंनाहे कर्णरथे स्वकल्पितश्वेताश्वान् योजयित्वा तत्रारुह्य च दिवि सूर्यस्य गरुडाग्रज इव सुशिक्षितां रश्मिमालां हेलया जग्राह । ततः सहानुगः कुरुराजो युयुत्सुं शल्यसारथिं कर्णमालोक्य जयं हस्तगतमेव मेने । अथ कर्णः शंखदुन्दुभिनिःस्वनैर्नदत्सु कुरुसैन्येषु मौर्वीमास्फालयन् मद्रराजमब्रवीत् । शक्रोऽप्यद्य मया निहतमर्जुनं दृष्ट्वा दिव्यास्त्राणि व्यर्थानि मंस्यते । तथा युधिष्ठिरोऽपि मद्बाणदलितं पार्थं विलोक्य भीष्मद्रोणवधायासवैफल्यादवश्यं परितापमेष्यतीतिब्रुवाणं राधेयं शल्यः प्रत्यवदत् । सूतपुत्र ! शिशुवन् मिथ्याप्रलापं मा कृथाः । पुरा गंधर्वसमरे येन त्रैलोक्यवीरेण धीमति त्वयि विद्रुते कौरवाः परिरक्षिताः । तथा तस्मिन् गोग्रहविग्रहे युष्मद्विधानां मानिनां सहस्रांशुकाली

च हृता। किं बहुना खाण्डवे येन सहस्राक्षो निर्जितः। तं पार्थं जेतुं कथं समुत्सहसे ? कर्ण ! कर्णवानसि नवेति शल्येन सहसा शल्येनेवार्दितः कर्णः कोपं संस्तभ्य न चिराद् द्रक्ष्यसीत्यवदत्। ततो महारथः कर्णो व्यूहेष्वनीकेषु सैनिकान् पप्रच्छ। भो वीराः ! क्वाऽसौ जयद्रथारातिः ? ममैते शरास्तं विना ताम्यन्त्येव। भवत्सु यः कोऽपि तमर्जुनं दर्शयेत्। तस्मै विचित्राभरणानि वासांसि च ददामि। किमन्यद्। गोरथमातंगस्वर्णसुन्दरीद्रविणादीनि यावदिच्छति। तत् सर्वं दास्यामीति प्रतिजाने। निशम्यैवं सोत्प्रासं शल्योऽब्रवीत्। राधेय ! त्वद्विचेष्टितैर्हासो दुःखायैव जायेत। वृद्धो निष्पुत्रो मुमुक्षुश्चिरसंभृतं द्रविणमविचार्यैव यथा दातुमिच्छति। तथैव त्वमपि मोहात् सर्वस्वं त्यक्तुमिच्छसि। अधिरथ ! माऽऽकुलो भव। बाणनखरैः कातरकुरंग इव सत्वरं स्वयं पार्थं समायातं द्रष्टाऽसीति वाक्यमाकर्ण्य कुपितः कर्णो जगाद। शल्य ! निर्गुणस्त्वं न मां न च धनंजयं सम्यग् जानासि। किमधुना विवादेन। अहमपि पिनाकिनः प्रतिमल्लमर्जुनं जाने। सोऽपि च मां तत्वेन वेत्ति। त्वं तु केवलं मिथ्या प्रगल्भसे। अहो ! मित्रमुखः शत्रुस्त्वं केनाऽत्र प्रेषितोऽसि ? अन्यथा कुदेशजस्य तव कथमीदृशं कौटिल्यम् ? प्रायेण मद्रकाः सत्यशीलविवर्जिता भवन्तीति सत्यम्। जगति सर्ववेदविदो जना मानं प्रचक्षते। किन्तु मद्रिकायास्ता निर्लज्जा अनार्या लोभमोहमदाकुलाश्च ते स्वसारो मातरश्च सर्वगामिन्यः श्रूयंते। तच्छ्रुत्वा मद्रराजः संरम्भात् प्रोवाच। मूढ ! बहुशो हितमुक्तमपि न बुध्यसे ? यतो हस्तस्थकंकणार्थं क्वादर्शोऽपेक्ष्यते ? पुरा समुद्रतटे कश्चिन्महाधनो बह्वपत्यो वैश्यो वसति स्म। स तत्रत्य राज्ञा रक्षितो निरुपद्रवो सुखेनोवास। ततस्तत्पुत्राणां सततोच्छिष्टभोजनः कश्चित् काकस्तत्कृपापात्रतां जगाम। अथैकदा तत्र मानसगामिनो हंसाः समायाताः। तान् दृष्ट्वा जातस्पर्धः स वायसोऽब्रवीत्। श्वेतांगाः ! यूयं कृष्णांगस्य मे जवे न तुल्याः। यतोऽहं डिडीनोड्डीनभेदतः पूर्णं पातशतं जाने। युष्माकं च तरस्विता तुल्यपातान्मे ज्ञायते। एवमाकर्ण्य काकवाक्यमन्तर्विहसन्तो हंसा आहूता अपि न किंचिदूचिरे। ततस्तेष्वेकतमो हंसो जलधौ व्रजाव इति संविदा काकेन सार्धं शरवाभिपपात। ततस्तेनसार्धं गच्छन् वायसः क्रोशार्धमात्रेणैव ध्वस्तपक्षोऽतिविह्वलश्चाऽभवत्। अथ तं विनाशोन्मुखं ज्ञात्वा दयार्द्रचेता हंसस्तं गृहीत्वा तीरे स्थापयामास। ततोऽसौ रक्तष्ठीवी चिरात् संज्ञामवाप्य हंसं पक्षिराजममन्यत। अतः स्पर्द्धा न हितावहा मतिमद्भिः प्रोक्ता।

राधेय ! एवं त्वमपि कौरवपरिवारितः समरेऽर्जुनमवाप्य हीनदर्पो भविष्यसि। मद्र-

राजेन कथितमेतन्मर्मदारणं निशम्य पृथुकोपोऽपि वैकर्तनो रोषं निरुध्य वाक्यमवादीत् । शल्य ! भवद्विधस्य वचसा मम भयं न जायते । किं बहुना । त्वमचिरात् समरे विनिपातितं पार्थं पश्य । पुरा मया विप्रहोमधेनुवत्सस्तरुखण्डेन प्रच्छन्नो बाणेन दारितः । तच्छापान्मे रथचक्रं पर्यन्तं साधयिष्यतीत्येतच्छिद्रं मां बाधते । अन्यथाऽहं सर्वथैव दुर्जयः । त्वं तु मयैव हितार्थं प्रार्थितो द्विजिह्वतां गतोऽसि । अहह ! तीर्थाचारविहीनानां मद्रकाणामधिपोऽस्यतः किमुच्यते ? येऽभक्ष्यं भुञ्जतेऽपातव्यं च पिबन्ति नित्य मगम्यासु च रमन्ते ते तव मद्रा बान्धवाः सन्ति । किमन्यत् । यत्र योषाः सर्वसाधारणा द्विजातयः सर्वभक्ष्याः सर्वपातकसंपृक्ताश्च भवन्ति । तत्रत्यो भवान् नृपोऽस्तीति कर्णेन गदिते मद्रराजोऽप्युवाच । कर्ण ! यत्र त्वं राजासि । तत्रत्यमानवैः सदा पुत्रदाराश्च विक्रीयन्ते । अतः सर्षपमात्रं परच्छिद्रं बिल्वतुल्यं मा गणय । ततो मद्रराजचोदितास्ते तुरंगमाः क्षोणीं दारयन्त इव जवादुत्पेतुः । अत्रान्तरे शुभ्राश्वोऽर्जुनः कृष्णसारथिः शत्रुनिवर्हणार्थमग्रे समाययौ । ततो वीरप्राणहारिणि समरे प्रवृत्ते तूर्यनिःस्वनैश्च चापरवे समाच्छादिते शल्यो धनंजयरणोत्सुकं राधेयं प्रोवाच । संप्रति कुरुवाहिनीं भिन्दानं गाण्डीवधन्वानं पश्य । पार्थशरश्रेणिशतार्दिताः संशप्तका एते हतद्विपघटाकूटकुटीषु निभृतं स्थिताः । अपरञ्च धनंजयशरोत्कृत्तकण्ठानां नृपाणां पतिता मौक्तिकावली राजलक्ष्म्याश्रुमाला इव भातीति त्वमवगच्छ । निशम्यैवं मद्राधिपवचनं मद्बाणगोचरं यातः पार्थः क्व यास्यतीति हर्षात् कर्णोऽवदत् । ततो वैकर्तनशरैर्भुवनोदरे पूरिते वातैर्महद्वनमिव पाण्डवानीकं चकंपे । अथाऽसौ धृष्टद्युम्नमुखान् वीरान् विरथान् कृत्वा शूराणां दशायुतानि क्षणादवधीत् । एवं चेदिमागधपांचालसैन्ये भग्ने महारथैरनुगतो युधिष्ठिरः स्वयं राधेयमभिद्रुत्यावदत् । राजबल्लभ ! नेदं वाग्युद्धं यत्र त्वं प्रगल्भसे । किन्त्वेषा युद्धभूमिरित्यभिधाय शरैः कर्णं पूरयामास । ततः कर्णो भल्लैर्नृपचक्ररक्षकौ हत्वा ध्वजं चापं च चकर्त । एवमालोक्य युधिष्ठिरः सूतपुत्राय निशिताग्रां शक्तिं प्राहिणोत् । अथ कर्णो घण्टाक्रन्दनीं तां शक्तिं भित्त्वा शरैर्नृपतेर्जातरूपमयं वर्म चकर्त । ततोऽसौ छिन्नवर्माणमाशुगैः संपूर्याऽस्य दन्तवर्णान् कृष्णबालांश्च तुरंगमानपि जघान । अथ वृकोदरो धर्मतनयं विद्रुतं दृष्ट्वा कोपं कृत्वा च वज्रदारुणैः शरैः कर्णं पराङ्मुखं चक्रे । ततो भीमो भ्रातुराज्ञया दुर्योधनानुजान् नन्दोपनन्ददुर्धर्षधनुर्ग्राहमहाभुजजरासंधश्रुतर्वाणदुर्दिनानिषंगिपाशहस्तकवचिक्रोधान् हत्वा पृतनां प्रविश्य च नागानीकं पोथयामास । ततस्तस्मिन् सुभटसंक्षये सात्यकिपांचालमाद्रीसुतयुधिष्ठिराः कर्णमुख्यान् योधयामासुः । एवं वृषसेनमुखैर्वीरैर्बलार्णवे भिद्यमाने समाघट्टिताम्बरश्चण्डगाण्डीवध-

ध्वनिरुद्भूत् । अत्रान्तरे संशप्तकान् हत्वा धनंजये प्रत्यावृत्ते कुरुवाहिनी सहसाऽऽवर्तनार्तिंतब बभूव । ततःपार्थास्त्रैर्नृपमण्डले सुशर्मप्रमुखे भग्ने कर्णः पाण्डवसैन्येष्वपि काललीलायितं व्यधात् । तास्मिन्नवसरे गजेन्द्राणामयुतानि हत्वा नृपाणां तावत्येव तुरंगमाणां वेगवतां रथानां च क्षयं चक्रे । ततः कर्णो जयशंकुरुद्रहरिदेवापिव्याघ्रकेतुसिंहसेनशलभचित्रदण्डकादीन् नृपान् हत्वा पांचालकदनमप्यकरोत् । अथ कर्णेन सहस्रधा विदीर्णे पाण्डवसैन्ये घोरो व्यतिकरो बभूव । ततः कर्णकिरीटिनोर्द्रौणिपार्षतयोः कृपशैनेययोः कृतवर्मशिखण्डिनोश्च युद्धं प्रावर्तत । तत्र कुपितभीमेन प्रविदारिते सैन्ये विध्वस्तकवचायुधे विप्रकीर्णे च बभूवतुः । अथ फल्गुणो दिव्यास्त्रवर्षिणं द्रौणिं दिव्यास्त्रेणैव विजित्य कर्णेन वध्यमानान् महारथान् ददर्श । ततः कर्णविक्रमाद् विस्मितो मधुरिपुः पार्थमब्रवीत् । कौन्तेय ! कर्णास्त्रवह्निदग्धां वरूथिनीं पश्य । संप्रत्यसौ सारथ्ये स्थितं मां दृष्ट्वा कटाक्षेण निरीक्षते । नूनमयं कालकटाक्षेण लक्षितो भविष्यति । अस्य शरजालेन दिशो नीरंध्रेणावृता इव पश्येत्युक्त्वा केशवस्तूर्णं रथेन शक्रतनयं भीमरथान्तिकं निनाय । ततो धनंजयो भीमगिरा कर्णसायकनिर्भिन्नं शिविरं प्रयातं च धर्मराजं समाकर्ण्य तलाहतः केसरीव भृशसंतप्तः कृष्णेन सह भ्रातरं द्रष्टुं प्रययौ । ततस्तौ कर्णशरांकितं शयानं च धर्मतनयं दृष्ट्वा तच्चरणावभिवाद्य क्षणमाकुलावतिष्ठताम् । अथ राजा कर्णं हत्वा तं समागतं विज्ञाय जयहर्षान् निर्व्यथः समुत्थायोवाच । पार्थ ! येन शस्त्रास्त्रप्रयोगेण नः सेनाः प्रायो निःशेषिताः । स कर्णः समरे दिष्ट्या त्वयाऽद्य निपातितः ? स विद्विषां हन्ता धान्विनां धौरेयो रामशिष्यश्च कर्णस्त्वया कथं हत इति ब्रूहीति नृपतिना पृष्टोऽर्जुनो बभाषे । राजन् ! रुद्रतेजसा द्रौणिना संशप्तकैश्च सुचिरं युध्यमानस्य मे वैकर्तननिपातने विघ्नोऽभवत् । भीमसेनमुखात् तव समाचारं समाकर्ण्य तं महाभुजं प्रत्यनीकेऽवस्थाप्य प्रहारविक्षतं त्वां द्रष्टुमहमायातः । संप्रत्येषोऽहं तवाज्ञामनुसृत्य कुरुसेनापतिं कर्णं कर्णायतशरैः कथाशेषं करोमि । निशम्यैवं मोघसंकल्पदुःखितो युधिष्ठिरः प्रोवाच । भीमसेने विपुलं भारं संन्यस्य कर्णपराक्रमाद् भीतोऽत्र समायातोऽसि ? नूनमद्य कुंती त्वयां कलंकिता । यस्यास्त्वं मिथ्या क्षत्रियव्यंजनो जातः । यथा तृणमयो बाणस्तथा त्वमपि पुत्रसंख्यापूरकोऽसि । त्वयि त्रयोदशसमा ये संकल्पा विहिता स्तेऽधमे महोपकारा इव वैफल्यं प्रयाताः । कर्णाद्धनंजयो भीत इति को नाम जानीते ? एतद् गाण्डीवं कस्मैचिच्छौर्यशालिने प्रयच्छ । समरे योऽस्माकं कर्णसंत्रासमपनेष्यति । एतदाकर्ण्य मर्माहत इव पार्थः कोपं कृत्वा खड्गे साश्रुलवा दृशो ददौ । ततस्तं घोरसंकटे

पतितं दृष्ट्वा सर्वज्ञो गोबिन्दोऽब्रवीत् । पार्थ ! ते हृद्गतं भावं जाने । येन त्वं मुहुर्दोलायसे । अन्यस्मै गाण्डीवं वितर । य एवं त्वां ब्रूयात् । स ते ध्रुवं बध्य इति तव प्रतिज्ञा विश्रुता । तदर्थमग्रजं वा स्वात्मानं निहन्तुं कोपान्धो भूत्वा खड्गं निरीक्षसे । सखे ! सत्यमात्रदृढव्रतस्त्वं धर्माधर्मौ न जानीषे । कर्मभेदेन क्वचिदसत्यं धर्मतां क्वचिच्च सत्यमधर्मतां यति । तद्बुधैर्धिया विचार्यम् । यतो धर्मोऽतिसूक्ष्मो हेलया न ज्ञायते । पुरा विपिने वलाको नाम लुब्धको बभूव । स कदाचित् गोब्राह्मणगणान्तकं घोरसत्वं शरेण हत्वा सहसा शक्रलोकमगमत् । अपरं च । पूर्वं तपोवने कौशिको नाम विप्रः सत्यवाक्योऽभूत् । स चैकदा दस्युभिर्विद्रुतान् धनिकानन्वेष्टुं क्व गता इति पृष्टः सत्यवागसौ गुणदयाश्रयाँस्तान् प्रादर्शयत् । ततस्ते दस्यवो द्रविणाशया तानुपसृत्य जघ्नुः । अथ कालेन मृतः कौशिको नरकमयासीत् । इति सत्यधर्मयोः प्रवृत्तिर्गहना । किं बहुना । धर्मनिष्ठे युधिष्ठिरे मोहादसांप्रतं किंचित् चिन्तयितुं नार्हसि । निशम्यैवं खड्गमाकृष्य प्रतिज्ञाभंगभयात् स्वात्मानं हन्तुमुद्यतं पार्थं कृष्णः पुनरब्रवीत् । अवमानेन निहतो जनः सर्वथा गुरुर्भवति । गुरुसंसदि च श्लाघयाऽऽत्मा निहतो भवति । सखे ! क्रोधसंभवमज्ञानं निरस्य प्रतिज्ञां रक्ष । अग्रजवधान् निवृत्तो भवेत्युक्तवति कृष्णे धनंजयस्तथेत्युक्त्वा युधिष्ठिरं प्रोवाच । यत् त्वमेव भीरुः प्रमादी क्रूरश्चासि । मयैकेनैव सर्वे दैत्यदानवा संहृताः । किंबहुनाऽहमेव कार्मुकभृतामग्रगण्योऽस्मीति सत्यमवगच्छ । ततो दुःखात् काननं गन्तुमुद्यतं धर्मसुतं हरिर्यत्नाच् चरणौ गृहीत्वा प्रसादयामास । अथ राजा पादपतितं साश्रुनेत्रं च पार्थं मन्युमुत्सृज्य गाढमालिंग्य च रुरोध । ततो धर्मराजधनंजयौ कृतशौचौ रथावारुह्य पुनः समरांगणं जग्मतुः । अथ पार्थशरसमूहकृत्तवक्त्रैर्भूपै धरापतितैश्च पृथिवी कबन्धमयीव क्षणं बभूव । अत्रान्तरे भीमसेनो दुर्योधनानुजान् हत्वा गजविक्रमं दुःशासनमाससाद । ततः स्वगदया साश्वायुधध्वजं रथं निष्पिष्य रणे ध्वस्तं तं समाचकर्ष । ततोऽति क्रुद्धोसौ घोरं प्रियापरिभवं स्मरन् तं हत्वा तत् कोष्णं शोणितमपिवत् । एवं भीमस्य तत्कर्म दृष्ट्वा सर्वे स्रस्तासिकार्मुका महारथास्त्रासमवाप्य मीलिताक्षाश्च कंपिरे । एवं दुःशासने हते भीमः प्रतिज्ञार्णवमतरत् । सर्वे महारथाश्च विस्मयाविष्टा बभूवुः । अत्रान्तरे वृषसेनशरार्दिते पाण्डुसैन्ये पततां गजवाजिनां निर्घोषो बभूव । तस्मिन्नेवावसरे भीमसात्यकिरक्षिताः संहृता अपि भूपाला रणे वृषसेनपराक्रमं न सेहिरे । स धृष्टद्युम्नमुखान् वीरान् समकालं योधयामास । एवमाश्चर्ययोधिनस्तस्य भुजौ शिरश्च पार्थः सहसा बाणैश्चिच्छेद । एवं पार्थेन वृषसेने हते साश्रुनयनः कर्णो

बहुभिर्हतं सौभद्रं सस्मार । ततोऽमर्षाद् दह्यमानः कर्णो धनञ्जयमभ्यधावत् । ततस्तयोर्मनोरथशताभ्यस्ते महा समरे प्रवृत्ते नभः कौतुकायातसुरसिद्धाकुलं बभूव । ततस्तस्मिन् कर्णार्जुनरणे स्वपुत्रजयशंसिनोः सूर्यसुरेन्द्रयोर्दिवि [सहसा विवादे] जाते पृष्टौ वृषांककमलोद्भवौ यत्र कृष्णस्तत्रैव जय इति देवसमाजे निर्णयं चक्रतुः । अथ कर्णकिरीटिनौ शौरिशल्यौ च शंखौ दध्मतुः । तन्निनादेन जगत्त्रयी चकंपे । ततो वैकर्तनः पाण्डवाय धवलपत्त्राग्रा विशिखावली प्राहिणोत् । ततः पार्थध्वजेनाभिहतः कर्णकेतुश्चकंपे । तत्र कृष्णदृक्त्रिभागः शल्यं शल्यमिव विवेश । अथार्जुनशरैः सततं दिक्षु पूर्यमाणासु कौरवसैनिका बाणपातमतिक्रम्य तस्थुः । ततः कपिध्वजो दुर्योधनप्रयुक्तानां राधेयरथरक्षिणां महारथानां वक्त्राणि जहार । अथ कर्णोऽसंभ्रान्तः किरीटिनो मुष्टिमूले प्रयुज्यमानं शरमण्डलमसकृच्चिच्छेद । ततो भीमः पार्थमब्रवीत् । फल्गुन ! समरे कर्णो दुर्जय अतएव स्थिरतया युध्यस्व । किं बहुना । कैरातखाण्डवकालकेयबधादिष्वपि यस्तव संरम्भोऽभवत् । ततोऽप्यधिकं गृहाण । निशम्यैतद्विजयो गाण्डीवं गाढमाकृष्य दिव्यास्त्रैः सहसा द्यां पूरयामास । अथ कर्णो भार्गवास्त्रेण पार्थोऽस्त्रवृष्टिं हत्वा सभीमं कृष्णं बाणैरपूरयत् । तस्मिन्नवसरे कर्णपार्थयोरस्त्रैः पाण्डुकौरवसेनासु विपुलः क्षयोऽभूत् । कर्णोऽथ सर्पमुखं दीप्तास्त्रं सव्यसाचिने प्राहिणोत् । तस्मिन् महाभोगे भुजगे विसृष्टे शल्योऽङ्गपतिमभ्यधात् । अयं त्वयेरितो नागः पार्थकण्ठं नाप्नोति । राधेय ! यदि मन्यसे तर्हि पुनरस्त्रं प्रयुज्यताम् । अथवा कर्ण ! त्वं सर्वदाऽहितवाक्येष्वेव कर्णोऽसीति शल्येन तेजोबधायोक्तस्तपनात्मजः प्रोवाच । शल्य ! कर्णो द्विर्न संधत्ते । ततः कर्णच्युतं विषोल्वणं व्यालमापतन्तं दृष्ट्वा हरिर्मन्दरगौरवं वपुश्चक्रे । ततो हयचतुष्टये जानुभिर्वसुधां याते फणी नम्रकिरीटाग्रं जग्राह । अथ किरीटखण्डे पतिते विप्रलब्धः स सर्पो विनिःश्वसन् वसुधां विवेश । ततः कर्णः कालदण्डोपमः शरैः कृष्णार्जुनौ विध्यन् मुहुर्हसन्नुन्ननाद । ततः शक्रसुतः कोपाद् दिव्यरत्नविराजितं कर्णवर्मच्छित्वा शरैस्तद्वपुरापूरयत् । अथ पार्थः खाण्डवे कृतवैरं तं महोरगं षड्भिः शरैश्छित्वा कर्णं पुनस्ताडयामास । ततो वैकर्तनेन ब्रह्मास्त्रे निहते पार्थो वज्राशनिशताकुलं शाक्रमस्त्रं कर्णविद्याविघाताय प्रादुश्चक्रे । एवमालोक्य राधेयस्तमस्त्रं हत्वा किरीटिनो ज्यां चिच्छेद । ततो धनंजयः क्षणादभिनवां मौर्वीं धृत्वा कर्णदमनार्थं स्फुरज्ज्वालाजटालं रौद्रमस्त्रं विदधे । येन व्योम घोरदिग्दाहभीषणं बभूव । अत्रान्तरे विधिवशादंगराजसव्यरथचक्रं मही जग्राह ।

ततो विषमस्थितः कर्णस्तच्चक्रमुद्धर्तुमुद्यतः कौन्तेयं मुहूर्तं भवान् क्षम्यतामित्युवाच । फल्गुन ! मयाऽस्मिंश्चक्रे समुद्धृते महास्त्रं मुञ्च । यतो भवादृशः शूरो व्यसनस्थे विशस्त्रे च नहि प्रहरति । निशम्यैवं कंसारातिर्हसन् कर्णं प्रोवाच । कर्ण ! दिष्ट्याऽद्य वीरव्रतस्थितस्त्वं धर्मं जानीषे ? यदा बहुभिर्मिलित्वा सौभद्रो बालो निहतस्तदा किमयं धर्मो न विस्मृतः ? अपरं च सभायां यत् कृष्णामुक्तवानसि । तदपि स्मर्यताम् । अहो ! विषवह्निप्रदानेषु छिन्नधर्मस्त्वयाऽधुना स्मृतः ? नूनं नीचनृपाणां धर्मवृत्तयो विपत्स्वेव प्रस्फुरन्तीति जनार्दनेनोक्ते विजयो मन्युना प्रज्वलन्निव ब्राह्मेणास्त्रेण कर्णविहितं ब्रह्मास्त्रमवधीत् । ततोऽङ्गपतिः * पार्थोत्सृष्टं पावकास्त्रं वारुणास्त्रेण समाहृत्य ग्रस्तचक्रो व्यलम्बत । अत्रान्तरेऽर्जुनो बाणेन कर्णस्य मनोरथमिव समुन्नतंकनकभास्वरं ध्वजमुन्ममाथ । ततोऽर्जुनो मनसा हरं ध्यात्वा कांचनभूषितं शरं संधाय यदि मे तपसा रुद्रादयो देवास्तुष्टा स्तर्ह्यनेनास्त्रेण रिपुं हन्यामित्युक्त्वा व्यसृजत् । ततस्तेन सहसा हारपरिष्कृते कण्ठे निर्भिन्नो राधेयः क्रकचोत्कृत्तहेमताल इव भूतले न्यपतत् । एवं कौरवानीकनायके कर्णे हते केवलः शल्यः शल्यमिव तं कौरवपतिं ययौ । ततो नृपाः कर्णशून्यरथं शल्यं दृष्ट्वा दुर्योधनो हतः कर्णो जीवतीत्यूचिरे । एवं पार्थशरैर्निपातितेऽङ्गराजे दुर्योधनो व्यथितेन्द्रियश्छिन्नमस्तकमिवात्मानममन्यत । अत्रान्तरे कर्णदेहाभ्युद्गतं तेजस्तरुणतरणिमण्डलमाविवेश । येनान्तरिक्षणं ज्वालाकलापजटिलं बभूव ।

इति श्री गद्यभारते कर्णपर्व समाप्तम् ।

---

*श्री धनुर्वेद शिक्षकाय द्रोणाचार्याय पितामहादयः पारितोषिकस्वरूपं यं ग्रामं ददुः । स एव ग्रामो गुरुग्राम इति प्रसिद्धो बभूव । गुड़गाँव शब्दोऽयं गुरुग्रामस्यैवापभ्रंशोऽस्ति । गुरुर्द्रुपदाद्राज्यार्धमवाप्याऽश्वत्थाम्ना सह यत्र राज्यमकरोत् । सः प्रगणो देहरादून इति प्रथितोऽभवत् । काशिराजसुताम्बा भीष्मनिग्रहार्थं यत्र तपश्चचार सोऽम्बालय एव अम्बालेति प्रसिद्धनगरमभवत् । कर्णालयः कर्नाल इति संज्ञामवाप । कर्णपुर कानपुरयोस्तु समानता स्पष्टैव । शरशय्या शायिनं पितामहं पार्थो यत्र पानीयमपाययत् । तन्नाम्नैव पानीपत इति विश्रुतं स्थान मभूत् । हरियाण शब्दो हरियाणेति प्रान्तोऽभवत् । भीम राजधानी भिवानीति ख्यातिमवाप । हस्तिनापुरं यथावत् स्थितम् । मयेरितन्नगरं मेरठमभूत् । एव मनेके शब्दास्सांति । तानैतिहासिका विज्ञा निर्णीय व्यवहरन्त्वितिदिक् ।

ओंनमः शिवाय ।

# अथ गद्यभारते शल्यपर्व प्रारभ्यते

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥

एवं शक्रसूनुना कर्णे हते संजयोऽभ्येत्य पुना राज्ञे युद्धसमाचारं न्यवेदयत्। राजन्! सर्ववीरशिरोमणावर्थिनां कल्पपादपे च वैकर्तने हते निरुच्छ्वासो दुर्योधनो दशाऽपि दिशःशून्या मेने। ततो नृपो द्रौणिगिरा शल्यं सेनापतिं कृत्वा रणार्थं समुद्यतोऽभवत्। तस्मिन् समये दन्तिनां रथानामयुतं हयानां लक्षद्वयं पदातिनां तिस्रकोट्यश्चै तत् कुरुराज संगरे सैन्यशेषमभूत् । अतोऽर्धं हतशेषं पाण्डवबलञ्चाभूत् । ततो राज्ञां संहारमण्डले पुनर्घोरे संगरे प्रवृत्ते शल्यहार्दिक्यसौबलाः कृपद्रौणिसुयोधनान् पुरस्कृत्य पाण्डवचमूं विविशुः । ततस्तत्र पार्थपार्षतशैनेयद्रौपदेयशिखण्डिनस्त्रिगर्तकपिनाथवरूथिनीं जघ्नुः। ततस्तस्मिन्नमर्यादे रणे हतबन्धुसुहृद्गणा महारथा क्षीबा इव क्रोधमवाप्य घोरं युयुधिरे। ततो नकुलः कर्णतुल्यपराक्रमान् सुषेणसत्यसेनचित्रसेनाञ्जघान। ततो बलिना शल्येन गजेन सरोजिनीव पाण्डुवाहिनी चकंपे । एवं रिपुशल्येन शल्येन बध्यमानां वरूथिनीं दृष्ट्वा गदापाणिर्भीमस्तमाचक्राम। सोऽथ गदया तस्य रथं हत्वा मुमूर्षुरग्रे कालइव दण्डमुद्यम्य संमुखेऽतिष्ठत् । अथ मद्रराजोऽपि कोपाच्चामीकरांगदां गदां समदाय दर्पोद्धतं भीममयोधयत्। ततो मण्डलानि चरन्तौ तौ परस्परमभिपत्य घातजातस्फुलिंगाभ्यामभिजघ्नतुर्गदाभ्याम् । ततस्तयोर्भुवि मोहात् पतितयोः सानुगाः कुरुपाण्डवास्तूर्णमाजग्मुः । अथ सहसा संग्राममवाप्य तयोर्यथावत् स्थितयोर्दुर्योधनाद्या वीरा पार्थमुख्यान् योधयामासुः। ततः स्वर्गकामेषु युध्यमानेषु राजसु सुयोधनो भूपवरं चैकितानमवधीत्। अथ क्रुद्धः शल्यो नभश्चरैः पूज्यमानः सहानुगान् पाण्डवानेकाकी निवारयामास। ततोऽसौ शल्यस्तदुत्सृष्टां शस्त्रवृष्टिं छित्वा मुहूर्तात् तान् पतत्रिभिरदृश्यान् विदधे । एवं मद्रराजशरजालेन सैन्ये संच्छादिते क्रुद्धयुधिष्ठिरो द्विसहस्ररथानवधीत्। ततः शल्यो युधि युधिष्ठिराहतान् स्वानुगान् दृष्ट्वा तं शिलीमुखशतैरशोकमिवपूर्णमकरोत्। एवमालोक्य कोपप्रकंपितो नकुलो भीमसात्यकिमुख्यान् पुरस्कृत्य शल्यं शरै

रवाकिरन् । ततः शल्यः शरान्धकारेण भुवनोदरं स्थगयन् पार्थवरूथिनीमुन्ममाथ । ततस्तस्मिन् समरे जिष्णुर्द्रौणिं भीमो दुर्योधनं नकुलश्च शकुनिमयोधयत् । ततो युधिष्ठिरः शल्यायुधानि छित्वा तद्रथं तिलशश्चकार । अथ मद्रराजः कोपं कृत्वाऽपररथमास्थाय च युधिष्ठिरस्य ध्वजं रथं च चिच्छेद । ततो भीमो राजानं विरथं दृष्ट्वा सर्वायुधैः सह मद्रराजरथं चकर्त । ततो खड्गहस्तःशल्यो रथकुञ्जरान्निघ्नन् नानामार्गैश्चचार । एवमालोक्य गुहोपमो युधिष्ठिरः सहस्रघ्नीं शक्तिं मद्रराजाय प्राहिणोत् । ततोऽसौ तयोर्भिन्नहृदयो मद्रेशो धरिण्यां पतित्वा वीरगतिमवाप । एवं कौरवाशाशेषावलम्बिनिशल्ये हते सर्वे रथिनो भग्नमानमनोरथत्वमवलम्ब्य समन्ताद् दुद्रुवुः । अत्रान्तरे विचित्रकवचाभिधः शल्यानुजोऽनीकिनीं दारयन्तं धर्मराजमभ्याययौ । एवमालोक्य धर्मजः पृषत्कवर्षिणस्तस्य चित्ररत्नोज्वल शिरः शरैश्चिच्छेद । एवं तस्मिन् हते नाथहीनां पताकिनीं विज्ञाय कृपद्रौणिहार्दिक्यास्तत्सहायार्थं परावृत्य समाययुः । अथ स्वामिवधामर्षात् संमुखागतान्मद्रान् हत्वा युधिष्ठिरोऽमद्रां पृथिवीं व्यधात् । अत्रान्तरे क्षयकर्मकुशलो भीमो गदां नीत्वा म्लेच्छान् मूर्च्छयन् रणस्थलं शून्यमिवाकरोत् । ततः सात्यकिना सत्यराजे निपातिते दुर्योधनः स्वयमभ्येत्य पाण्डुपुत्रान् योधयामास । तद्दिने पाण्डवेषु रथगजाश्वयोधेष्वेकोऽपि दुर्योधनेषुभिरनंकितो नाऽभवत् । एवमालोक्य द्रौणिहार्दिक्यसुशर्मकृपसौवला दुर्योधनं प्रशसन्तः समाययुः । ततो निबिडपातिनां तेषां घोरे रणव्यतिकरे रजसा च रवौ संवृत्ते लोको निरालोकोऽभवत् । तस्मिन्नवसरे सर्वतः पाण्डुसेनासु द्रौणिः क्व गान्धारः क्व राजा दुर्योधनश्च केति विपुलशब्दोऽभूत् । ततस्तस्मिन् मुहूर्ते मारुतसुतः शेषान् दुर्योधनानुजान् कृतान्तान्तिकं प्रेषयामास । ततः शलजैत्रसुनाददुर्दशनभूरिबलमहाबाहुप्रभृतीन् वीरगतिमवाप्तानाकर्ण्य दुर्योधनो भृशमतप्यत । ततो वीरसात्यकिर्विरले रणे संजयोऽयं मया लब्ध इति ससंभ्रमं निजगाद । अथार्जुनः सपुत्रं सबलानुगं सुशर्माणं हत्वा विशिखैः संशप्तकानीकं निःशेषं व्यधात् । ततः सहदेवस्तस्मिन् रणाभिधे द्यूते मुहुः सायकाक्षान् प्रक्षिपन् अर्धचन्द्रेण शकुनिशिरश्चिच्छेद । अथ माद्रीतनयो वनवासदशां स्मरन् तत् सुतमुलूकं हत्वा गान्धारसेनामपि जघान । अथ सैन्ये निःशेषिते निहतवाहनो दुर्योधनो रणादपसृत्य पद्भ्यां प्रायात् । ततस्तस्मिन् महारणे कृतवर्मकृपद्रौणिषु शेषेषु धृष्टद्युम्नवचसा मां निहन्तुमुद्यते शैनेये करुणानिधिर्व्यासो ररक्ष । ततो दिनान्ते शोकार्तप्रस्थितोऽहं चक्रवर्तिनं वज्रहृदयं सुयोधनं प्रयान्तमपश्यम् । सोऽथ लज्जाकुटिलकन्धरः पादचारी मां दृष्ट्वा प्रोवाच । संजय ! त्वं म

जनकमुपसृत्य ब्रूहि । यत् सुहृत्कर्णविहीनो दुःशासनादीननुशोचँस्ते पुत्रो ह्रदं प्रविष्टः । एवमुक्त्वा स दैत्यमायया सलिलं संस्तम्भ्य प्रौढशोकानलाकुलो गभीरह्रदं विवेश । अथमम गिरा कृपद्रौणिभोजाः स्तम्भितारुसलिले सरसि प्रविष्टं ज्ञात्वा भूपति-शिखामणिलीढपादं तं समेत्य शुशुचुः । अथ धर्मराजोऽखिलैराजदारैः सह युयुत्सुं रात्रौ गेहं विसृज्य ऋणशेषमिव धनंजयभीममुख्यैः सह दुर्योधनं दध्यौ । यत् पादनखचन्द्र मरीचिमालामालाइव क्षितिभृतामुत्तमांगे बभुः । स कुरुराजसुत एक एव पदातिरगमत् । अतोऽस्थिरविलासविकाशि दैवं धिक् ।

यस्येच्छया जगत् सर्वं चक्रवत् परिवर्तते ।
करौ संयोज्य तद्दैवं प्रणमामि पुनः पुनः ॥

एवमाकर्ण्य संजयवचनं धृतराष्ट्रो मुहुर्मुहुः स्वदौर्भाग्यं निनिन्द । ततः संजयोऽब्रवीत् । राजन् ! पुरा श्रीकृष्ण विदुरादिभिः प्रबोधितोऽपि त्वं दुर्योधनं नाऽत्यजस्तस्याऽविवेकस्य फलमेतत् । अत्रान्तरे समीपस्था गान्धरी प्रोवाच । संजय ! मा महीपालं दूषय । नारिकेलफलाम्बुवद् भवितव्यं भवत्येव । तथा च गजभुक्तकपित्थवद् गन्तव्यं गच्छत्येव । ततो विदुरोऽवदत् । महाराज ! सहसा दैवाय दोषं मा देहि । पाण्डवास्तु जनार्दनानुमत्या पंचभिरेव ग्रामैः संतोषमकुर्वन् परं यदा दुर्योधनः सूच्यग्रमपि दातुं नैच्छत्तदा महायुद्धं भवितुमारब्धम् । एकस्य दुर्योधनस्य दोषेण सर्वराजसंक्षयोऽभवत् । सम्प्रत्यपि दुर्योधनो युधिष्ठिरं गत्वा क्षमां याचेत तदा तु शान्तिस्थापनं सुलभ मित्यभिधाय विदुरो विरराम ।

मंगलं भगवान् विष्णुर्मंगलं गरुडध्वजः ।
मंगलं पुंडरीकाक्षो मंगलायतनं हरिः ॥

इति श्रीगद्यभारते शल्यपर्व समाप्तम् ॥



ओं नमः शिवाय ।

# अथ गद्यभारते गदापर्व प्रारभ्यते

**नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।**
**देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥**

ततो द्रौणिमुखास्त्रयो वीराः समभ्येत्य ह्रदप्रविष्टं मानधनं राजानमूचुः । राजन्नुत्तिष्ठ । संग्रामे च शत्रूञ्जहि । कालोऽयमस्माभिस्सह तव विक्रमस्य समुपस्थित इति कुरुपतिर्निशम्य तत् पराक्रमं प्रशंसन् प्रोवाच । महाशयाः ! प्रातर्मम क्षत्रोचिता गतिर्भविष्यति । अत्रान्तरे समायाता लुब्धकास्तेषां समालापं श्रुत्वा पूर्वापरप्रसंगेन च तं दुर्योधनं ज्ञात्वा धनलोभेन सर्ववृत्तं भीमसेनाय शशंसुः । ततो राजा भीमसेनगिरा कृष्णं पुरस्कृत्य ससैन्यः सानुगश्च तं देशं तूर्णमगमत् । अथ गौतमादयो गर्जद्रथानीकैः पार्थान् समागतान् वीक्ष्य नरेन्द्रसूचनभयात् सहसा ततः प्रययुः । ततः स कृष्णवचसा धर्मसूनुः सलिलान्तःस्थं सुयोधनं प्रोवाच । राजन् ! रजत्कर्पूररजनीपतिसुन्दरं शुभ्रं यशो भवता मलिनीकृतम् । किं बहुना । रणे लक्ष्मीकुलगृहान् नरपतीन् घातयित्वा मानी प्राणरक्षां पुरस्कृत्य जीवन् न लज्जसे ? संप्रति युद्धाय समुत्थाय स्वां लक्ष्मीं त्रिदिवं वा समाप्नुहि । वीराणां विजयो वा निधनं समो हि लाभः परिकीर्तितः । इति यौधिष्ठिरं वचो निशम्य मन्युविषाकुलो दुर्योधनः सलिले स्तम्बेरम इव श्वसन् प्रोवाच । एवमेतत् । यत्त्वमात्थ । अहं तु निर्धनामेव श्रियं मन्ये । यतो वन्धुस्वजनहीना लक्ष्मीः कस्य मनः स्पृशेत् ? यथा वीरहीना ध्वजिनी बुधवर्जिता गोष्ठी च न शोभते तथा स्वजनं विना लक्ष्मीः कस्य मानसं प्रीणाति ? अहं तु गुरुपितामहकर्णदुःशासनादीन् स्वप्नेऽपि न विस्मरामि । अहह ! बन्धुमित्रविमुक्ता विभूतय इमा अन्धानां चित्रमालिका इव केवला विडम्बना । मया भुक्तां वीरविवर्जितां पृथिवीं वैराग्यमुक्ताभरणां जरतीं योषितमिव भुंक्ष्व । निशम्यैवं पृथासूनुर्गान्धारीसुतं प्रोवाच । भूपाल ! दिष्ट्या शान्तिमवलम्ब्य तपोवनरुचिः संजातोऽसि ? पुरा तु ते मतिः सूच्यग्रमपि भूखण्डं पांडवेभ्यो न दास्यामीत्यासीत् । परमद्य तु समग्रां पृथिवीं दातुमिच्छसीति महत्कौतुकम् ! उत्तिष्ठ एकेन तव युद्धमस्तु । स चेत् विजितस्तर्हि सर्वे त्वया जिताः । प्रलापैः कृशो मा भव ।

निशम्यैवं सावलेपं पार्थवाक्यं नृपः क्रुधोदतिष्ठत् । यतो मानिनः पराभवं न सहन्ते । ततोऽसौ गदापाणिरपरो दण्डधर इवोत्थाय युद्धार्थं समुद्यतोऽभवत् । ततः कृष्णवाक्याद् वृकोदरोऽपि कृष्णानिकारमनुस्मरन् गदामवलम्ब्य तस्य पुरः समुत्थस्थौ । अत्रान्तरे कुरुपाण्डवसंक्षये बन्धुनाशभयोद्विग्नस्तीर्थयात्रां गतो हलधरः कुरुक्षेत्रे गदायुधौ भीमदुर्योधनौ च दृष्ट्वा तयोः पारस्परिकवैमनस्यात् खिन्नो बभूव । अथ शशिशतद्युतिःस कृष्णादिभिः पूजितःशिष्ययोःसमरं द्रष्टुमुपाविशत् । ततो जनमेजयो नैमिषपुष्करप्रभासादितीर्थानां तथैव च भरद्वाजसनत्कुमारगालवमंकणकदधीचिसुतसारस्वतादि तीर्थवासिनामपि प्रसंगं शुश्राव । अथ धृष्टराष्ट्रेण पृष्टः संजयो युद्धकथां कथयितुमारब्धवान् । अत्रान्तरे सुयोधनः पद्भ्यामेव समन्तपञ्चकं गत्वाऽकंपोगिरिवदतिष्ठत् । यतो महतां विपदि धैर्यमधिकं संजायते । अथ दुर्योधनो धर्मपुत्रमवादीत् । सहानुगा भवन्तो युद्ध्यमानयोरावयोर्युद्धमुपविश्य निरीक्षन्ताम् । निशम्यैव कौन्तेयो हलायुधं परिवार्यपाञ्चालसैनिकैः सह तत्रोपाविशत् । अथ वद्धकक्षो वीरदुर्योधनो युद्धप्रवृत्तो गदापाणिं भीमं समाजुहाव । ततस्तयोर्गदाघातजाता वह्निकणावली दर्शकान् विस्मितानकरोत् । ततो युद्धदर्शनलालसैः सुरैर्व्योम्नि संपूरिते नाककान्तानामपि कोऽप्यपूर्वः कौतुकविभ्रमोऽभूत् । ततस्तौ चित्रमण्डलचारिणौ वीरौ प्रगल्भतया मोक्षाक्षेपवर्जनधावनविप्लुतसमवस्थानादिभिर्मुहूर्तमात्रं परस्परमयुध्येताम् । ततो महावेगो दुर्योधनःसनिर्घोषं तत्पार्श्वदेशं ताडयामास । एवमालोक्य क्रुद्धो भीमसेनोऽशनिनिःस्वनां गदां समाधूय भ्रामयामास । येनातिघोरोघरघरारवोऽभवत् । ततो भीमो जवात् तां गिरिगुर्वीं गदां तस्मै प्राहिणोत् । एवं ताडितोऽपि दुर्योधनो यदा नाकंपत तदा द्वितीयां गदां भीमो व्यसृजत् । सापि राज्ञा पुनर्मोघीकृता धरण्यामपतत् । अथ कौरवेण वक्षःस्थले समाहतो भीमः किंचिन् मूर्च्छाव्याकुलिताशयो भूत्वा क्षणं न विवेद । ततः पाञ्चालसृंजयानीके संदेहाकुलिते भीमः शनैः समाश्वास्य पार्श्वे नृपं ताडयामास । ततो गाढप्रहाराभिहतः कौरवेश्वरो धरण्यां पतित्वा सत्वरमुत्थाय भीमं प्रहारेण भुवि न्यपातयत् । तस्मिन्नवसरे देवोत्सृष्टा यशःसिता पुष्पवृष्टिः कौरवेश्वरस्य मूर्ध्नि साधुवादपुरःसरी न्यपतत् । अथ शोणितं परिमृज्य सत्वरमुत्थिते भीमसेनेऽर्जुनो हरिं कोऽनयोरधिको योद्धेत्यपृच्छत् । तच्छ्रुत्वा श्रीकृष्णोऽब्रवीत् । भीमो बलवान् । अत्र नास्ति संदेहः । गदानैपुण्यमपि तस्य प्रसिद्धमेव । परं कुरुपतिर्बलवान् गदायुद्धविशारदो रणकुशलश्च । तस्मात् धर्मयुद्धेन तं भीमो निपातने न शक्तः । पुराऽपि दैत्या मायया निहताः । मायिनश्च मायाबध्या हि भवन्ति । अतो भीमोऽस्य माय-

योरुभंगं विदधातु । अन्यथा राजा दुर्जयः । अपरंच सुयोधनो व्यायामचतुरो वेगादूर्ध्वचारी च प्रसिद्धः । तस्माज् जयो रंध्रप्रहारिणामिति मत्वा व्यवहर्तव्यमिति जनार्दनेनोक्ते भीमो भीषणां गदां चिक्षेप । अथ कुरुराजोऽपि तां गदामवलम्ब्य तं प्रत्यताडयत् । अथ भीमस्तां व्यथां संस्तभ्य रंध्रं विचिन्त्य च कुरुराजाय गदां प्राहिणोत् । सोऽथ पुष्पायुधपुरोदारहेमाभरणविभ्रमे तदूरुयुग्मे भुजंगीव निपपात । ततस्तेन प्रहारेण त्रुटितोरुसंधिर्दुर्योधनो वज्रावपातहतपक्षगिरीन्द्र इव दिवं विलोक्य धराशायी बभूव । एवमालोक्य तत्रत्या जना मिथः प्रोचुः । अहो संसारोऽयमसारः । इत्यस्माभिः प्रत्यक्षं दृष्टम् । एवमेकादश चमूनाथे भुवि निपातिते लोलताटनिरशना वसुधावधूश्चकंपे । जगद् दुर्निमित्तशतैर्व्याप्तमभूत् । व्योमचारिणश्च तद्युद्धं प्रशंसन्तः स्वसदनानि ययुः । ततो भीमो निकारगणनां कुर्वन् लक्ष्मीविलाससदनं कुरुपतिशिरश्चरणेन पस्पर्श । तस्मिन् समये चक्रवर्तिहारतो धरातले निपतिता मौक्तिकाः पृथ्वीरोदनाश्रुकणसमतां प्रापुः । अथ धर्मराजो गर्जन्तं भीमं निरस्य सुयोधनं प्रोवाच । राजन् ! तवैवानयात् सुहृदां क्षयोऽयं जातः । अथ भीमेन पदा स्पृष्टं कुरुपतिशिरो विलोक्य कोपकरालो हलधरः प्रोवाच । अहो ! प्रतापतापितारिपोः शत्रुहृतश्रियो व्याजहतस्य च शिरः कोऽऽपशुः पदा स्पृशेदित्युक्त्वा क्रोधशिखिना तं भीमं दग्धुमुद्यतं कंसारिर्नानाविनयभाषितैस्तं शमयामास । विषद्यूताग्निदोषाणां प्रभावोऽयमितिवादिनं कृष्णं दुर्योधनो निजामुत्कटां रुजं संस्तभ्य प्रोवाच । गोपालबाल ! मूर्खाणां संज्ञां कृत्वा वंचितोऽस्मि। त्वया भीष्ममुखास्ते वीरा व्याजैरेव पातिताः मया सुहृद्भिर्भुक्तं कान्ताभिर्विहृतमग्रजैर्हुतमन्ते च क्षत्रोचितो बधः प्राप्तः । अतो मत्तुल्यो धन्यो कोऽस्ति ? कृष्ण ! शुष्कमुखाः शत्रवो मया भ्रूभंगेन वनं निवासिताः । छत्रचामरादिभिः सहिता साम्राज्यलक्ष्मीर्दृष्टा । संग्रामे चाऽपराङ्मुखत्वमवाप्य दिक्षु यशः प्रसारितम् । लोकेऽस्मिन्नितोन्यदायुषः फलं किमस्तीति वचः समाकर्ण्य लज्जिता इव पार्था नृपैः सह जयं नादयन्तो रथानारुह्य ययुः । ततो मधूसूदनो यावत्फल्गुनं रथादवतारयति तावत् स रथःप्रजज्वाल । ततः पार्थेन पृष्टः कृष्णः प्रोवाच । सखे ! द्रोणकर्णास्त्रदग्धोऽयं रथो ज्वलति । निशम्यैवं संजयाद्राजा वि[illegible] वाक्यानि स्मरन् पुनः पुनः शुशोच । ततः कृष्णमुनौ कुरुवेश्मप्राप्ते हरिं नृपं गान्धारीं च प्राप्य प्रोवाच । राजन् ! युधिष्ठिरेण प्रेषितोऽहमत्रायातः । कौरवः प्रार्थितोऽपि निजदुर्नयाच्छमं नैच्छत् । पार्था धर्मान्न च्युताः । तेन ते रुषः पदन्न । अद्य ते पा[illegible]

पुत्रा युवयोरेव पुत्राःसन्ति । राजन् ! पुरा यतोधर्मस्ततोजय इति युवाभ्यामेव चोक्तम् । एवं तौ प्रसाद्य वृष्णिवीरे याते धृतराष्ट्रो व्यासं चापि विसृज्य शेषवृत्तान्तं संजयमपृच्छत् । सोऽब्रवीत् । महीतले वेपमानस्ते पुत्रो मां दृष्ट्वा प्रोवाच । भद्र ! सूदेन मायया निपातितं मां पश्य । अत्रान्तरे द्रौणिहार्दिक्यगौतमाः समभ्येत्य कालेन नीतां कौरवपतिदशां ददृशुः । ततः कृपाचार्योऽब्रवीत् । राजन् ! धन्योसि । प्रदर्शितं त्वयाऽद्य युद्धवीरत्वम् । क्षत्रियो युद्धे सम्मुखमरणादेव सद्गतिं लभते । उक्तं च धर्मशास्त्रे ।

द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ ।
परिव्राड् योगयुक्तश्च रणेचाऽभिमुखो हतः ॥

तच्छ्रुत्वा दुर्योधनोऽब्रवीत् । गुरो ! सर्वमेतद् गुरुकृपयैवाऽभवत् । ततः कृतवर्माऽवदत् । कुरुपते ! मा कुरु चिन्ताम् । सम्प्रति तु वयं जीवामः । यावत् प्राणास्तावत् तव हितार्थं प्रयतिष्यामहे । गुरुपुत्रमग्निकल्पं त्वं गणय । आचार्यस्तत्र वायुत्वमवलम्ब्य तृणोपमं पाण्डुसैन्यं सहसैव दाहयिष्यति । प्रातः कालस्तु दूरेऽस्ति किन्तु रात्रावेव प्रतीकारं कृत्वा स्थास्याम इत्यभिधाय विरराम । एवमाकर्ण्य सुयोधनो गद् गद् गिरा जगाद । वीरवर ! भीष्मद्रोणकर्णोपमेषु भवत्सु जीवत्सु शत्रुवर्गं तृणराशिसमं मन्ये ।

ततो गुरुसुतः कोपात् करे करं विनिष्पिष्य निःश्वासपूर्वकं निःशेषशत्रुनिधने प्रतिज्ञां व्यधात् । अथ नृपस्तं वीरं समालिंग्य स्वसेनापतिं चक्रे । यतोऽभिमानिनां पर्यन्तेऽप्यहं कारशैथिल्यं न भवति । ततो द्रौणिरम्बुदनिर्घोषं निनद्य प्रतस्थे । अथ राजाऽपि निशायां तस्यां रुजा विषमां दशां प्राप । ततो गौतमहार्दिक्यगुरुपुत्राः श्रियः कल्लोललोलतामन्तः कलयन्तो महावनं प्राविशन् ।

इति श्रीगद्यभारते गदापर्व समाप्तम् ।



ओन्नमः शिवाय ।

# अथ गद्यभारते सौप्तिकपर्व प्रारभ्यते ।

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥

अथ कमलिनीप्रियेरवावस्तं गते तमोभिः शोकावकीर्णकेशेव मही बभूव । ततो घोरसत्वघने तस्मिन् वने सकृपे कृतवर्मणि श्रमान्निद्रामुपगते दुर्योधनवधं ध्यायन्ने काकी द्रौणिरेव शत्रुनिधने प्रतिज्ञामचिन्तयत् । अत्रान्तरे न्यग्रोधशिखराश्रयं वायसमण्डलमुलूकेन निपातितमवलोक्य द्रोणसुतस्तामेव नीतिं पाण्डववधे निर्धारयामास । सोऽथ क्रुधा क्रूरां धियं विधाय कृपभोजौ विबोध्य च दीर्घं निःश्वसन् प्रोवाच । यदस्माकमेकाकी राजाधिराजो जीवत्स्वस्मासु भीमेन व्याजान् निपातितः । स च भूतलेऽस्माभिर्दृष्टः । अतोऽस्माकं शस्त्रधारणं वृथा । संप्रति देशकालौ समाश्रित्य सर्वात्मना रिपुर्वध्यइति मत्वाऽहं तु प्रसुप्तान् पाण्डवान् सानुगानद्यैव हन्मि । श्रुत्वैतत् कृपाकुलः कृपः प्रसुप्तवधपातकं प्रदर्शयन् भागिनेयं निन्दन्नभाषत । एतत कुत्सितं युद्धं धिक् । यत्र निश्चेष्टो हन्यते । यशस्विनो वीरास्तु भग्नधैर्येऽपि न प्रहरन्ति । भवानहं भोजश्च प्रातरेव तत्कर्तारो येन पुनर्दुर्योधनवधव्यथां न यास्यामः । किं त्वं न जानासि । यत् समरे संहता वयं सुराणामपि वर्याप्ताः । किंबहुना । प्रातरे ज्वलिताः पावका इव वैरिवनं प्रवेदयाम इति गौतमेनाभिहिते साश्रुनयनो द्रौणि पुनरभाषत । मातुल ! ये विदग्धेष्वरिषु मायोपमास्तेऽधर्ममर्यादां स्पृशन्तोऽपि तत्फल भागिनो न भवन्ति । यथाऽर्जुनेन कर्णो हतः शान्तनवश्च निपातितस्तत् किं लोके विदितम् ? शेषं वक्तुं न पार्यते । अधुना धर्माय स्वस्त्यस्तु । तस्मै मयाऽञ्जल रचितः । अहं तु तावन्मर्मदारणं पराभवमिमं न सहे । अथ कृतनिश्चयो द्रौणिर्दारु संकल्पमभिधाय रथेन तमसि कौरवद्विषां शिविरं प्रायात् । ततो द्रौणिः कृपभो वतिक्रम्य जवाच्छिविरद्वारमासाद्य तत्र सहस्रशीर्षनयनं सहस्रचरणाद्भुतं भयंकरस्याऽ भयं महद्भूतं विलोकयामास । ततो द्रौणिर्धैर्यमवलम्ब्य तस्मै यां सर्वायुधाव प्राहिणोत् । सा तमासाद्य सहसा क्षयमगमत् । एवमालोक्य गाढानुशयतापितो द्रौ

स्तन्मलिनं कर्म निन्दन् रथादवततार। ततस्त्रिपुरान्तकं विलोक्य तमेव शरणं प्रायात्। ततो रुद्राय स्वात्मोपहारं दातुं समुद्यते तस्मिन् ज्वालाकुला हेमवेदी तत्र पुरस्तात् प्रत्यदृश्यत। ततो द्रौणिर्वेद्यां ज्वलिते महावह्नौ त्रिनेत्रं तोषयितुं भक्त्वाऽऽत्मानं तत्राऽपातयत्। अथ तुष्टो भगवांस्त्रिपुरारिः स्वयमेत्य तमुवाच। आंगिरस! त्वमुत्तिष्ठ। कृष्णप्रेरितोऽहमत्र स्थितोऽस्मि। मां कृष्णात् पृथङ् मा गणय। संप्रति पाञ्चालाः कालपक्वाः सन्ति। एषां रक्षाकुत्रचिन्नास्ति। त्वमेतेन खड्गेन निःशंको भूत्वैतान् दारयेत्यभिधाय खड्गं दत्वा च तिरोहिते भैरवे दुष्प्रेदयो द्रौणिः शिविरमाविवेश। सोऽथ प्रकाशितपटमंडपे शुभ्रशयने शयानं धृष्टद्युम्नं विलोक्य रे गुरुघ्न! उत्तिष्ठेति पादाघातेन तं प्राबोधयत्। ततस्तेन प्रबोधितोऽसौ संभ्रमस्वीकृतायुधो द्रोणपुत्रं परिज्ञाय चकंपे। अथ द्रौणिर्माल्यवद्भिः शिरोरुहै स्तं वेगात् समुत्थितं समाकृष्य कण्ठे गाढं निष्पीड्य च पातयामास। अथ निष्पिष्यमाणोऽसौ संरम्भाच्छोणितमुद्वमन् कुपित्वा तत्पादौ नखैर्दन्तैश्च व्यदारयत्। ततोऽसौ द्रौणिमुवाच। तूर्णं शस्त्रेण मां छिन्धि। मा पदेनेति कण्ठरुद्धस्वरोऽस्फुटाक्षरमभ्यधात्। तच्छ्रुत्वा द्रोणसुतोऽब्रवीत्। पाप! पद्भ्यां निहन्यसे। यतो गुरुघ्नाय शस्त्रपूतत्वं न नियतमित्यभिधाय चरणाघातैस्तं जर्जरं कृत्वा पोथयामास। एवं तस्मिन् हते तद् विमर्दशब्देन जनो बुबुधे। ततः पांचाला द्रौपदेयाश्च रिपुरक्तच्छटांकितं द्रौणिमालोक्य कालोऽयमिति मेनिरे। अथ निद्राशेषारुणदृशां बर्म वर्मेति क्रोशतां मिथःशस्त्राण्यानयतां च तेषां महास्वन आसीत्। अहो! क्व गजः क्व रथः क्व हयः क्व चापं शिलीमुखाश्च क्वेति ब्रुवाणाँ स्तान् क्रुद्धो द्रौणिः खड्गेन चिच्छेद। तत उत्तमौजसं पद्भ्यां हत्वा युधामन्युमपि जघान। स एवं शूराशिरांसि भुवि पातयन् कन्दुकैरिव कालरात्र्या विनोदं विदधे। ततोऽसंभ्रमात् समापततः कृष्णासुतानपि स करवालेन कालकवलोचिताँश्चकार। एवं प्रातिविंध्यसुतसोमश्रुतकीर्तिशतानीकश्रुतवर्मसु हतेषु कृष्टकोदण्डः शिखण्डी शरैर्द्रौणिं पूरयामास। ज्ञात्वैवं कुपितो द्रोणपुत्रः खड्गेन तमपि द्विधा विदधे। एवमाचार्यपुत्रेण वध्यमाना मत्स्यसृंजयपांचालप्रभद्रकास्तमन्तिके कालोपमं ददृशुः। सोऽसितो रक्तवसनो रक्तमाल्यानुलेपनो हसन् स्फुटं संहारोपमां दधौ। ततो घनान्धकारे वीररथकुंजरवाजिनां क्षयं द्वारदेशे भोजगौतमौ चक्रतुः। एवं भैरवविग्रहो द्रौणी रुद्रचरितमवलम्ब्य सहसाऽक्षौहिणीं हत्वा शिविराद् बहिर्निर्ययौ। ततो द्रौणिःकृपकृतवर्मभ्यां सह गत्वा भग्नशक्तिं भुवि पतितं राजाधिराजं सुयोधनं ददर्श। ततस्ते गदाग्रेण क्रव्या-

दमण्डलं मुहुर्मुहुर्वारयन्तं मर्मभेदिन्या व्यथया च वसुधां भञ्जयन्तं तं दुर्योधनमुपसृत्य तस्य वदनोद्वान्तं शोणितमाशु परिमृज्य सर्वपांचालसंहारकथासुधां ववृषुः । निशम्यैवं किञ्चिच्छेषजीवोऽपि वृत्तकन्धरो राजा पर्यन्तप्रसिताव्यक्तभाषितैस्तान् प्रशशंस । अथासौ साश्रुविलोचनं द्रौणिं यत्नेन परिष्वज्य पुन र्नःसंगमः स्वर्गे भूयादिति शनै रवदत् । सोऽथ दुर्योधनो दयितामिव गदामंगे विधाय चिरं भुक्तां वसुमतीं च दोर्भ्या मवगूह्य वीरगतिं स्मरन् सुरवधूप्रणयी बभूव । अत्रान्तरे प्रयातायां क्षपायां क्षपितारयः पाण्डवा द्रौणिकृतं दारुणं कर्म जज्ञिरे । ततः कृष्णा महाभयान् मुक्तानपि हतान् सुतान् सपांचालाननुजाँश्च हताञ्छ्रुत्वा मूर्छिता भुवि न्यपतत् । ततः शनकै र्लब्धसंज्ञा सा सुलोचना मर्मभेदिभिः परिदेवनैः पाण्डवानां हृदयानि विदारयामास । ततः सा यावद् विकर्मणस्तस्य द्रौणेर्विशिखैः कृत्तमुत्तमांगं न द्रक्ष्यामि तावज्जीवितस्यायमञ्जलिरिति व्यजिज्ञपत् । निशम्यैवं द्रौपदीवचनं भीमसेनो मरणे कृतनिश्चयां तां विज्ञाय प्रियाशोकशूलेन हृदि ताडितो द्रौणिवधजिघांसया रथमारुह्य प्रययौ । एवमालोक्य हरिर्द्रौणिं रुद्राश्रयं भीमं च पवनाश्रयं मत्वा तत् पृष्ठतो गच्छाम इति पाण्डवानूचे । ततः किरीटिप्रमुखाः सर्वे रथिनःशेषवश्च सात्यकिना सह युद्धार्थं ययुः । ततस्ते प्रसुप्तवधपातकाद् ध्वस्तच्छायं क्रियाहीनं च द्रौणिमासाद्य कोपेनाकुलतां ययुः । ततो नकुलसारथौ भीमे द्रौणिमभिद्रुते घृताभ्यक्तः पादचारी द्रौणिः सरस्वतीतटेऽपाण्डवं जगत्कर्तुं ब्रह्मशीर्षास्त्रं समाददे । अथ कृती पार्थोऽपि तद्विनाशाय ब्रह्मास्त्रमसृजत् । येन दशापि दिशः कंपातंकतरंगिताऽभूवन् । अत्रान्तरे नारदेन सह स्वयं सत्यवतीसूनुस्तत्रागत्य द्रोणतनयं जिष्णुं च प्रोवाच । वत्सौ ! दिव्यास्त्रसंमर्दोऽयं हतवीरमपि जगद्दग्धुं शक्तः । पार्थ ! त्वं दिव्यास्त्रं संहर । द्रोणपुत्र ! त्वमपि मम गिराऽस्त्रमाकर्षय । अकाण्डे मा भवन्तु लोका प्रलयभागिनः । निशम्यैवं मुनिशासनं पार्थस्तु क्षिप्रं स्वास्त्रं संजहार परन्तु प्रयोगकुशलोऽपि द्रौणि रस्त्रं संहर्तुं समर्थो नाऽभूत् । ततो लोके प्रज्वालिते सुरमण्डले च व्यथिते द्रौणिरभिमन्युवधूगर्भेऽस्त्रं पातयामास । अथ पार्थः पुत्रसंतानवाञ्छया द्रोणसुतं निन्दन् कोपं कृत्वा पुनरस्त्रमसृजत् । ततः संततिक्षयाद् विषण्णं जिष्णुं कृष्णोऽवदत् । धैर्यजलधे ! मा शुचः । ते वंशो न विनंक्ष्यति । अहमुत्तराया गर्भे स्थितं सौभद्रतनयं शिशुमस्त्रतेजसादग्धमपि जीवयिष्यामीति ब्रुवाणे गोविन्दे भुवि च पार्थास्त्रे ज्वलिते देवर्षिणा सह व्यासो द्रोणतनयमुवाच । चूडामणिं त्यज । महास्त्रं जीवरतं रक्ष । त्वमशक्तः प्रमादी च यथोचितं न जानीषे । त्वमपराधादसाद् व

राणां सहस्रं विस्नरोगित्वमवाप्य दुर्भिक्षव्यंजको दुःखितश्च विजने विचरिष्यसि । इति व्यासेन शप्तो गुरुसुतः कोपात् तमभाषत । व्यसने पतितमपि मां पुनः कथं संकटे क्षिपासि मुने ! यत्र यत्र भविष्यामि तत्र तत्र त्वमपि ममानुगो भविष्यसीति सोऽपि तं प्रत्यशपत् । एवमभिधाय स द्रौणिः स्वास्त्रोपहाराय चूडारत्नं वितीर्य प्रययौ । मुनिरपि मुनिना सह तिरोदधे । ततः प्रशान्ते ब्रह्मास्त्रे शौरिणा सह पाण्डवाश्चूडारत्नं समादाय याज्ञसेन्यै निवेदयामासुः । एवं शोकार्ताः पाण्डवाः पाञ्चालीं प्रसाद्य घोरं पाञ्चालकदनं ध्यायन्तो धृतिं न ययुः । इति संजयेन कथितो धृतराष्ट्रः शोकात् क्षणं मूर्च्छां प्राप । ततः सचिवः संजयस्तं शीतसलिलापूरैराश्वास्योवाच । राजन् ! पर्यन्ते शोकमोहदैः स्वप्नमायाविलसितैः संसारविभ्रमैर्मनीषिणो न स्पृश्यन्ते । देव ! ऐन्द्रजालिककृतैश्छायाक्रीडनकैरिव महाशयाः पुत्रधनदारैश्च न मुह्यन्ति । अयं तवैव दुर्णयाद् बान्धवक्षयोऽभवत् । अतो मिथ्यैव शोकं कर्तुं नार्हसि । राजन् ! पण्डिता नष्टं मृतमतिक्रान्तं च नानुशोचन्तीत्यादिसंजयमुखा उग्रमोहं नृपं करिकर्णलोलां श्रियं निगद्य नानेतिहासपुराणवचनैरसकृत्तं समाश्वासयामासुः ।

इति श्रीगद्यभारते सौप्तिकपर्व समाप्तम् ।

---

अत्र केचित्कथयंति यद् ब्राह्मणस्य चूडारत्नं शिखा ।
तस्याश्छेदनं कारयामासुः । तदुक्तं रामायणेऽपि दंडावसरे ॥
वैरूप्यमंगेषु कशाभिघातो मौण्डयं तथा लक्षण सन्निपातः ।
एतान्हि दूते प्रवदंति दंडान् वधस्तु दूतस्य न नः श्रुतोऽस्ति ॥ अपरं च
आगस्सु ब्राह्मणस्यैव कार्यो मध्यमसाहसः ।
विवास्यो वो भवेद्राष्ट्रात् सद्रव्यः सपरिच्छदः ॥ म०अ०८-२४१ ।

अश्वत्थामा दीर्घजीवनमवाप । अत्र श्लोकः ।

अश्वत्थामा बली व्यासो हनूमांश्च विभीषणः ।
कृपः परशुरामश्च सप्तैते चिरजीयिनः ॥

ओ३म् नमः शिवाय ।

# अथ गद्यभारते स्त्रीपर्व प्रारभ्यते

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥

अथ गान्धारीं पुरस्कृत्य व्याकुलमानसो धृतराष्ट्रो वीरगतिप्राप्तान् सुतान् द्रष्टुं सोत्कंठित इव वहिर्निर्ययौ। तत्र तौ गत्वा विलपन्तौ भुवि न्यपतताम्। विलोक्यैवं कृपाकुलः पाराशर्यः कृष्णविदुराभ्यां सह तत्राभ्येत्य प्रोवाच । राजन् ! देहिनामभावः कुत्र प्राक् क्वाऽपि पश्चाच्च सततं स्थितः। तेषु मध्यविकारेषु कथं स्नेहं कर्तुमर्हसि। अपारेऽस्मिन् संसारसागरे जलबुद्बुदवत् सर्वे जन्तवः कर्मयोगेन भवन्ति च न भवन्ति। सुयोधनोऽत्र भूभारशान्त्यर्थमजायत इति सत्यम्। स च तथा कृत्वाऽतो यात अतोऽत्र कस्त्वं स च तव कः ? नरेन्द्र ! महालयेऽस्मिन् प्रवृत्ते वृथा शोकं मा कृथाः। यातानां कणिकाऽपि न पार्षदां प्रतीपमेति । अयं शोकव्यसनसंभवः प्रयासो भवतो भवत्यायासाय। सांप्रतं दुःखवृक्षाणां मूलं स्नेहो विनिवार्यताम्। तस्मै कालाय नमः। यत् प्रभावात् कायः शैशवं तारुण्यं वार्धक्यं च समवाप्य स्वयमेव विनश्यति। ते तव पुत्राः स्वात्मापराधादेव कालेन कवलीकृताः। तस्मात् पाण्डुपुत्रेभ्यः किल्विषात् क्रोद्धुं नार्हसि। ते कृतधियः सततं धर्मपरायणा अतस्तेन रक्षिताः। तव सुताश्च धर्मविरुद्धा अतस्तेन क्षताः। राजन् ! पाण्डवान् भ्रातृजान् गणयित्वा तेषु कालुष्यं मा कृथाः। त्वमधुना गान्धारीं ब्रूहि । यथा सा मोहे न निमज्जति । एषा पूर्वमेवोक्तवती यतो जये धर्मो निबन्धनमस्ति। अत्रान्तरे लज्जानम्रशिरोधराः पार्थाः कृष्णादिप्रेरणया समोहं कौरवेश्वरं द्रष्टुमभ्याययुः । ततः प्रज्ञाचक्षू राजा युधिष्ठिरमालिंग्य पश्चात् कृष्णबुद्ध्या विवर्धितं मायामयं भीमं परिषष्वजे । अथ द्वेषाद् भुजाभ्यां तेन पीडितो मारुतिः कणशः प्रययौ । विलोक्यैवं सर्वे विस्मयाऽविष्टा बभूवुः। ततो धर्मसूः भर्तृसादृश्यात् सदा वस्त्रावृतेक्षणां वृद्धां पतिव्रतां गान्धारीं प्रणनाम। ततो दुःखात् राजवल्लभाः स्नुषासहितां गान्धारीं च पुरस्कृत्य रणमध्यमगुः । ततस्तत्र दिव्यदृष्टिः सुबलात्मजा करुणं विलप्य केशवं बभाषे। कृष्ण ! पुरा याः सूर्यचन्द्राभ्यामपि न दृष्टा



यदि लोहमयो भीमो नाऽभविष्यद् दृढायुधः ।
अखंडयिष्यत्तं नूनं वृद्धोऽप्येषोऽम्बिकासुतः ॥

वै० यं०, अजमेर.

स्ताः मत्पुत्रवध्वो रणे हतान् स्वपतीन् छोचन्ति। दशामेतासां विलोकय। अहह ! योऽन्तः पुरे राजदारैः पुरोपसेवित आसीत्। स शूरो मे तनयो भग्नोरुर्भुवमधिशेते ? इयं सुयोधनवधू र्हतनागां हताश्वां च सपत्नीमिव दमां विलोक्य मूर्च्छामुपागता। एषा संज्ञां लब्ध्वा चिरं रजश्च परिमृज्य राजराजं परिपृच्छति। राजन् ! रत्नांशुकवतीमिमां गदां मा मिवोत्संगवर्तिनीं कृत्वा दोर्भ्यां भुवमालिंग्य च कथं सुप्तोऽसि ? नरपते ! विलासशयने कनकपर्यंके पुरा या न वृता सा रक्तक्षीबा शिवा कथमत्र सुप्ता। एष तवानुजः प्रियो दुःशासनः शेते। यस्य शोणितं राक्षसेनेव भीमेन पीतम्। अयं ते दयितः पुत्रो लक्ष्मणः शत्रुणा हतः सजीव इव त्वां किञ्चिद् वक्तुं समीहते। प्राणनाथ ! नन्दनकौतुकात् त्वयि लोकपाले दिवं यातेऽभिमानिनैवैका कीर्तिस्त्तदनुयायिनी धन्या। पूर्वं यो नृपः कंकणझंकारै र्व्यजनैश्च वीजितोऽभवत्। सोऽयमद्य तु क्रव्यादपक्षपातेन वीज्यते। अत्रान्तरे कौरवस्त्रियः क्रोशन्तीं दुर्योधनवधूं समाकृष्य प्रोचुः। देवि ! इतः पश्य। पुत्रवत्सलेयं सुभद्रा रजोदिग्धमभिमन्युं परिमार्ज्य स्तनौ दातुं च समुद्यतेव प्रतिभाति। इयमुत्तरा शशांकसदृशं पतिमुखमंके कृत्वा च वाष्पधाराभिः प्रक्षाल्य परिपृच्छति। अयिनाथ ! प्रणयपेशलं तत्तदुक्त्वा प्रियतमां मां विहाय भूमिमालिंग्य च कथं शेषे। अहह ! गाण्डीवधन्विनः सुपुत्रश्चक्रपाणे र्भागिनेयः शौर्ये च शक्रसदृशस्त्वं कथमेकः परै र्हतोऽसि ? कान्त ! कमलाकमलोपमं ते रम्यवदनं नूनमापास्यति। अतः स्वर्गवधूजनो धन्यः। नाथ ! त्वयि त्रिदिवगामिनि तारकापंक्तिः शशांकशंकया कंठे मुक्तावलिभ्रमं करोति। त्वया पुरा याऽहं नववधूःप्रत्यालापं प्रार्थिता। संप्रति स्वयं भाष्यमाणामपि मां कथं न प्रतिभाषसे ? सर्वगुणग्रामगणनीयस्य ते दाक्षिण्यं क्व गतम् ? यत्स्वर्गललनासक्तो मामुपेक्षसे। हन्त ! धातुः सौभाग्यवर्णनेऽस्मिंस्त्वच्छरीरे पुनः कर्तुमशक्ये यैः प्रहृतं तान् दग्धलोचनान् धिक्। एवं विलापिनीं बालां बलादाकृष्यैता रुदन्त्यो विराटपत्न्यः पत्युरन्तिकं यान्ति। अयं सानुजः सामात्यः ससुतो हतो विराटनृपति र्भूमौ बधूभिरावृतोऽप्सरसां गणै र्दिवीव राजते। एषा सुदेष्णा द्रोणशरच्छिन्नं भर्तुराननं विलोक्य तारं क्रोशन्ती सख्येव मूर्च्छया रुद्धा। बधूजनोऽयं क्रव्यादलुप्तावयवं कर्णं दृष्ट्वा मुहुर्मुहुरालिंग्य शोचति। यस्य नाम्नि संकीर्तिते शत्रवो निद्रां न प्रापुः। स त्वमद्य वाणहतः शेषे ? अतः कालदुरन्तताम्धिक्। अपि यस्य जम्भारिर्वर्मकुण्डलयाचकोऽभवत्। स सत्यसंधः कर्णः कथं खगैः कर्णशेषीकृत इति प्रकीर्णाभरणाः कर्णयोषितः क्रन्दन्त्यः प्रेक्षकहृदयान्यपि दारय-

न्ति । कृष्ण ! हतं मम जामातरं जयद्रथं पश्य । बाला मत्पुत्री शोचितुमपि न जानाति । एष रिपुशल्यपराक्रमः शल्यः संख्ये हतोऽधुनाऽन्तः पुरयोषितां शल्यतां यातः । एष युधि यया राधेयस्य तेजोबधं विदधे । साऽस्य मद्रराजस्य जिव्हा वायसैः कृष्यते । यथा शान्तार्चिषो वन्हेस् संस्कारः क्रियते । तथा समरे वीरगतिंगतस्य द्रोणस्य मूर्छितान् कृमीनुत्सार्य विप्रैः संस्कारः क्रियते । एष सोमदत्तसुतो वीरो भूरिश्रवाः किरीटिनाच्छिन्नबाहु र्हतो महिष्या शोच्यते । वीर ! रणेऽस्मिन् याचककल्पद्रुमे दोष्णि च्छिन्ने कोऽपर : शत्रुयोषितां वैधव्यदीक्षागुरुतां यास्यति ? कृष्ण ! पश्यैष हितोपदेशविद्वेषी शकुनिर्विवृत्तवानशुभाचारो वेश्याभिरिव शिवाभिराकृष्यते । इतश्च काम्बोजाधिपतेः सुदक्षिणस्याऽप्येताःप्रिया प्रलापेनाश्मनामपि हृदयानि दारयन्ति । एताःकोमलकामिन्यः सौभद्रशरनिर्भिन्नं बृहद्बलं राजपुत्रं शोचन्ति । एते स्वर्णमालाविभूषिता धृष्टद्युम्नसुता द्रोणनिहता भ्रष्टा विद्याधरा इव भान्ति । एते वृद्धं द्रुपदं पुरस्कृत्य केकयमागधजयत्सेनधृष्टकेतवो वीरगतिमवाप्ता धराशायिनो वर्तन्ते । एतान् भगदत्तश्रुतायुधजलसंधसुलोचनाविन्दानुविन्दालायुधालम्बुसान् पश्य । किं वहुनाऽन्येऽपि सहस्रशः पार्थिवा वीराश्च हताः कान्ताभिः परिवारिता लब्धजीवा इवाभान्ति । कृष्ण ! शक्तेनापि त्वया कामाद् द्वेषाल् लीलया वा सर्वक्षयोऽयमुपेक्षितस्तस्मात् प्राप्ते तु षड्विंशे वर्षे वृष्णीनां समरे मिथस्तवापि विपुलबान्धवक्षयो भवितेत्यभिधाय सुबलात्मजा तारकरुरं करोद । निशाम्यैवं स्वेच्छासृष्टलयोदयः कृष्णो विहस्य तां प्रोवाच । देवि ! विधिना यत् पुराऽऽदिष्टं तत् त्वयाद्य पुनरुक्तम् । अवश्यंभाविनि क्षयेऽस्मिन्मा शुचं कृथाः । अहं किल धर्मविद्विषां हन्तास्मि । एतदाकर्ण्य धृतराष्ट्रो युधिष्ठिरं वीरगतिप्राप्तानां परिमाणं पप्रच्छ । तच्छ्रुत्वा धर्मराजोऽब्रवीत् । तात ! रणे सहस्राणि विंशतिः षडधिकाः षट्कोटयश्च हताः । अत्र येऽप्रहृष्टा हतास्ते गन्धर्वपुरं गताः । ये भयात् पराङ्मुखा हतास्ते यक्षत्वमुपागताः । येत्वखण्डितसत्वस्थास्ते ब्रह्मलोकमुपाश्रिताः । ये पद्भ्यां बाहुभ्यां वा हतास्ते मेरुपार्श्वं प्रयाताः । सर्वमेतल्लोमशमुनिप्रसादात् पश्यामीत्युक्त्वा धर्मतनयो हतनरेश्वराणां तद्बन्धूनां च विभवोचितं संस्कारमादिदेश । ततो विदुरसंजययुयुत्सव इन्द्रसेनमुखान् सूतान् पुरस्कृत्य युधिष्ठिरादेशेन तेषामन्त्येष्टिक्रियार्थं ययुः । अथ माल्यवस्त्रालंकारविभूषिता ते महारथाश्चितानलेषु निहिताःस्वप्रतापमिव समाविशन् । अत्रान्तरे इतस्ततः कण्ठविलग्नानां नारीणां मिथः करुणध्वनिरुदतिष्ठत् । अथ धृतराष्ट्रसमेतः सानुगो युधिष्ठिरो नृपस्त्रीभिरनुयातश्च स्नातुमापगां ययौ । ततो युधिष्ठिरो मात्रा गू

संभवं कर्णवृत्तान्तं श्रावितस्तस्मै भ्रात्रे दुःखाद् वाष्पमिश्रां जलाञ्जलिं प्रादात् ।

अथ राजा व्यासोक्तं गोदानमाहात्म्यं श्रुत्वा मृतकौरवाणां भूपतीनां च कल्याणाय गोदानमकरोत् । तद्यथाः—

गोभ्यो यज्ञाः प्रवर्तन्ते गोभ्यो देवाः समुत्थिताः ।
गोभ्यो वेदाः समुद्गीर्णाः सषडंगपदक्रमाः ॥
जलदानाद्दशगुणं दानमन्नस्य कथ्यते ।
तस्मादौषधिदानं च विद्यादानं ततोऽधिकम् ॥
ततः परं भूमिदानं तस्माद् गोदानमुत्तमम् ।
यतोऽनेनैव दानेन धर्मवृक्षस्य सिंचनम् ॥
न गोदानसमं दानं न गोदानसमं तपः ।
न गोदानसमं तीर्थं न गोदानसमो जपः ॥
वृषोत्सर्गो जनैः कार्यो गोवंशस्याभिवृद्धये ।
तस्य संरक्षणं पुण्यं गोदानेन समं स्मृतम् ॥
ब्राह्मणाश्चैव गावश्च कुलमेकं द्विधा कृतम् ।
एकत्र मंत्रास्तिष्ठंति हविरेकत्र तिष्ठति ॥
गावो मे चाग्रतः संतु गावो मे संतु पृष्ठतः ।
गावो मे हृदये संतु गवां मध्ये वसाम्यहम् ॥
प्रासादा यत्र सौवर्णा शय्या रत्नोज्वलास्तथा ।
वराश्चाप्सरसो यत्र तत्र गच्छंति गोप्रदाः ॥
तुष्टास्तु गावः शमयंति पापं प्रीतास्तु गावस्त्रिदिवं नयन्ति ।
संरक्षिताश्चोपनयंति वित्तं गोभिर्न तुल्यं धनमस्ति किंचित् ॥

ततो बन्धूनामपि यथाविधि स्वोचितां क्रियां विधाय नृपस्त्रीणां क्रियायै पटमण्डपानादिदेश । अथ नेत्राम्बुनिर्झरविनिर्जिततारहारा भूमिपालललना भागीरथीमवाप्य मृतबान्धवानां विधिवत् सलिलक्रियां कृत्वा कृतार्थतां संपादयामासुः ।

इति श्रीगद्यभारते स्त्रीपर्व समाप्तम् ।

---

ओन्नमः शिवाय ।

# अथ गद्यभारते शांतिपर्व प्रारभ्यते

अत्रान्तरे श्रीनारदाद्याः सुरर्षयः कृतोदकं कृताशौचं च युधिष्ठिरं द्रष्टुं समाययुः । अथ पुरोधसा संपूजितास्ते सर्वे मुनयो नृपमनामयं पृष्ट्वा तत्रोपाविशन् । ततो नारद प्रोवाच । राजन् ! दिष्ट्या निहताहितः कुशली विराजसे ? दिष्ट्या वृत्रसमाः शल्याद वीराः क्षयं याताः ? कच्चिन्न मोहान् कातरोचितां बन्धुविरहव्यथामवलम्ब्य विज नाभिनन्दसि ? निशम्यैवं मुनिवचनं धर्मराजो निःश्वस्य प्रोवाच । महामुने ! श्मशान सदृशेऽस्मिन् राज्ये मादृशः को मोदेत ? विभवार्थिभिरस्माभिर्गुरुसुहृत्पुत्रभृत्यसंबंधिन हताः । यदर्थं राजानो हतकण्टकं राज्यमीहंते । ते तु सर्वेऽत्र स्वजना हताः । नूनम श्रमोऽस्माकं निष्फलतां यातः । श्रीसूर्यसंभवः कर्णस्ते भ्राताऽऽसीदिति कुन्त्यवदत् तन्मे चेतः पुनः पुनर्दहति । अहो ! धनलुब्धैरस्माभिः स सहोदरो रणे निहतः अतो नरकापरपर्यायं राज्यमिदं धिक् । स महाशयो मात्राऽस्मदर्थे रहो याचितो बधग चरे पतितानप्यस्मान् काले काले ररक्ष । भगवन् ! तच्छापकारणं श्रोतुमिच्छामि निशम्यैवं विषण्णयुधिष्ठिरवचनं नारदः प्रोवाच । राजन् ! पुरा युष्मद् द्वेषात्कर्णो भा द्वाजं ब्रह्मास्त्रमयाचत परं फल्गुनवात्सल्याद् द्रोणोऽस्मै तन्नायच्छत् । राधेय ! ब्रा णेनैव ज्ञातव्यमेतद्रहस्यं नाऽन्येन । तच्छ्रुत्वा दुःखितः कर्णः सत्वरं विप्रवेषं विध सहसा जामदग्न्याश्रमं जगाम । ततस्तत्र परशुरामान्तेवासी स ब्रह्मास्त्रयाचको भू महेन्द्रगिरिसानुषु चिरं विचचार । अथैकदा स मुनिहोमधेनोर्निकारमकरोत् । ते काश्चिद् द्विजः कोपं कृत्वा तं शशाप । रे धन्विन् ! त्वया मोहाद्यन्मेऽपकृतम् । तेन रि सक्तस्य ते भूमिश्चक्रं ग्रसिष्यति । निशम्यैवं विप्रशापं दिवानिशं दह्यमानः स विपुलश्र रामं समाराध्य ब्रह्मास्त्रमवाप । ततः कदाचित् संजातविश्रंभो व्रतकर्शितो भार्गवः कर्ण शिरः कृत्वा सुष्वाप । अत्रान्तरे तीक्ष्णदंष्ट्रोऽष्टचरणश्चालर्कोनाम कृमिस्तं जंघायामदशत अथ गुरुप्रबोधचकितः कर्णो यावद् व्यथां सहते । तावत्तद्रुधिरासिक्तो भार्गवो नि

तत्याज । अथ किमेतदिति संभ्रान्तो रामो दष्टं राधेयमालोक्य चकितो बभूव । ततो रामेण दृष्टमात्रः कृमिः क्षणाद् भस्मीभूतो लोहिताक्षो राक्षसो भूत्वा प्रोवाच । ऋषिराज ! पुराऽहं गृध्रो नाम राक्षसश्चापलाद् भृगुभार्याभिलाषुकोऽभवम् । ततो मुनिना शप्त इमां पापयोनिं प्राप्तवानस्मि । अद्य त्वद्दर्शनान्मे शापनिवृत्तिर्जातेत्युक्त्वा राक्षसे याते भार्गवः कर्णमपृच्छत् । कस्त्वम् ? द्विजस्तु नाऽसि । निशम्यैवं शंकितो भूत्वा कर्णस्तस्मै निजनामादिकं निवेदयामास । तच्छ्रुत्वा गुरुस्तमशपत् । यद् ब्राह्मणच्छद्मना त्वं ब्रह्मास्त्रं प्राप्तवानसि । तस्मात् पर्यन्ते तन्न प्रस्फुरिष्यतीत्यभिधाय विरराम । ततो राधेयः सुयोधनमवाप्य तस्थौ । सोऽपि युष्मत्संघर्षसौहार्दादंगदेशाधिपत्वे च नियोजितः । ततः कलिङ्गाधिपतिचित्रांगदस्य कन्यास्वयंवरे सुयोधनस्तद्बाहुबलमाश्रित्य तां जहार । ततो दुर्योधने पूर्वमेव याते कर्णः क्रुधा योद्धुमुद्यतान् नरेश्वरान् नियुद्धेन जित्वा जरासंधतुलनामवाप । अथ संतुष्टो जरासंधस्तस्मै मालिनीन्नगरीं प्रादात् । ततोऽन्येपि नृपाः पारितोषिकं तस्मै समर्पयामासुः । सोऽथ पूर्वं तु वर्मकुण्डलहारिणा देवेन्द्रेण वंचितस्ततो ब्राह्मणेन शप्तोऽथ गुरुणा भर्त्सितः कुंत्या शान्त्यर्थं प्रार्थितः गांगेयेन तिरस्कृतः शल्येन तेजः शान्त्यै परुषागिरः श्रावितः कृष्णप्रेरणया च पार्थेन दिव्यास्त्रैर्हतः । राजन् ! अन्यथा तु तमूर्जितविक्रमं समरे को हन्यात् ? निशम्यैवं नारदवचनं युधिष्ठिरो विस्मयाविष्टो बभूव । ततस्तत्रत्या पृथा तनयव्यथां विधूय शोकार्तं युधिष्ठिरं प्रोवाच । वत्स ! रविणाऽर्थितोऽपि स विधिवशात्संधिं न बुबुधे । सततं युष्मद्द्वेषपरोऽभूदतः स मयाऽप्युपेक्षितः । साम्प्रतं समरे हतस्स भास्करलोकमगात् । अधुना त्वं वृथा मा शुचः । निराकुलत्वमवलंब्य राज्यं भुंक्ष्व । एवं बहुविधैरुपदेशैः प्रबोधितोऽपि राजा कर्णोपकारं स्मारं स्मारं शांतिं न लेभे । अहो ! मातृगूहनादग्रजोऽप्यस्माभिर्न रक्षितः । अद्यप्रभृति लोकेऽस्मिन् छिन्नसत्वा भविष्यंति नार्यः । जगत्यस्मिन् भैक्ष्येण किंवा फलमूलैश्चाऽयानिवारिता वृत्तयः संति । परंतु लोभात्ता विहाय घोरसर्वक्षयः कृतोऽस्माभिः । किम्बहुना । कुलाचारं विस्मृत्य श्वभिरिव बंधुविरोधः कृतोऽस्माभिः । वीरवृकोदरोऽर्जुनो वा पृथिवीं रक्षतु । अहन्त्वेतामायासविरसां कुत्सितजीविकां त्यजामीत्युक्तवति धर्मसूनौ कोपात्ताम्राक्षो धनंजयः क्षणं क्षितिमालोकयन् प्रोवाच । अहोनु ! दैवशप्तानां सुखान्यपि दुःखेषु विनिमयमायांति । सत्यमुक्तं विद्वद्वरैर्यद् विधिवंचिताः शुभोदर्केष्वपि शोचंति । राजन् ! तवाऽधुनायं सन्यासः साधुगोष्ठीषु हासाय भविष्यति । नष्टां श्रियमर्थयमानस्य प्राप्तां परित्यजतो दीर्घसूत्रस्य च ते सन्यासः प्रकारान्तरेणालस्यमेवाभिधीयते । लोकेऽतोऽन्यत् प्राज्ञविगर्हितं किम् ? यत् त्वं

क्लीब इव क्षिप्रमम्बरं त्यक्तुमुद्यतोऽसि ? अस्माभिस्तु नाद्यावधि कोऽपि भिक्षाशनो नृपो श्रुतो नचाऽवलोकितः । नरपाल ! त्वमविक्रियः स्वर्गलोकतुल्यां क्रमप्राप्तामिमां राजलक्ष्मी भज । यज्ञदानादिकाः क्रिया धनाढ्या एव कुर्वन्ति नाऽधनाः । संसारे यथा त्यक्तधनः शोच्यते तथा त्यक्तजीवितो नेति सत्यमवगच्छ । किम्बहुना । व्यसुर्मुहूर्तमात्रं निधनः परन्तु निर्धनस्तु सदैव मृतोऽस्ति । निशम्यैवमर्जुनवचनं युधिष्ठिरोऽब्रवीत् । वत्स ! ग्राम्यसुख-स्पृहां हित्वा मम वाक्यं शृणु । भोजनार्थं तु कंदमूलफलादिकं वनेषु सुलभम् । जलं सर्वत्र लभ्यते । वल्कलान्यपि यत्र कुत्र मिलंति । निवासार्थं गिरिषु कन्दरास्सन्त्येव । पुनः कथमहं संसारोच्छित्तये मुनिर्न भवानि ? एतदाकर्ण्य मारुती राजानमभ्यधात् । बत देव ! जडस्येव ते बुद्धिर्दुर्ग्रहे दृढाऽस्ति । पृथिवीमघातयित्वा च त्वया पूर्वमेव धीरेषा किन्न कृता नगरेऽग्निना निर्दग्धे जलाहृतयंत्रेण किम् ? पुरा वने तु त्वं ग्रामकामश्चासीरधुना च ग्रा वनोत्सुको भवसि । वने कुरंगमातंगा दिवं गता न दृष्टाः । यदि त्यक्तकर्माणो मुक्ता स्युस्तर्हि वृक्षा मुक्ता न कथं दृश्यंते ? इतिभीमसेनेनोक्ते धनंजयः पुनरुवाच । राजन् पुरा अजातश्मश्रवो बाला ब्राह्मणपुत्रका अकाले वनमेत्य प्रवव्रजुः । विलोक्यैवं संजात करुणः पुरंदरः पक्षिरूपं धृत्वा तदभ्यासे विघसाशिनो गृहस्थान् प्रशशंस । ततः हिरण्मयस्य शकुनेर्भाषितं श्रुत्वा चकिता बभूवुः । अथ तैः पृष्टः शकुनिर्विहसन् जगाद । वत्साः ! रूक्षाः कृशा विपिने कष्टवृत्तयश्च यूयं नित्यं दुःखैकभागिनो न विघसाशिनः । गृहमेधिनः सायं प्रातश्च विधिवदन्नं विभज्य ये भृत्यार्थिशेषं सदाश्नं ते विघसाशिनो धन्याः । तेषामपर्यन्तैः पुण्यैर्दिवि सनातना लोकाः संति । अश्रादिव प्र गृहस्थाश्रमिण एव जीवंति । एवं खगरूपेण वज्रिणा युक्त्या विबोधितास्ते द्विजा वनवा परित्यज्य गृहं समाययुः । महीपाल ! त्वं सर्वधर्माणामाचार्याणां च गतिज्ञोऽसि अत एवं धर्ममर्यादां त्यक्तुं नार्हसि । इत्यर्जुनेन कथिते माद्रीपुत्रावप्यूचतुः । राजन् निष्कण्टकराज्यं भज । साम्राज्यविजयी यज्वा च भूत्वा प्रजाः पाहि । यमाभ्यामेवमभि वल्गुवादिनी द्रौपद्यपि धर्मतनयं बभाषे । आर्यपुत्र ! पश्य त्रिदशत्विषस्ते भ्रातरस्तवा त्साहेन मृषा भुवं लिखन्ति । यैःसमरे दुष्करं कर्म कृतम् । तदद्य राज्यभागेन निष्फ रम्भदुःखिनामेषां प्रयत्नं सफलं कर्तुमर्हसि । राजन् ! अक्लीवचरितो भूत्वा नि भुजार्जितराज्यं भज । यतो विजयोत्थानां संपदां क्लीवा न पदमित्युक्ते कृष्ण जिष्णुः पुनर्नृपमभाषत । राजन् ! प्रजापालनादेव राजानः स्वर्गगामिनो भवन्ति लोका राजदण्डभयादेव स्वधर्मेषु प्रवर्तन्ते । दण्डाविवर्जिता जना अन्योन्यं स

इवाऽश्नन्ति । यत्र लोहितलोचनो दण्डः संनिहितस्तत्र देवयज्ञवेदैर्धर्मसंपदो वर्धन्ते । यत्फलं शान्ततेजसस्तपोभि र्लभन्ते तदेव धर्मश्राता राजा दण्डधारकः समधिगच्छति । पुरा राज्यं परित्यज्य वनं यियासुं जनकं धर्मवादिनी पत्नी प्रणयान्मधुरं प्रोवाच । राजन् ! वने न मोक्षोऽस्ति न च गृहे बन्धः । स्वकर्मप्रवृत्तानां विवेकिना मपवर्गः करस्थ एव । लोके मुण्डिताः परममुण्डितस्पृहा विरक्ता न भवन्ति किंतु वंचका गण्यंते । अन्तः कषायिणो धर्मवादिभिर्दम्भधर्मध्वजाः कथ्यन्ते । तस्मात् राज्येऽपि वर्तमानेन भवता संसृतिक्षयो लभ्य इति पत्न्याऽभिहितो मैथिलो जीवन्मुक्तदशामशिश्रियत् । अत्रान्तरे समागतः कृष्णद्वैपायनो राजानमवदत् । महीपाल ! राज्ञामकालेऽरण्यगमनं स्थितिविप्लवोऽभिहितः । पुरा सुद्युम्नप्रमुखा नृपास्तपःक्लेशै रसंस्पृष्टा यथावद् दण्डधारणात् प्रकृतितः सिद्धिं याताः । पुरा तपोवने श्रुतिस्मृतिविशारदौ शंखलिखिताभिधानौ मुनिवरौ भ्रातरावास्ताम् । अथैकदा लिखितो भ्रातुराश्रमे पादपात्फलान्यादाय चखाद । एवमालोक्य धर्मभ्रंशभयाकुलः शंखस्तमभ्येत्य प्रोवाच । भ्रातः ! किं त्वं परफलाशनपापं स्तैन्यवन्न जानीषे ? त्वमितो गत्वा सत्वरं स्वपापं राज्ञे निवेदयेति तेनोक्तो लिखितः सुद्युम्ननृपमगात् । ततः सः स्ववृत्तान्तं तस्मै विनिवेद्य न्यायमपृच्छत् । तच्छ्रुत्वा राजोवाच । भगवन् ! विपुलव्रतस्त्वमेव धर्मे प्रमाणम् । मम वरात् त्वं शुचिरसि गृहं गच्छ । एवं स राज्ञा मुच्यमानोऽपि सदाचारभ्रंशभीतः पुनः पुनर्नरेश्वरं दण्डं ययाचे । ततः स महीपतिस्तस्याग्रहातिशयात्करच्छेदमादिदेश लिखितस्य । अथ छिन्नहस्तः स हर्षमवाप्य भ्रातुरन्तिकमयात् । ततः शंखगिरा स नद्यां स्नात्वा तपोयोगाज्जातकरद्वयः प्रशान्तानुशयज्वरश्च बभूव । अथ सम्यग्दण्ड धारणात्सुद्युम्नोऽपि तस्विनामिव समुचिताँल्लोकानवाप ।

एवं भूपाल ! क्षात्रधर्मे स्थितस्त्वं प्रजाः पाहि । संसारे कालकृतं क्षयमवलोक्य शोके मनो मा कृथाः । भवभ्रमोऽयं प्रत्यहं कालकलाजालैश्चित्रितो भूत्वा समुत्पद्यते च प्रलीयते । पुरा सेनजिता राज्ञा प्रोक्तम् । यद् दुःखे दृढं मनः कुर्यात् । धृतिहीनानां शोचतां च कूचिच्छांतिर्न जायते । नृणान्धनैर्धनानीव दुःखैर्दुःखान्यायांति । जगति जन्तूनां काले काले फलानामिव भवाभवमालोक्य कः कालज्ञोऽनुशोचति ? पुरा जनकेन पृष्टोऽश्मकाभिधो ब्राह्मणो जगाद । राजन् ! विवेकिनः स्वभावनश्वरान् भावान्न कदापि शोचंति । शरीरायुर्धनजातितारुण्यानि कालवैचित्र्यान् नानारूपविपर्ययं भजन्ते । उच्चा नीचत्वमायांति । संहता विशीर्यंते । निम्नानि च समुन्नता भवंति ।

हीनवंशाः कुलीनत्वं धनिनश्च दरिद्रतां यांति । मूर्खा वैदुष्यं सुभगाश्च दौर्भाग्यमधि गच्छंति । राजानः स्वल्पायुषो दरिद्राश्च शतायुषो दृष्टाः । रसायनविचक्षणा जरा-भग्ना विलोक्यंते । लोके धनिनो व्याधिसंतप्ता दरिद्राश्च निरामया विचरंति । आयु र्वेदविदस्तरुणा एव पंचत्वं यान्ति । मूर्खाः सदाचारसम्पन्नाः पण्डिताश्च धर्म-विवर्जिताः प्राप्यन्ते । किं बहुना । चतुर्मुखप्रभृतयो देवा अपि कालकटाक्षलक्षितं रक्षितुं नहि क्षमा अभूवन् । कालपण्यगृहे श्रीमतां हीनवित्तानां धीमताञ्जडचेत साञ्च तुल्यमेव निरनुरक्तः क्रयोऽवलोकितः । भवकाननेऽस्मिन् कालानिलविलोला-नान्देहिनाम् वृक्षाणामिव नित्यं मिथो गमागमा जायंते । यद्यकस्मात् संगतो दैवा-द्विनश्येत् । तत्र जंतोः सततं गतागतं विलोक्य धीमान्न शोचति । विवेकिभिः किल वियोगेषु संतापो न कार्यः । यतो भावाभावौ न चिरस्थायिनौ । अथ महामुनिर-श्मक एवमुपदेशं कथयित्वा विरराम । अथ राजा युधिष्ठिरो हितोपदेशं श्रुत्वाऽपि यदा न शान्तिमवाप । तदाऽर्जुनप्रेरितो भगवान् पुण्डरीकाक्षो धर्मसूनुं वक्तुमारभत । राजन् ! विषादमास्थाय वृथा शरीरशोषणं मा कृथाः । हतवीराणां शोकात्पुनरागमोऽसंभवः । यतो निस्सीम्नि संसारेऽस्मिन् सर्वे यान्ति । कः केन शोच्यते । सर्वो मोहादात्मान मक्षयमभिमन्यते । यत्पुरः स्थितनाशोऽपि नष्टान् शोचति । ते जनास्ते प्रभावास्ताश्च प्रज्वलिता राजश्रियः कालेन हेलया किल स्मृतिशेषताम् प्रापिताः । पुरैष भगवान्नारदः सृंजयं नाम भूपालं पुत्रशोकाकुलं कृपया समाश्वासयामास । राजन् ! प्राप्तावधिं पुत्रं कि मर्थमनुशोचसि ? किम्बहुना । सर्वमिदञ्जगदस्माभिः सह पर्यन्ते न भविष्यति । पुरा मरुत्तो नामपृथिवीपालो बभूव । यस्य वृहस्पतिभ्राता संवर्तो याजकोऽभवत् इन्द्रश्च स्वर्णं ववर्ष

एवं सुहोत्रो महीपालोऽपि कथाशेषत्वमागतः । यः कांचनवृष्टिभिरिमां वसुमतीं यथार्थां चक्रे । रथिवरो वृहद्रथोऽस्तं यातः । यस्य यज्ञे देवराजः सोमं पीत्वा मुदमया सीत् । शिविरौशीनरः पृथ्वीमेकच्छत्रां शशास । सोऽपि सर्वदातॄणामग्रगण्यो भूत्वा कीर्ति शेषतां ययौ । यो राजसूयशतेन तथाश्वमेधसहस्रेणेजे स भरतोऽपि कालेन त्रिदिव मगात् । यत्तपसा जान्हवी शङ्करशिरः समवाप्य भरतखण्डेऽवतीर्णा स भगीरथः काल मासाद्य दिवं प्रयातः । यस्य हिरण्मये यूपे त्रिदिवौकसो ननृतुः स दिलीपनरेश्व रोऽपि स्मृतिदशां प्राप्तः । यस्य संग्रामविक्रमं शक्रादयोऽपि देवाः प्राशंसन् । स मान्धा ताऽपि पुरंदरपुरातिथिर्बभूव । यो वीरो देवासुररणे राक्षसाञ्जघान । स ययातिरपि काले प्रलयं प्रयातः । नृपा यच्छासनं माल्यमिवाऽवहन् । सोऽम्बरीषपार्थिवोऽपि यशःशरी

समाविशत् । यस्य शक्रवर्चसां पुत्राणां कोटिशतमभूत् । स शशविन्दुर्नरेश्वरोऽपि स्वर्गारूढोऽभवत् । यः कांचनमयीं महीं सुपात्रेभ्यः प्रादात् । स गयाख्यो नरपतिर्देवलोकमियाय । यस्य यज्ञेषु स्रुतपशुचर्मभिश्चर्मण्वती नदी प्रवृत्ता स रंतिदेवः स्वर्गलोकमयासीत् । येन सागराः खानिताः । स सगरोऽपि नाम मात्रं धरातले रक्षित्वा दिवमगमत् । यः पृथुर्धनुष्कोट्या पर्वतान् पृथगकरोत् । सोऽपि प्रतापवान् प्रियविग्रहं तत्याज । किं बहुना ! यो देवगणैरपि गीयमानगुणो दशकण्ठकुलान्तको दाशरथी रामोऽभवत् । सोऽपि पर्यन्तपदवीं यातः । एवमसंख्याता भूपालाः कालेन कवलीकृताः । सृंजय ! मद्वाक्यात्तव सुतो जीवत्वित्युक्त्वा कृपासागरो नारदः कनकष्ठीविनं तं सुतं जीवयित्वा सहस्रायुषं चक्रे ।

एतदाकर्ण्य राजाऽपृच्छत् । चतुर्भुज ! सृंजयस्य कांचनष्ठीवी पुत्रः कथमभवत् ? वैकुण्ठोऽब्रवीत् । पुरा मर्त्यलोकविहारिणौ नारदपर्वतौ सृंजयभूपतिगृहेऽतिष्ठताम् । ततस्तौ हृद्गतं भावं मिथो वक्तव्यमिति संविदं चक्रतुः । अत्रान्तरे सृंजयस्तत् सपर्यायै लावण्यवतीं सुकुमारीन्नाम कन्यकां समादिशत् । ततः कदाचित् मनोरमान्तां परिचरन्तीं दृष्ट्वा नारदस्स्मराकुलोऽभवत् । अथ पर्वतो लज्जया गूहमानस्य तस्य हृद्गतभावं ज्ञानचक्षुषा विवेद । ततो मर्यादाभ्रंशकुपितः स मातुलं शशाप । यः सुकुमार्या पतिर्भविष्यति स वानररूपमवाप्स्यतीति तेन रुषा शप्तो नारदः कोपाद् भवानपि स्वर्गगो माभूयादित्यशपत् । ततो नारदः सृंजयेन वितीर्णां कन्यां समासाद्य विवाहसमये क्षणाद्वानराकृतिर्बभूव । पतिव्रता सा तद्विधभर्तारमासाद्याऽपि निर्विकारमनसा तं नेत्रामृतनिर्भरं मेने । तावथ मन्युविप्लवे प्रशांते मिथः शापं शमयित्वा विक्रियां परित्यज्य च स्वस्थौ बभूवतुः । ततस्सा सुकुमारी त्यक्तवानररूपं नारदं चिरेण सिषेवे । अतऊर्द्ध्वं शेषां कथां स्वयं नारदो वदत्वित्याभिधाय श्रीकृष्णचन्द्रो विरराम । तच्छ्रुत्वा तत्रत्याः सर्वे विस्मयाविष्टा बभूवुः ।

अथ राज्ञा पृष्टो मुनिरुवाच । राजन् ! ततोऽहं पर्वतेन सह सृंजयगृह उषित्वा परमसन्तोषमगमम् । अथाऽस्मद्वरात् सृंजयस्य यः कांचनष्ठीवी पुत्रोऽभवत् । तं शतक्रतुर्न सेहे । ततः कदाचिज् जान्हवीतीरे यदृच्छया केलिसक्तं तं शिशुं सुरपतिर्व्याघ्ररूपिणा वज्रेण जघान । अथ सृंजयस्तं राजीवलोचनं सुतं हतं दृष्ट्वाऽतीव विह्वलोऽभवत् । ततोऽहं प्रलापमुखरं क्ष्मापं विलोक्य कृपया तत्पुत्रं स्वर्णष्ठीविनमजीवयम् । सोऽथ मद्वरात् सहस्रायुर्वसुन्धरामिमां भुक्त्वा कालेन त्रिदिवमयासीत् । राजन् ! लोकेऽस्मिन् देहिनः स्थायिनो न संति । जातस्य मृत्युर्ध्रुवो मृतस्य च ध्रुवं जन्म जानीहि ।

एवं व्यासनारदकेशवैः प्रबोधितोऽपि विलपन् युधिष्ठिरः प्रोवाच । किल्विषसंकटे-

ऽस्मिन् पतितं लोभान्धं मान्धिक् । येन भोगाशया गुरुबन्धुसुतक्षयः कृतः । महाशयाः इमां पातकिनीं तनुं बन्हौ पुनः पुनर्हुत्वाऽपि भीष्मबधपातकं नो न क्षयं यास्यतीति मन्ये निशम्यैवं युधिष्ठिरवचनं धर्मशास्त्रज्ञो व्यासोऽवदत् । राजन् ! संग्रामजीविनां राज्ञां शत्रुबधः सहजधर्मः । त्वं कुलोचितं कर्म कृत्वा वृथा विषादं मा कृथाः । क्वचि कीर्तनैः क्वचिदनुतापैः क्वचित् प्रायश्चित्तैः क्वचिद्दानैः क्वचित्तीर्थाभिषेकैश्च पापा निष्कृतिर्विहिताऽस्ति । राजन् ! यदि त्वं निजधर्मपरित्यागाद्विशंकसे । तर्हि हयमेध यजस्व । हतनाथा योषितः प्रजाश्च पालयेतिब्रुवाणो महर्षिर्नृपेण पृष्टः पुनर्जगाद राजन् ! सत्कर्मणामकरणान्निन्दितानां सेवनात् पश्चात्तापमनासाद्य च नरः प्रायश्चित्तमर्हति कपाली दिगम्बरत्वमवलम्ब्य नरो द्वादशसमा भैक्ष्यञ्च चरँस् तीव्रब्रह्महत्याभयाद्विमुच्यते देहिनो विपुलदक्षिणैर्यज्ञैर्गोसहस्रप्रदानैश्च महापापानि किल तरंति । सुरापोऽग्निसदृशीं सु पीत्वा पापान्निस्तारमेति । गुरुतल्पगो बन्हिबर्णशिखाशायी मुच्यते । गुरुपातकं क्वाऽ भृग्वग्निनिपातेन महीदानेनाऽपि क्षीयते । स्त्रीणां प्रायश्चित्तं न विद्यते । यतस्ता रज संवृताः । नदीवत् तासां शुद्धिः प्रवाहेणैव भवति । भक्ष्याभक्ष्यविचारेण किं वा कार्या कार्यविभेदतो विहिताऽविहितोदीर्णश्चाऽयं धर्मसंकरोऽतिसूक्ष्मः । राजन् ! निजरा स्वीकृत्य प्रजाः पालय । संदेहनिवारणार्थं भीष्ममुपगच्छ । स ते धर्मान् वक्ष्यती द्वैपायनेनोक्तो यदुपतिमतमनुसृत्य धृतराष्ट्रादिकान् पुरस्कृत्य च राजा नगरं प्रविवेश। त प्रकृतिभिः पूज्यमानः सूतमागधवंदीजनैश्च गीयमानो राजभवनमासाद्य सभामध्यतिष्ठत अथ पुरोहिताग्रगण्यं धौम्यं संपूज्य तत्रोपस्थितान् ब्राह्मणान् प्रणिपत्य च तेभ्यः शु शीर्वादान् गृहीत्वा स्थिरतां प्रपेदे । यतः शास्त्रवाक्यानि वृद्धोपदेशाश्च शांतिं स्थापयंति

अत्रान्तरे दुर्योधनसुहृत् त्रिदण्डस् त्रिशिखश्च चार्वाको नाम राक्षसः कपटमु वेशं धृत्वा धर्मजमभ्येत्य प्रोवाच । राजन् ! ब्राह्मणाज्ञया त्वां वच्मि । बन्धुमित्र ध्वस्ततेजसश्च ते राज्येन किमिति ब्रुवाणे चार्वाके युधिष्ठिरोऽतिशयेन विषण्णोऽभव एवमालोक्य ज्ञानचक्षुषो विप्राः कोपं कृत्वा राजानमवदन् । महीपाल ! अयं चा नाम राक्षसो दुर्योधनसखः । विश्वासोऽस्य वाक्ये सर्वथा त्वया परिहर्तव्य इत्य धाय हुंकारेणैव तं भस्मसाद् द्विजाश्चक्रुः । एवं ब्राह्मणकोपेन तस्मिन् रजन निर्दग्धे शौरिः स्मयमानोऽब्रवीत् । एष खलो विरंचिवरात् सर्वभूतानामबध्य मवाप्य ब्राह्मणकोपाग्नेरधोऽद्य बभूव । एवमाकर्ण्य गोविन्दवचनं सर्वे सभासद संतुष्टा बभूवुः । अथ वृत्रे हते देवराजस्येव दिव्यविधिनाऽजातशत्रोरभिषेकोत्स

भवन् । तस्मिन् समये जयश्रिया परिष्वक्तः सुमेरुविपुले पीठे च समासीनो नृपः प्रदीपसन्ध्या रुचिरो दिवाकर इव व्यराजत् । अथ राजा गान्धारीपुरस्सरं धृतराष्ट्रं दैवतवत् संपूज्य यौवराज्ये भीमसेनं मंत्रकार्येषु विदुरं दिग्विजयेषु धनंजयं व्ययचिन्तासु संजयं सैन्य-पालने नकुलं ब्राह्मणसत्कारेषु धौम्यं गृहकृत्येषु सहदेवं शेषेषु समुचितेषु कार्येषु च वृद्धामात्यान् कल्पयामास । ततो राजा गोविन्दं स्तुत्वा महार्हरत्नरुचिरं दुर्योधन-निवेशनं भीमाय दासीसहस्रयुतं दुःशासनभव्यगृहं च पार्थाय प्रायच्छत् । ततश्च-क्रायुधमतमवलम्ब्य शेषेभ्योऽप्येवं कौरवावसथावलीं विभज्य लब्धप्रशमनं चक्रे । अथ राजा यथाविधि बन्धुश्राद्धं विधाय तेभ्यः प्रपाकूपनिपानाङ्कान् धर्मान् समकल्पयत् । अथ प्रभाते राजा गान्धारीं पुरस्कृत्य धृतराष्ट्रं पूजयित्वा स्वां जननीञ्च ववन्दे । ततो वासवो ब्रह्माणमिव पार्थमन्दिरस्थितं श्रीकृष्णचन्द्रं द्रष्टुमगात् । तत्र पीताम्बरं कन-कासनोपविष्टं किमपि ध्यायन्तं च दृष्ट्वा जगतीपतिर्जगाद । केशव ! कच्चित् तव शर्वरी सुखेन व्यतीतेत्युक्तः श्रीकमलाकान्तो यदा ध्यानस्थितः किमपि न जगाद । तदा राजा पुनरुवाच । सर्वभूतात्मन् ! ध्येयोऽपि त्वं ध्यायसीति विचिन्त्य विस्मया-विष्टो भवामि । क्वचिज्जगतां कुशलमिति भूपतौ वादिनि विश्वरूपीषन्नयने समुन्मी-ल्य तमभ्यधात् । राजन् ! अद्य शरशय्यागतो भीष्मो मां स्तोतुं प्रवृत्तः । सर्वमनी-षिमान्यं तं मनसाहं यातः । स मे बहुमतस्तस्मात्तमहं चिन्तयामि । ये मां देहत्यागे स्मरन्ति तानहमपि सततं स्मरामि । दिवाकर उत्तराशां प्रयातः । तस्मान्मुमुक्षो र्देवव्रतस्य विमुक्तयेऽयं कालः समुचितः । श्रुत्वैतद्राजा सविनयं प्रोवाच । भगवन् ! अवश्यं भीष्म-स्तव दर्शनमर्हति । तदेहि तेजोनिधिं तं द्रष्टुं गच्छामः । सोऽशेषसंशयच्छेत्ता मे-ज्ञानं प्रवक्ष्यतीति धर्मराजेनोक्तः कृष्णो भीमसात्यकिपार्थान्पुरस्कृत्य रथमारुह्य च प्रतस्थे ।

अत्रान्तरे सर्वमुनिगणवृतो भीष्मो विष्णुं ध्यात्वा तं स्तोतुमारभत । संसारमरुसंता-पनिर्वाणसुरशाखिने हरये नमोऽस्तु । भगवन् ! संवित्किरणशालिनं सूर्यात्मानं त्वां प्रणमामि । प्रभो ! गतमृत्यवो ज्ञानिनो यमीक्षन्ते तं परं पुरुषमहं शरणं प्रपद्ये । देव ! मोहाय संहारकर्त्रे ज्ञानाय तिमिरच्छिदे जटिने रुद्राय नमोनमः । इन्दीवरवनश्यामे स्फुरत्किंजल्कविभ्रमे च वाससी बिभ्राणं नेत्ररसायनं विष्णुं नौमीत्युक्त्वा शान्तनवो मनसा हरिं प्रणम्य दध्यौ । अस्मिन्नेवावसरे केशवः पाण्डुसुतान्पुरस्कृत्य संजयादिसमेतस्तत्र समाययौ । ततः शौरिः शरशायिनं गाङ्गेयमवलोक्य रथादवततार सर्वैः सह । ततः सर्वे पितामहं प्रणम्य प्रशंसन्तः समुपाविशन् । अथ पुण्डरीकाक्षः शरःश्रेणीव्यथाकुलं

शान्तनवं दृशा निर्वापयन्निव प्रोवाच । महावीर ! कच्चित् वज्राग्रदारुणशरस्यूतस्य ते विमलज्ञानं ब्रह्मदर्शनं न विलुप्यते ? शौर्यशालिशेखरं सर्वगुणाढ्यं त्वां या वसुन्धरा वहति तां धन्यामहं मन्ये । देवव्रत ! शरार्दिते त्वयि व्यथितो धर्मनन्दनो गाढानुशय मवाप्य न क्वापि धृतिं लभते । सर्वज्ञ ! मम गिरा त्वं प्रसन्नकरणज्ञानपटुर्भूत्वाऽस्मै सर्वान्धर्मान् कथयेत्युक्त्वा गरुडध्वजस्तं करामृतकरालुप्तव्यथं चक्रे । अथ कृष्णगाङ्गेययोः मूर्ध्नि पुण्यवृष्टिरपतद् गगनात् । विलोक्यैवं व्यासनारदप्रभृतयो मुनयः स्मयेन तौ मुहुर्मुहुः प्रशशंसुः । ततः श्वोऽहमखिलान्धर्मान् वक्तास्मीतितेनोक्तो जनार्दनो जान्हवीसुत मामंत्र्य पाण्डवैः सह प्रतस्थे । अथ शौरिः पाण्डुपुत्राश्च निजवेश्मन्युषित्वा प्रातः शांत नवं द्रष्टुं रथैः पुनः समाययुः । ततस्ते तूर्णं रथान् विहाय मुनिगणसमेतं पितामहं प्रणिपत्य परिवार्य च तत्रोपाविशन् । अथ हरिः शान्तनवमनामयं पृष्ट्वोवाच । विद्वन् धर्मसूनवे स्वधर्मान् कृपया कथ्यताम् । तच्छ्रुत्वा सोऽब्रवीत् । यदुनाथ ! युष्मत्प्रसादा स्वस्थोऽहम् । सम्प्रति तव शासनाद् वक्ष्यामि । किन्तु धर्मनिष्ठो युधिष्ठिरो माम् पृच्छतु । एवमाकर्ण्य कृष्णप्रेरितो राजा ह्रियोपसृत्य भीष्मचरणौ ववंदे । ततस्तेन प्रेरितः मूर्ध्न्युपाघ्राय पृच्छ मामित्यभाषत । अथ धर्मसूनुः पूर्वं प्रजापालनधर्मं पप्रच्छ । तच्छ्रुत्वा गांगेयो मनसा हरिं प्रणम्य वक्तुमारभत । पुत्र ! प्रथमं त्वातिकंकणकेयूरहारं राजविभू षणं नित्यं द्विजातिमान्यत्वं प्रजापालनरंजनंचाऽस्ति । निग्रहानुग्रहाय च विप्रा एव परमदै तम् । तद्वाक्यान् नृपश्रियो भवंति च न भवंति । यथाश्मतः शस्त्रं तथा ब्राह्मणतः क्ष जातम् । इयं पूर्वा राजवृत्तिर्यन्न तीव्रं न च मार्दवं भजेत् । यथा ग्रीष्मे दिवाकरो दुःस्सहो मन्ते च सेव्यो भवति । राजसंपदो हितैर्मान्यैश्च सेवकै रक्ष्यन्ते । परं निरंकुशा न श्वरास्तानेव हि नाभिमन्यंते । यथा नारी लावण्येन शोभते तथा राजाऽपि विन प्रतिष्ठितो भवति । यत्र सुजनवेष्टितो राजा दुर्जनसंगान् परिहरति । तत्र स्वयमेव संप समायांति । यस्मिन्देशे राजा न्यायसंगतं मंत्रिवचनं शृणोति । मन्त्री च राजादेशमाक यति । तस्मिन्देशे प्रजा न कदाऽप्यवसीदंति । संयतधीः सन्मंत्रशाली च राजा योगि समस्तचित्तग्रहणं कृत्वा राजलक्ष्मीं दृढां कर्तुं शक्नोति । सेवका मृदुलस्वभावम्, अधी विनोदरसिकम्, हास्यसंपन्नं, च भूपालं तृणोपमं मन्यंते । बहुधा लघुचेतसो राजकिं नर्मसाचिव्यमवाप्य धर्ममर्यादां नाशयंतः कामचारिणो भवंति । चाटुकाराः पूर्वं नृपं शवर्तिनं कृत्वा राजतुल्यविभूषणाश्च भूत्वा राजस्त्रीसंगमं यान्ति । यथा मूषिकाः खनिमिव तथा ते राज्यं सुषिरं कुर्वते । नृपसेवका राजयोग्यान् हयगजरथानारुह्य भूपतिना

द्धन्ते भृत्यताञ्च विस्मरंति । बहुदत्तन्न मन्यंते । दुर्लभानि याचंते । स्वामिचरितन्निन्दंति । मन्त्रं च बहिर्विकिरंति । राजदेयं हरंतो निजकर्मसु लज्जंते । लोके च भूपालस्य वश्यतां मिथ्यैव प्रथयित्वा स्वकार्यं साधयंति । भूतानि मंत्रैः शाम्यंति । मृत्युरपि दानपुण्यादिभिर्निवर्तते । किन्तु प्रजादलनासक्ता राजवल्लभा न कथंचिदपि विरमन्ते । सहायवान् प्रजाहितनिरतः स्थिरारंभो निरालस्यो गूढमंत्रश्च नृपो राज्ये विराजते । यदि शशांकयशसो राज्ञः प्रतापो न स्फुरेत्तर्हि गाढतमोवृतमिमं लोकं को हि पश्येत् ? कलिकर्दमेऽस्मिन् धर्मोऽवश्यमेकचरणः । किंतु भूमिपालानां दण्डावलंबनं विना सोऽपि सहसा प्रस्खलेत् । पुराऽराजके लोके यदा धर्मविल्पवोऽभवत्तदा देवप्रार्थितो विधिर्जिष्णुं तुमुलं विरजं च मानसं सुतमसृजत् । स भगवता प्रजापालने नियुक्तोऽपि तच्छासनमनादृत्य संन्यासविरतो बभूव । ततः कीर्त्यमानस् तत्पुत्रोऽपि तथैव तपसे गतः । एवं तत्सुतः कर्दमोऽपि विरक्ततामवलंब्य काननं जगाम । अथाऽनंगनाम्नस्तत् सूनोर्योऽतिबलः पुत्रोऽभवत् । स मुनिप्रियां मृत्युतनयामवाप्य तस्यां वेनुनामकं सुतमुत्पाद्य च तपसे जगाम । राजाऽसौ वेनोऽतिक्रूरोऽभवत् । विलोक्यैवं मुनयो मंत्रपूतैः कुशैस्तं जघ्नुः । ततस्ते महर्षयस्तस्योरुं दक्षिणं ममंथुः । अथ तद् देहाद्यो ह्रस्वकायो नरो न्यसरत् । स तै र्निषीदेत्युक्तो निषादजनकोऽभवत् । ततो मुनयो वेनदक्षिणपाणिं निर्मथ्य तस्मात्सायुधं शक्रविक्रमं पुरुषमुत्पादयामासुः । सोऽथ मुनिशासनाद् दण्डनीतिं समासाद्य सगिरिसागरां पृथ्वीं शशास । अथो लोकपालसखो हरिस्तमाविवेश । ततः प्रभृति भूमिपाला नरदेवा इति ख्याता बभूवुः । किं बहुना । राजमानगुणे तस्मिन्नाजनि दमां प्रशासति सम्यग् दण्डभयात् प्रजाः स्वकर्मनिरतास्तस्थुः । राजन् ! तेन राजस्थितये या दण्डधारता नियता । तया लोकाः प्रकाशंते । तथा न सूर्येण न चंद्रेण न चाऽग्निना प्रकाशिता भवंति यथा सुराजेन प्रजाः । धर्मपरे राज्ञि सम्यक् प्रजास्त्रातुं व्यवसिते चातुर्वर्ण्यविभागजाः स्थितयो न कदाऽपि विलुप्यन्ते । यथाविधि आश्रमादाश्रमान्तरं प्रयातानां जनानां चातुराश्रम्याविहिता सिद्धिर्विघ्नै र्न विहन्यते । पुरा मान्धातृनृपतियज्ञे विष्णुः शक्ररूपं धृत्वा स्वयमाययौ । अथ स राजा तं प्रणिपत्य पप्रच्छ । कृपसागर ! धर्ममुपदिश । यतो भवद्विधो ज्ञानदाता लोकेऽतिदुर्लभः । निशम्यैवं शक्रोऽवदत् । राजन् ! राजनीत्यैव प्रजाः स्वकर्मसु प्रवर्तन्ते । तस्मात् श्रुतिस्मृतिसदाचारे राजवृत्तयः कारणम् । अस्य जगतो धर्मज्ञनृपतिस्त्राता । अतएव लोकपाला अपि तमात्मतुल्यममन्यंत । नृपतिः पिता प्रजानां प्रोक्तः । अराजकं जगत् सीदति । म्लेच्छमध्येऽपि निवासो वरं परन्नाऽराजके देशे । अराजके देशे बलिनो दुर्बलं

घ्नन्ति । कामुकाः परस्त्रियः सेवन्ते । क्रूराश्च मिथो मांसं खादन्ति । पूर्वमराजकाः प्रजाः स्थितिविप्लवे निमग्नाः बभूवुः । विलोक्यैवं सुप्रबन्धार्थं जनता वैवस्वतमनुं नृपं चक्रे । एवं सुमनसा कौशल्येन राज्ञा पृष्टो बृहस्पतिर्लोकानां दण्डधारं परायणं बभाषे । अराजकेषु राष्ट्रेषु पावको हव्यं न वहति । युगधर्मा न प्रवर्तन्ते । न च वासवो वर्षति । यावत्सर्वदेवमयो राजा प्रजा न रक्षति तावन्नृणां कुतो धनं कुतो दाराः कुतश्च शरीरम् । यथा सर्वावलोकने सूर्यः पापनिग्रहे यमो भरणे कुबेरस्तथा पावकोपमो राजाऽपि प्रायश्चित्त शोधको निगदितः । यथा ब्रह्मस्वहारी नरकं प्रयाति तथा राजवृत्तिच्छेत्ता नृपहन्ता चापि न लभते सद्गतिम् । यत्फलं यज्वानो धर्मशीला स न्यासिन श्च लभन्ते तत्फलं नृप लोकानुरंजनादधिगच्छन्तीति देवगुरुवाक्यं निशम्यैव समहीपतिः स्वधर्मस्थाः प्रजाश्चि पालयित्वा दिवं जगाम । सदैवाऽप्रमत्तो राजा कोशदुर्गबलादिक्षयं शत्रुष्वनिर्दिशन् स्वसंश्र कुर्यात् । सर्वतो गुप्तमंत्राणां तथा गूढप्रणिधिचक्षुषां स्वस्थप्रकृतिसाराणाञ्च राज्ञां लक्ष्मीरन श्वरा भवति । अद्वेषो धर्मान्सेवेत । अदारुणः प्रीतिं त्यजेत् । अकर्कशोऽर्थान् लभेत अमदोद्धतश्च कामी स्यात् । अदैन्यः प्रियं वदेत् । अविकत्थो विक्रान्तःस्यात् । अकाम दयादाने सेवेत । कटुभाषणं च परित्यजेत् । अखलासंगी मैत्रः स्यात् । बन्धुभिः सह न युध्येत । शत्रून् नानास्त्रैर्विध्येत । सर्वमहिंसकश्च कुर्यात । असत्सु ज्ञानं न दिशेन् आत्मनो गुणान् न श्लाघेत । साधुभ्योऽर्थान् न हरेत् । दुर्जनञ्च न संश्रयेत । अवि चारेण न दण्डयेत् । संसदि न मंत्रयेत् । कदर्यान् न पूरयेत् । वैरिषु च न विश्वसेत् दारान् सदा रक्षेत् । ईर्ष्यालुर्न भवेत् । अवंचकः कलावान् स्यात् । नात्यन्तं कान्तां भजेत नित्यं पथ्यमश्नीयात् । अहितञ्च कस्याऽपि नाचरेत् । अस्तब्धोऽर्च्यान् सेवेत । मायया शि न भवेत् । दम्भादेवान् न यजेत । प्रशस्तां भूतिमभिलषेत् । धर्मविरुद्धां प्रीतिं न भजेत अरभसो दक्षो भवेत् । विफलाशां न कुर्यात् । निष्ठुरं न विभजेत । सर्वत्र न प्रहरेत अदोषेभ्यो न कुप्येत् । शत्रुषु पेशलो न स्यात् । किं बहुना । गुणैरेतैः संपन्नाः पार्थि लोके शुभ्रयशः समवाप्य राजलक्ष्म्या दिव्यहारतामुपयान्ति । दीर्घजीविनश्च भवंति

बुभूषता नृपेण सर्वदा ब्राह्मणा मूर्ध्नि कार्याः । यतो ब्राह्मतेजो युक्तं क्षात्रं दुःसहं भवति । पुरैडेन भूभुजा पृष्टो मारुतः प्रोवाच । पृथ्वीसमेतं सर्वं धनं ब्रा णानां विद्यते । विचिन्त्यैवं पृथिवीपतिर् महीमनिवेद्यैव ब्राह्मणेभ्यः स्वयं भोक्तुं नार्ह विद्वत्पुरोधसा कल्याणार्थं प्रेरितो नृपः शत्रुविजेता भवति । पुरा मुचुकुन्दो नाम सकला दिशो विजित्य रुद्रवयस्यं कुबेरमोजसा जेतुं ययौ । ततः समरे प्रवृत्ते बलव

गुह्यका अपि मुचुकुन्दपराक्रमेण क्षयमयासिषुः । एवमालोक्य रक्षितमंत्राय नृपाय कुवेरो वसुमतीराज्यं प्रादात् । राजन् ! प्रकारेणानेन क्षत्रिया ब्राह्मबलेन संयुक्ता एव विवर्धन्ते । धर्मज्ञो नृपो ब्राह्मणान् पुरस्कृत्य प्रजाः पालयेत् । यतो राजा प्रजानां पुण्यपापयोश् चतुर्भागहरः प्रोक्तः । यो नृपः संवृतमंत्रो भूत्वा प्रजाकार्याणि पश्यति । वदान्यत्वमानृशंसत्वं चावलम्बते तस्य क्वचिद् धर्मो न लुप्यते । राज्ञा सदा सदाचारसंपन्ना द्विजाः पूज्याः । तद्विपरीताः शूद्रवत् क्रूरकर्मार्हाश्च दण्ड्याः । पुरा वने यदा केकयभूपालो रक्षसा गृहीत आसीत् । तदा स निजचित्तमाश्वासयन् प्रोवाच । चित्त ! त्वया न भेतव्यम् । यतो मे राज्ये धर्मविप्लवो नास्ति । किं बहुना । क्षत्रधर्मे स्थितस्य मे नगरे नायज्वा न विकर्मस्थो न पापो न च कुलच्युतोऽस्ति कश्चित् । निशम्यैवं भूपवचनं स निशाचरः सहसा राजानं तत्याज । उक्तञ्च । सत्यशीलाः स्वधर्मस्थाश्च जनाः पराभवं न लभन्ते । पार्थिवः सर्वत्र न विश्वसेन् न च शंकेत । यतो हि लोके विश्वासी चातिशंकी नरः सर्वथा विपदां पदं भवति । भूभुजा न किलाप्तेष्वपि विश्वासः कर्त्तव्यः । विदितमेवैतद् यद् देहिनां शरीराणि चेतांसि च स्थिराणि न भवन्ति । राजा कोशमंत्रौ प्रयत्नतो रक्षेत् । स्वयं काले काले च गत्वा कार्यनिरीक्षणं कुर्यात् । पुरा भगवान् गरुडध्वजो नारदं बभाषे । मुने ! अहं वृष्णीनामान्हिकं चिन्ताभारं सहे । किमन्यत् गुणाढ्या अपि साभिमाना न मे मताः । बहुधा ते हितवाक्यं न शृण्वान्ति न च मन्यन्ते । एतच्छ्रुत्वा देवर्षिः केशवं प्रत्यभाषत । यत् सत्वसाराः पुरुषा एव गणकार्यं वहंति । धीरनृपा यथाशक्ति दानार्जवादिभिः संतोष्य लोकान् स्ववशे स्थापयन्ति । अर्थशास्त्रज्ञाः कोशेष्वार्जवं न प्रशंसन्ति । निशम्यैतन्नारदवचनं हरिरपि तथेत्यभ्यधात् । राजा विशुद्धसचिवेष्वपि सदा तदाचारं विजानन् चारैः कार्याणि निक्षिपेत् । नृपः स्वयं शुचिं कोषाध्यक्षं रक्षेत् । यतः कोशहारिणोऽमात्या गोप्तारं नैव सहंते । पूर्वं कोसलाधिपतेः क्षेमदर्शिनो नगरे कालकवृक्षीयो मुनिर्यदृच्छाभ्यागतो न्यवसत् । स राजा काकमादाय संचरन् सर्वपाक्षिणां राजोपजीविनां स्ववृत्तं च सर्वं बुबुधे । अथैकदा स मंत्रिणामकार्यं कोशलोपं च राज्ञे निवेद्य प्रत्यक्षं दर्शयामास । ततस् ते सर्वे राजसेवकाः संहत्य तं च कंटकं मत्वा निर्जनरात्रौ सुप्तवायसं बाणेन जघ्नुः । एवमालोक्य मुनिः प्रातरेव नृपमभ्युपेत्य प्रोवाच । भूपाल ! स्वस्त्यस्तु । त्वदनुजीविनां भयादहं साम्प्रतं गच्छामि । यो मां भवद्धितं वदन्नासीत् । स तैर्निहतः । किम्बहुना । मदर्थं यः शरः प्रक्षिप्तस्तेन स काको निपतितः । सम्प्रति विभेद्य सचिवान्पातयेति कथयित्वा मुनिर्विरराम । ततो राजाऽपि तद्गिरा कालक्रमेण ताञ्छोषयित्वा

दानेन भेदयित्वा च निष्कण्टकां श्रियं चक्रे । अतो नृपेण नीतिज्ञेन भवितव्यम् ।

एवं विचिन्त्य राजा कुलक्रमागतं राजहितैषिणं च द्रष्टारं कुर्यात् । यद्भयात्स कायस्था भिन्नसंहता भवंति । दासाधिपशतस्यैक उपरिचिन्तको भवेत् । तत् सहस्रस्य चाध्यक्षो यथावृत्तं राज्ञे निवेदयेत् । यदि प्राज्ञैरुपर्युपरि चिन्तका न क्रियंते । तर्हि राजो पजीविनो घोषग्रामपुरराष्ट्राणि भक्षयंति । एते विपर्यस्तालिपिक्रमादिभि र्लोकान् वंच यंति । किम्बहुना । गलगर्तगलद्गिरामेषान्नगराण्येव चुलकम् । विचार्यैवं नीतिज्ञ नरेश्वरो वेतालचेष्टितैस्तैः घट्यमानां पृथ्वीं रक्षेत् । पुरा यौवनाश्वमहीपातिमुतथ्य मुनिरवदत् । राजन् ! पृथिवीपालने पूर्वं कण्टक शोधनमत्यावश्यकम् । अनाथदुर्बला रक्षेत् । कृपणांश्चानुलेपयेत् । यतः कृपणाक्रन्दै राजसंपदो मूलान्नश्यंति । जनपीडना भूपार्थोऽप्यनर्थतां याति । एषा श्रीलता जनापवादपरशुप्रहारं कथमपि सोढुं न शक्नोति यत्र प्रजानां तीव्रपुण्यानि भवंति । तत्र वदान्यः सभ्यवान् वीरः कृतज्ञः सत्यवा पटुरभिजातश्च नृपतिः समुत्पद्यते । एवमाकर्ण्य मान्धाता पुनः पुनरुतथ्यं प्रशस्य तथै राज्यमकरोत् । येन यशः शरीरेणाऽद्यापि स जीवति । प्रकृतिरंजनादेव राजाऽभिधीयते ।

पुरा वामदेवमुनिः कोसलाधीशमुवाच । राजन् ! धर्मलोपेन राजलक्ष्म्यः सहस क्षीयंते । प्रणयक्रीतैः सुहृद्भिः सत्कारक्रीतै र्विद्वद्भि र्धनक्रीतैश्च सद्भृत्यैर्महीपति राजलक्ष्मी धार्यते । यो महीपतिः करुणाक्रन्दं श्रुत्वा भयात् प्रजास् त्रायते । नाऽविचार्य दण्डं सृजेत्स लोके सर्वप्रियपदं लभते । अतः परं राज्ञः किल्विषकारणं किमपि नास्ति यत् कुभर्तुरबलेव प्रजा विरक्ततां यान्ति । एवं मुनिवरवामदेववचनं श्रुत्वा स्वध स्थितो राजा प्रजानामतीव प्रियो बभूव । स एव नृपो धन्यो यं सर्वाः प्रजाः सदैव वांछंति

यो राजाऽसंनद्धविषमस्थक्षीणसैन्यभयार्दितैः सह न युध्यते । स धर्मपालोऽवश्य मेव जयश्रियं लभते । यथा स्वजनाग्रे शयने च निहतः क्षत्रियः शोच्यस्तथा विण्मूत्रक मृतः श्वा न शोच्यते । परैः सैन्ये विदारिते पुरो भृत्यजने च हते ये स्वयं क्षेमिणो यान्ति तान् क्षत्रियपांसनान् धिक् । युद्ध्यमानस्य यस्य शत्रवः पृष्ठं न पश्यन्ति स रणे ह नृपः स्वर्गमासाद्य शक्रेण सह स्पर्धते । पुरा अम्बरीषो नाम राजा यज्ञप्रभावाद् देवलो प्राप्य तत्र सुदेवाख्यं चमूनाथं श्रियाधिकं विलोक्य विस्मितो भूत्वा च शक्रं पप्रच्छ देवराज ! यथाधर्मं यथाशास्त्रं च वसुंधरां पालयित्वाऽहं तु त्वत्पुरीमिमां प्राप्तोऽस्मि । परं सेनापतिरयं सुदेवः कैर्दानयज्ञतपोभिरस्मानभिभूय सूर्य इव प्रभाभिर्विराजते ? एवमाक सुरपतिस्तं प्रत्यभाषत । राजन् ! येन कर्मणा त्वत्तोऽयं पृतनापतिराधिक्यमव

तच्छृणु । येन रणमखे शस्त्राग्नौ रुधिराज्ये धनुःस्रवे कबन्धयूपे च निजतनु र्हुता । सोऽयं वीरस्तन्महायज्ञप्रसादाल् लोकोत्तरमहिमानमध्यगच्छत् । निशम्यैवं विस्मितो राजा वीरविक्रमं प्रशंसन् मनसा मुहुर्मुहुस्तमपूजयत् । उक्तं च क्षत्रियो युद्धे सम्मुखमरणात् सद्गतिं लभते । पुरा देवराजेन राजनीतिं पृष्टो बृहस्पतिर्यथा राजश्री राज्ञां तडिद्भ्रमं न करोति तथोपायानुवाच । तत्रादौ मधुरवचसैव रिपुमूलक्षयं कुर्यात् । यतो घोरकलहेन लब्धोऽपि जयो जघन्य एव स्मृतः । शस्त्रमुद्धृतं संदेहाय, वाग्युद्धं कण्ठशोषणाय, निश्चित्यैवं लुब्धकः कुरंगमिव प्रियालापैः शत्रुं हन्यात् । देशकालज्ञो बलिनं रिपुं प्रणमेत् । अपचिते च काले तमेव हन्यादेवैषा राजनीतिः । साम्ना बलिनं सेवेत । दानेन लुब्धं साधयेत् । कुपितममात्यं भेदेन वशीकुर्यात् । हीनं च दण्डेन पातयेत् । प्रमादिनं सर्वोपायविहीनं कोशदुर्गबलोचितं सहानीकं च रिपुं तूष्णीं दण्डेन योजयेत् । सदा विरक्तसेवकान् विबुध्येत । स्वरहस्यं गूहेत । शत्रुछिद्रं च विचिन्तयेत् । विरक्तसेवको न भाषते । क्षमां निरीक्षते दानेन च न तुष्यति । एतदाकर्ण्य गुरुवचनं पुरन्दरः स्वात्मगुप्तः परान्वेषी च सावधानतमो बभूव । लोके उपायचतुष्टयज्ञाता नृपो हि चिरं नंदति ।

राजा दैवाद्विपदमवाप्य न शोचेत् । यतोऽनिर्वेदेन हारिता अपि संपदःपुनर्लभ्यंते । पुरा क्षेमदर्शिना नृपेण कालकवृक्षीयोमुनिः पृष्टोऽब्रवीत् । महीपाल ! विद्युद्विलासतरला राजलक्ष्म्यो देवानामपि भवंति । किं पुनर्मर्त्यानाम् ? यत्कृते श्रियमीहसे । तदायुष्यमपि नित्यं नास्ति । यदि ते स्वराज्ये वांछा प्रबलास्ति । तर्हि मौनं कृत्वा कृतांजलिस्तमेव मंत्रं सेवस्व । पूर्वं कोशमित्रयोश्च शनकैरुपचयं कुरु । तत्रादौ प्रियवादी भूत्वा विश्वासमुत्पादय । ततो दुस्तरेष्वकार्येषु तं पातयित्वा नानोपायैः स्वार्थं समुद्धरेदितिमुनिना प्रोक्तेऽभिजनोज्ज्वलो राजा नैतत् करोमीति जगाद । अथ नीतिज्ञोमुनिस्तस्य सत्यवतोभावमुपलभ्य स्वयं दूतो भूत्वा चं संधिमकारयत् । ततो मुनिवाक्येन वैदेहः क्षेमदर्शिना संधाय यथोचितं विभवं सुतां च तस्मै वितितार । यतो विचक्षणाः सहसा युद्धं न हि प्रशसंति ।

नीतिज्ञो राजा स्वगणं पालयेत् । परगणं च भेदयेत् । यतो गणास्सदा सम्यग्वृत्तेन सत्येनैव च वर्तन्ते । राजा स्वगणैस्तथा स्वसेवकैर्विजयते । संहतैस्तथोपेक्षितैश्च तैरेव विपद्यते । केवलं सत्यं न गण्यते सत्यम् । एवमनृतमप्यनृतं न भवति । किन्तु सर्वलोकस्य यद्धितं तदेव सत्यमन्यथातदसत्यं कथ्यते । राजा विभवमिच्छन् सत्येन सत्यव्रतं सेवेत । असत्यरतश्चाऽसत्येन चिकित्स्यः । यो राजा देवान् पितॄंश्च सेवते । प्रजाः पालयति । दंड्यांश्च दंडयति । स एव सर्वसुखं लभते । याजी, शुद्धसंकल्पः,

त्यागी, पात्रवर्षी, सर्वधर्मत्राता, पुण्यकर्मा, साधुसेवकः, दुष्टनिग्रही च नृपः परत्रेह घोरदुर्गाणि तरति। सदाचारस्तपस्वी प्रशान्तः सत्यवादी नारायणपरायणश्च महीपा दुःखसागरं तरति। राजा मृगमुखव्याघ्रान् व्याघ्रमुखमृगांश्च नरान् यथावद् विज्ञाय व्यवहरे अन्यथाऽनिष्टापत्तिः प्रातिवेश्मिकेव समीपस्थैव। पुरा पूरिकायाम् प्रेरकाख्यो राजा बभू स स्वभावकृपणोऽतिक्षुद्राशयः क्रूरश्चासीत्। कालेन पंचतां यातस्स जम्बुकयोनिमवा तत्र पूर्वपुण्यप्रभावाज्जातिस्मरत्वमवाप्य परैराहृतमपि मांसं परित्यज्य कंदमूलफलाश भवत्। अथैकदा श्मशाननिलयं शुचिव्रतं तं विलोक्य सर्वे गोमायवस्तद्विचेष्टितं निन्द प्रोचुः। अहो! श्मशानेऽस्मिन् वसताऽपि जडबुद्धिना त्वया रसायनोपमं स्वादुमांसमिदं परित्यक्तम्? सजातीय! सर्वमिदं तव विपरीतं दृष्ट्वा सतां हृदयं दुनोति। किं बहुन यदस्मिन् घोरपितृवने शृगालोऽमांसभुक् तिष्ठति? तच्छ्रुत्वा विमलाशयः सोऽब्रवी बान्धवाः! न शीलकारणं जातिर्न च पुण्यकारणमाश्रमो निगद्यते। किमाश्रमे प्राणि पातकं न प्रचक्षते? देहिनां मनःशुद्धिकृतं कर्मैव प्रमाणम्। निशम्यैवं ते तस्य दृढनिश्चयं विज्ञाय अमर्षेण किंचिन्नोचुः। किंतु केवलमतप्यन्त। अथ क चित् तद्वृत्तं श्रुत्वा व्याघ्रस्तमभ्येत्य प्रोवाच। शुद्धात्मा भवान् मम साचिव्यं भजता तच्छ्रुत्वा विनताननो गोमायुरुवाद। मृगराज! कः सुधीः स्वाच्छन्द्यममृतं त्यक विकटां सेवां समुपाश्रयेत्? यः संतोषद्रविणं त्यक्त्वा दैन्यातंककलंकितां सेवां वांछ ततोऽधिको मूढः कः? अथवा यदि निर्बंधात् तद्भवद्वचः करोमि। तर्हि तु त मयैवैकेन सेवकेन सदा भवितव्यम्। वनराज! भक्त्या त्वदेकसंश्रयं मां पि यथा न विनाशयंति तथा कुथाः। एवमुक्त्वा निष्कामः स पूज्यगौरवात् तथेतिवा स्तस्य व्याघ्रस्य साचिव्यमगमत्। एवमाश्वास्य व्याघ्रेण मुचं नीतं सर्वाधिकारिणं विलोक्य तदनुजीविनः सर्वेदुःखसागरे निमग्ना बभूवुः। अथैकदा ते व्याघ्रकल्पित गोमायुनिकेतनं निन्युः। ततः क्वमांसमिति पृष्टास्ते क्षुद्राः प्रोचुः। मृगपते! शुद्धमंत्रिणा तेनैव चौर्येण तन्नीतमित्यवगच्छ। ततो व्याघ्रस्तं मिथ्याचारं वि तद्गृहे मांसं च दृष्ट्वा क्रोधात् तं हंतुकामोऽभ्याद्रवत्। एवमालोक्य पिशुनश व्याघ्रमाता तमभ्युपेत्य प्रोवाच। वत्स! शुद्धात्मने तस्मै भृत्याय मा क्रुधः। बहुधा संहता धूर्ता नवसंगतसचिवं निर्दोषमपि मिथ्यादोषेण लिम्पन्ति। विकृतः भीरुः शूरं जडो बुधं हीनजन्मा कुलीनं दुःशीला च पतिव्रतां द्वेष्टि। एवं मात्रा धितो व्याघ्रस्तत्वमन्विष्य तं शुद्धं विज्ञाय च मनसाऽपि विलज्जितोऽभवत्। अथ शु

स्तमवदत् । प्रभो !ऽहं गच्छामि । ते स्वस्त्यस्तु । स्यक्तसंविदा त्वया विमानितोऽत्र वस्तुं नोत्सहे । यः पुरा संसत्सु साधुभिर्गुणवानिति भाषितः । स दोषेऽप्यन्यथा नैव वाच्यः । मृगेन्द्र ! भिन्नेऽस्मिन् संश्लेषे पुनः प्रीतिः सुदुर्लभेति कथयित्वा व्याघ्रमामंत्र्य च गोमायुस्तपसे जगाम । ततः कालेन निराहारः शांतसंसारवासनः स वने कलेवरं त्यक्त्वा त्रिदिवमयासीत् । अतएव हि प्राज्ञाः पिशुनान् दूरतो निवारयंति ।

ये देशकालौ समीक्ष्य वैतसीं वृत्तिं च समाश्रयंति । समये च सर्पवदुत्तिष्ठन्ति । ते पराभवन्न यान्ति । पुरा सागरः कौतुकात् सर्वसरितः पप्रच्छ । महाभागाः ! युष्मत्प्रवाहेष्वखिलद्रुमानुन्मूलितान् पश्यामि । एते वृक्षाः कूलंकषैर्जलैर्हृता मां विशंति । किन्तु तटोद्भवं वेतसन्नावलोकयामि । एवं समुद्रेण पृष्टासु नदीषु जान्हवी प्रोवाच । सरित्पते ! सलिलैर्ह्रियमाणो वेतसः सदैव विनमति । ये विटपिनो महौघैर्विनमंति ते तु हन्तुं न शक्याः । अन्ये द्रुमास् तु त्रासादेव तथा त्रुट्यंति यथा मदोद्धता मूर्खाः । निशम्यैवं गांगवचो जलनिधिस्तथेत्यूचे । राजन् ! एवं देशकालानुसारिणीं वैतसीं वृत्तिं सुखाय मन्ये । महोत्साहशालिनां नृपाणां सुबुद्धिसहितं दाक्ष्यमेव परमधनमस्ति । बुद्धिहीना अलसाश्च सर्वथा विपदां पदं भण्यते । पुरा कश्चिदुष्ट्रः प्रजापतिवराच्छतयोजनीं ग्रीवामवाप । तत आलस्योपहतः स स्वासनमधिष्ठाय पीलुवनेषु महत्सुखं मत्वा च तत्रैव सदा स्वप्राणयात्रां चक्रे । अथैकदा दुर्दिनाभिहते काले क्षुत्क्षामैर्जम्बुकैस् तस्य सा मण्डलीकृतदीर्घ ग्रीवा भक्षिता । अतएव बुधाः सदैव पुरुषार्थमेव समाश्रयंति नालस्यम् ।

राजा राजकार्येषु विदितान् कुलीनान् योजयेत् । महापदेषु विन्यस्ता दुर्जनाः संशयायैव भवंति । पुरा कस्यचिन्मुनेराश्रमे कृपापात्रं श्वा न्यवसत् । सोऽथ मुनिमेत्य प्राह नाथ ! एष क्षुधितो द्वीपी मां हन्तुमागतोऽतएव सम्प्रति मां पाहि पाहीति तेनोक्तः स करुणानिधिरेतत्तुल्यो भवेत्युक्त्वा तमपि द्वीपिविग्रहं चक्रे । सोऽपि श्वा द्वीपितामवाप्य पुनर् व्याघ्रात् त्रस्तोऽभवत् । ततो मुनिगिरा स व्याघ्रयोनिमवाप । अथ कदाचित्स मदमन्थराद् गजाद् भीतो मुनिकृपया मत्तगजेन्द्रतामध्यगच्छत् । सोऽपि पंचाननाद् भीतिमवाप । एवमालोक्य मुनिः स्वतपोबलेन तं सिंहकलेवरं विदधे । ततः सोऽष्टपादं शरभं दृष्ट्वा विषण्णोऽभवत् । एवं ज्ञात्वा मुनिः क्षणात्तं शरभमकार्षीत् । अथ गच्छता कालेन शरभाकारः स दर्पोद्धतो भूत्वा सहसा तमेव मुनिं हन्तुमुद्यतोऽभवत् । ततस्तेन मुनिना हुंकृतेनापध्वस्तः स पुनरपि श्वविग्रहो बभूव । एवमज्ञातकुलशीलेभ्यो हीनेभ्यः श्रियं वितरन् राजा संशयसागरे पतति । अतो राजा नयविशारदो भूत्वा सर्वकामदुघामिमां गाम्पालयेन्नतु पीडयेत् । पुरा

हिमालयशिखरेऽङ्गनृपतिर्वसुहोमो यौवनाश्वेन पृष्टो दंडसंभवं प्रोवाच । पूर्वं प्रजासृजा गर्भो मूर्ध्ना वर्षसहस्रं धृतः सहसा क्षुतेनोत्सृष्टस्तेन क्षुप इत्याख्यो बभूव । अत्रान्तरे जगत्सर्वमशासनममर्यादं च विलोक्य प्रजापतिर्व्याकुलोऽभवत् । अथास्य वचसा स्वयं रुद्रो विलक्षणरूपं धृत्वा दण्डतां ययौ । स तं विष्णवे प्रादात् । विष्णुरंगिरसे प्रायच्छत् । स शक्रमरीचिभ्यां ददौ । मरीचिर्भृगवे समर्पयामास । भृगुर्मुनिभ्यो मुनयश्च दिक्पालेभ्यो व्यतरन् । दिक्पतयः क्षुपाय क्षुपश्च धर्मगुप्तये विततार । एवं तस्मिन् पूततेजसि रक्षायै प्रणिहिते वीरभूपाला शाश्वतं यशः स्वर्गं च लेभिरे । एवमंगराजेनोक्तो मांधाता दंडनीतिरहस्यं समाकर्ण्य प्रफुल्लचेतसा तं योजयामास। लोको दण्डभयात्सीमानं नातिक्रामति ।

पुराऽरिष्टः कर्दममुनिं राजधर्ममप्राक्षीत् । तच्छ्रुत्वा ऋषिरुवाच । राजन् ! भूपस्य कामलोभोद्भवं पापं ब्राह्मणसेवया विनश्यति । वेदमर्यादापालको राजा तपोदानजपादिभिर्निष्किल्विषो भूत्वा स्वर्गफलं लभते । यथा विदुषां सौजन्यं तथा राज्ञां शीलमाभरणं भणितम् । पुरा दुर्योधनो राजसूये तव श्रियं दृष्ट्वा द्वेषविषाकुलो भूत्वा च पित्रे द्यूते कामं निवेदयामास । तच्छ्रुत्वा धृतराष्ट्रोऽब्रवीत् । पुत्र ! विप्लुतो मा भव त्वमपि विपुलदक्षिणान् यज्ञान् कुरु । शीलवान् राजलक्ष्मीं लभते । लोकेऽस्मिन् शीलवतः किंचद् दुर्लभं नहि विद्यते । यथा दिशां चन्द्रः कामिनीनान्तारुण्यं वृक्षाणां च कुसुमाकरस्तथा राज्ञां शीलमेव मनोहरविभूषणं वर्तते । विदेशेषु विद्या धनं व्यसनेषुमतिर्धनं, परलोके धर्मोधनं, परंतुशीलंसर्वत्रनिखिलंधनमस्तीति वचनं सत्यं विद्धि पुरा शक्रो ब्राह्मणवेशं कृत्वा वृहस्पतिं पुरस्कृत्य च शीलालंकारधारिणं प्रल्हादं प्रायात् अथ तेन विनयाच् छिष्यवच् छ्रेयो वदेति पृष्टो दैत्येन्द्रः प्रजाहितं चिन्तयन् प्रोवाच विप्र ! सदा शीलवता मया त्रैलोक्यराज्यं संप्राप्तम् । विचारवान् सहसाऽनिर्णीतं संस्पृष्टमनाख्यातमचिन्तितं च स्वाद्वपि न भजेत् । निशम्यैवं यदा ब्राह्मणस्तथास्त्वित्यवदत्तदा प्रल्हादस्तुष्टो वरं गृहाणेति जगाद । तच्छ्रुत्वा वृत्रहा प्रोवाच । शीलव्रतशिरोमणे ! मह्यं निजशीलप्रभावं सर्वं देहि । निशम्यैवं सत्यव्रतो दैत्यो ददानीतमब्रवीत् । ततो द्विजवेशभृच्छक्रोऽपि तद्गिरा सकलं समवाप्य स्वसदनमयासीत् एवं तस्मिन् महोत्साहे च गते तूर्णं प्रल्हादविग्रहाच्छायारूपो वराकृतिः पुरुषो निर्गन्तुमारभत । अथ कोऽसीति तेन पृष्टः स दैत्यराजमब्रवीत् । त्वयाऽद्य कामशीलाभिधो दिव्यगुणोऽहं तस्मै वितीर्णः । एवमभिधाय यातेऽस्मिन्नपरोऽपि ततो निरगात् सोऽपि पृष्टो दशलक्षणसम्पन्नो धर्मोऽहं शीलमनुसरामीति दैत्यराजमवादीत् । अथ तृती

ऽपि पृष्टः सत्यमस्मीति प्रोवाच । ततो धनं बलं च न्यसरत् । अत्रान्तरे कमललोचना कमला प्रल्हादवदनान्निर्गत्य स्वयं तं जगाद । दैत्यराज ! यस्तव शिष्यो द्विजोऽभवत् । स सहस्राक्षः । त्वया तस्मै शीलं वितीर्णमतोऽहमपि तं व्रजामि । यत्र शीलं तत्र धर्मः । धर्मः सत्यमनुसरति । सत्यं धनमनुयाति । धनं च बलमनुधावति । किम्बहुना । यत्रैते वसंति । तत्रैव मम निवासो भवति । एवमुक्त्वा लक्ष्मीस्तं विहाय शक्रसदन मयासीत् । वत्स ! एवं सर्वविभूतयः शीलानुसारिण्य आसन् । निशम्यैवं पितृवचनमपि दुर्योधनो यदा न शशाम । तदा सर्वेऽपिपूज्यास्तस्माद् विमुखा बभूवुः । पूज्यपूजाव्यतिक्रमो हि विपन्मूलमिति लोके प्रसिद्धमेव । एतत् पितामहवचनं श्रुत्वा दुर्योधनकथां च स्मृत्वा युधिष्ठिरो निःश्वस्य प्रोवाच । तात ! धृतराष्ट्रजे ममाशा विपुलाऽऽसीत् । यथा वननिवृत्तेष्वस्मासु सा मा विधास्यति । सर्वथा युद्धरुचिना तेन जनार्दने प्रत्याख्याते सा मम संवृत्ताशा विपुलतां नीता । पितामह ! अथ तद्भंगे ता दुःसहाः शुचो वैपुल्यमायाताः । भीष्मोऽवदत् जीवितहारिणी दशैषा सुमहती । पुरा हैहयवंशे सुमित्रो नाम राजपुत्र आसीत् । स चैकदा कानने विचरन् बलवत्तरमेकं कुरंगमनुससार । सोऽथ समेषु तरुकुंजेषु विषमेषु च श्वभ्रेषु मृगमनुसरन् क्लममुपागमत् । ततस्तपोवनमवाप्य दृष्टनष्टे च तस्मिन् मृगे आशाविनाशसंतप्तः स मुनिसभां समाविवेश । सोऽथ तान् प्रणम्य महत्तमामाशां पप्रच्छ । निशम्यैवं वृषभाख्यो मुनिः सस्मितमब्रवीत् । राजपुत्र ! दुःखानुबंधिनीं कृशामाशां जहि । पुराऽत्र भूरिद्युम्नाभिधो नृपो बभूव । तस्य वीरद्युम्नसंज्ञकः पुत्रो मृगमनुसर्पन् बदर्याश्रमं जगाम । ततस्तपोवनमवाप्य तस्मिन् दृष्टनष्टे मृगे स आशाविनाशखिन्नो मुनिमण्डलं समाविशत् । सोऽथ मुनिवृन्दं प्रणम्य कष्टामाशां पप्रच्छ । तच्छ्रुत्वा प्रांशुः कृशतराकृतिश्च तनुनामको मुनिः प्रोवाच । राजपुत्र ! मा विक्लवो भव । लोकेऽस्मिन् कश्चिदपि जनो न विद्यते । य आशया न हीयते । अलसकृतघ्ननृशंसकुटिलेषु क्षुद्रनद्यः शरदीवाशादौर्बल्यमायांति । कायशोषविधायिनीम् कृशतरामाशां धिक् । या प्रतिश्रुतमनवाप्यैव हृदयात्परिवर्तते । पुत्रे मृते वा नष्टे एकसुतस्यापि पितुर्गात्राण्याशा सततं दहति । नूनमाशा कृशाऽपि महीयसी भणिता । या आशा वृद्धानां नित्यं पुत्रलाभेषु भवंति । ताः स्थविरे जीर्णकायानां कृशा अपि दुःसहाः प्रोक्ताः । ये आशादासास्ते सर्वलोकदासाः । परंतु येषा माशा दासी ते भूलोकस्था अपि स्वर्गलोकस्था गण्यंते । कौंतेय ! आशापाशान् परित्यज्य योगीव विजितेन्द्रियो भूत्वाऽपरः पृथुरिव पृथ्वीं पातुमर्हसि । राजन् ! राज्ञां बलं

कोशमूलं कथितम् । तस्मिन् क्षीणेऽब्राह्मणधनैर्धर्मसम्पदे तद् वृद्धिः कार्या । ए
माकर्ण्य राजा धर्मज्ञशिरोमणिं गांगेयं क्षीणकोशसहायानां भूभुजां वृत्तिं पप्रच्छ । तात
बालिजितो भिन्नमंत्रो निराश्रयश्च राजा निरुत्साहात्पदच्युतिमवाप्य किं श्रेयः संश्रयेत
तच्छ्रुत्वा भीष्मोऽवदत् । क्षीणशक्तिर्नृपो वैरिभिः संधाय यत्नात् कोशबलादीनां शनैः श
र्विवर्धनं कुर्यात् । तूर्णं साम्ना वर्तेत । त्यक्तात्मा वा रणभूमिं व्रजेत् । उभयोरन्तरे तिष्ठ
दीर्घसूत्रो नाशमेति । कोशसंग्रहोऽयं विपन्मूलघाती कथितः । लोके किमपि वस्तु नास्ति
यद् धनेन न लभ्यते । गृध्रा दग्धमंगारकाष्ठकं शवं प्रयान्त्येव । परंतु दारिद्र्यसंस
पूरुषं कश्चिन्न स्पृशति । लोकाः क्लिन्नसिराजालं पूतिपर्युषितं शवं च तथा न वर्जयंति य
धनहीनं जनम् । यस्यार्थास्तस्य सुहृदः । यस्य धनं तस्य बान्धवाः । यस्य वित्तं
पुमान् । यस्य च सम्पत् स एव पण्डितः कथ्यते । पुरा कोपव्याख्यो दस्युपतिरासीत्
स गुरुपूजाप्रभावेण मर्यादापालको भूत्वा सर्वार्थसिद्धिमध्यगच्छत् । स सदा न्यस्तश
द्विजानाथयोषितां रक्षिताऽऽसीत् । अतो निःशेषदानवसख्यमवाप्य विपुलयशो लेभे । जगत
स्मिन् तन्नास्ति । यदापदामनाक्रम्यम् । तत्र प्रथमं शरीररक्षा । बुद्धिरेव भेषजं विपदाम्
पुरा कस्मिंश्चिज् जलाशये प्राप्तज्ञदीर्घदर्शिदीर्घसूत्राख्या बहुपुत्रा मत्स्या न्यवसन् । ए
जले धीवरैस्तज्जिघृक्षया स्राव्यमाणे दीर्घदर्शी मानसान्तरं गच्छाम इति परानूचे
एवं तेन प्रार्थितावपि तौ यदा विमोहान्न जग्मतुस्तदा दीर्घदर्शी तु पूर्वमेव परं सरो
प्रायात् । ततो दाशैः स्रुतजले मत्स्यकर्दमके कृष्टे प्राप्तज्ञ आत्मानं मृतवद्दर्शयामास
ततो ऽन्यमत्स्यैः सह जलशयान्तरं नीयमानो लब्ध्वावसरं तूर्णं गभीरजलं विवेश । त
महाकृतिर्दीर्घसूत्रो विचलन् निषादेन लगुडैर्जर्जरीकृतो गतजीवितोऽभवत् । राजन्
बहुवैरिगोचरं यातो विषमस्थश्च नरेश्वरो मित्रसंग्रहं कृत्वा बलवृद्धिं कुर्यात् । पुरा प्रल
नाम मूषिको न्यग्रोधमूलनिलय आसीत् । सचैकदा लोमशाख्यं मार्जारं जालबद्धमव
कयामास । ततश्चपलाननः स उन्दरो निशि भक्ष्यं जिघ्रन् नखैश्च महीं विलिखन्नितस्
विचचार । अत्रान्तरे लोहितानननो हरिताभिधो नकुलस्तत्र समाययौ । एवमालोक
खुर्यावदात्मत्राणं चिन्तयति । तावच् चन्द्रसंज्ञकस्य पेचकराजस्याऽपि कूजनमश्रौषीत
ततो मूषिकः सर्वा दिशः कलयन् क्षणमचिन्तयत् । नकुलोलूकभीतोऽहं पूर्वं शत्रुणा
मार्जारेण सह सन्धिं कृत्वा स्वकार्यं साधयामीति निश्चित्य नीलकाचकाचरलोचनं बि
मब्रवीत् । भद्रमुख ! कालेनाऽमित्रं मित्रतामायाति । मित्रं चाऽमित्रतामेति । त
मित्रत्वमुपगतोऽहमधुना पाशं छेत्स्यामि । निशम्यैवं श्रवणसुखदं मूषिकवाक्यं हृष्टो मार्जा

सुहृदं व्यधात् । किं बहुना । तमंके संस्थाप्य परिषस्वजे । तद् दृष्ट्वा नकुलोलूकौ मूषिक-भक्षणे निराशावभूताम् । अथ मूषिकः शनैः शनैस्तत्स्नायुबंधनं छेत्तुमारभत । एवं विलोक्य मार्जारश्चिरकारिणन्तं तूर्णं तूर्णमित्यूचे । ये स्वार्थमुद्दिश्य प्रीतितंतुभिः क्षणं लंबन्ते । तान् कार्ययाचकान् धूर्तान् कार्यशेषेणैव यापयेत् । एतद् धियैव ध्यात्वा नयकोविदो मूषिको लुब्धकागमनावधि तमेकपाशांशशेषं चकार । अथ प्रातः परि-खाभिधे चण्डाले प्राप्ते मूषिकः पाशशेषं छित्वा बिलमाविवेश । ततो मार्जारे विद्रुते व्याधोऽपि निराशो गतः । ततः कदाचिद् भयमुक्तो मार्जारो बिलद्वारादन्तःस्थितमाखुं प्रणम्योवाच । सखे ! सोऽहं तव सुहृत् । तमुपकारं स्मृत्वाऽत्र समायातः । मित्र ! बिला-न्निर्गत्य मिलेति ब्रुवाणं भक्षणदीक्षितमर्धोन्मीलितलोचनं च तं मार्जारं दृष्ट्वा मूषिकः प्रो-वाच । प्रागहं तव सौहार्देनोपयुक्तोऽभवम् । भवानपि च मे सखाऽभवत् । परं स कालो-गतः । इतो गम्यताम् । नाऽहं वंचनभूमिः । यद् भवान्मधुरं वक्ति । तदपि मह्यमद्य न रोचते । यतो नाऽसौ समयो यत्र यांचा प्रशस्ता । अलं प्रश्नोत्तरायासेन । स्वार्थसाधन-तत्परं क्रूरमानसं च को नाम धीरो विश्वसेत् ? मिथ्या कृतज्ञ ! किम् भोज्यभोक्तृसमागमः परि-णामे हितप्रदो भवति ? एवमाकर्ण्य मूषिकवचनं मार्जारस्तस्य चातुर्यं मनसा प्रशंसन् बिलं तत्याज । सोऽपि धूर्तविश्वासं परित्यज्य तत्र सुखेन निवसन् कालं निनाय ।

राजन् ! शत्रुसंधिष्वेवमेष एव नयः प्राज्ञैर्ज्ञातव्यः । प्रियगिरां विशेषेण च कृतागसां न विश्वसेत् । पुरा काम्पिल्यनगरे ब्रह्मदत्तनामा नरपतिरासीत् । तस्य प्रासादे पूतना-भिधा जीवजीविका विहगी न्यवसत् । अथ गच्छता कालेन यद्दिने सा सुतमजीजनत् । तद्दिने राजमहिष्यपि कुमारं सुषुवे । ततः सा सागरद्वीपसंजातं फलद्वयं वितीर्य बाल्ये-ऽपि स्वपुत्रं राजपुत्रं च बलिनौ व्यधात् । अथैकदा बलवान् राजपुत्रो विहगशिशुमादाय क्रीडासमये तं गतजीवितमकरोत् । अत्रान्तरे तत्र समायाता पूतना पुत्रं निहतमालो-क्य कोपं कृत्वा च तुण्डेन राजपुत्रनेत्रे विदारयामास । एवं निकारेण प्रतिकृत्य दुःखिता सा यदा गन्तुमुद्यताऽभवत् । तदा ब्रह्मदत्तो हर्म्यात् तां व्रजन्तीं समालोक्य संभ्रमाद् विक्रि-यामाच्छाद्य च विदारिताक्षं पुत्रं प्रोवाच । वत्स ! प्रतिकृतेऽपकारे वैरं वैरेण पातितं भवति । एवं स्वसुतं सांत्वयित्वा विहगीमप्यवादीत् । पुत्रि ! कोपः साम्यादपक्रान्तस्त-स्मात् त्वमपि मा गमः । तच्छ्रुत्वा पक्षिणी जगाद । राजन् ! नेदानीं संगतमस्ति । कृतप्रतिकृतं वैरमभ्यासाद् द्विगुणं भवति । किन्त्वया गुरुवृद्धेभ्यः पुराणं श्रुत्वाऽपि विस्मृ-तम् ? यत् कारणे समुपस्थिते कोटरवन्हिवज्जीर्णमपि वैरं सहसा नवतां याति । यथा

कुरंगाणां गीतेन पक्षिणामामिषेण मत्स्यानां च वडिशेन बंधनं भवति तथा नृणां विश्वा-
सेन व्यथोपजायते । कृतापकारे यो बालिशो मोहाद्विश्वासं याति । स विस्मृतात्मा सह-
कालविधेयतां याति । विभिन्नानां प्रियवाक्यैः संश्लेषस् तथा दुर्लभोऽस्ति यथा भग्नमुक्ता-
फलानां जतुलेशैः संधिर्दुर्घटः । तं देशं धिक् । यत्रात्माऽशंकितः सुखन्न शेते । किल स-
त्योऽयं प्रवादो यदात्मार्थे वसुन्धरामपि त्यजेत् । एवं राज्ञा पुनः पुनः प्रार्थिताऽपि साऽविश्वा-
भयात् प्रणयगौरवं च परित्यज्य देशान्तरमगात् । अतो वैरिषु न कदापि विश्वसेत् ।

राजा कृतस्नेहेषु विपत्कालेऽपि सौहार्दं न त्यजेत् । प्रतिकूलेषु च प्रतिकूलत-
वर्तेत । पुराऽत्र शत्रुन्तपाख्यो राजा बभूव । स चैकदा कणिङ्कनामानं मुनिं रा-
नीति रहस्यमपृच्छत् । तच्छ्रुत्वा मुनिः प्रोवाच । राजन् ! पूर्वं तु शत्रुमूलोच्छे-
कुर्यात् । अथवा तन्न प्रकोपयेत् । अन्यथाऽसौ पादस्पृष्टभुजंग इव विनाशायैव भवति
नीतिज्ञो वाचा जनं विश्वसयेत् । दंभेन शौचं दर्शयेत् । शास्त्रप्रमाणशपथशंबै-
शत्रुं सेवेत । अतीतशान्तयेऽनागतैः स्नेहैः समं प्रत्यक्षैरुपपन्नैः फलवर्जितैः पिण्डैः
जडं वशवर्तिनं कुर्यात् । क्वचिदवसरे सहसा तूलवत् क्षिप्रं ज्वलेत् । मन्दप्रतापो धूमा-
द्रुमवन्हिवन्न भवेत् । प्रयोजनार्थिनः सदा मुदाशावर्तिनः कुर्यात् । यतो नहि क-
कार्ये कृते कर्तारमनुमन्यते । लोकापवादादुद्वेगश् चिरकारितम्मार्दवम् स्वमन्त्रेचाऽसं-
रर्थसंरदां मूलोच्छेदोऽभिहितः । काले स्वार्थसिद्धये प्रसुप्तो बधिरोऽन्धो वा स्यात् । स-
देहिनांप्रपातमधुवद् दुर्लभस् तिष्ठेत् । गुडलिप्तोपल इव दारुणोऽपि मुखे स्वादु स्यात्
मधुदिग्धक्षुर इव शत्रूणामन्तश्च प्रविशेत् । दीर्घमाशाभिषन्दातुं ज्ञानसंग्रहञ्च् चिन्तये-
आशां निघ्नैर्निमित्तैर्हेतुभिश्च तथा वदेत् । यथा संवत्सरशतैरपि रतिन्नायाति
स्वस्याऽतृप्तिजनका प्रीतिं नृणामंतरं दद्यात् । मृगमुग्धतां परित्यस्य वायस-
परिशंकेत । चारैः सर्वज्ञो भवेत् । व्यसने च रिपौ प्रहरेत् । पूर्वं तु मायाभिघातीस्या-
ततो हतं स्वबंधुवच्छोचेत् । निष्फलं वैरं कदापि न कुर्यात् । अपुष्कलमपि कस्य न ह-
ऋणाग्निशत्रुशेषं च सर्वथैव परिवर्जयेत् । अर्थविघ्नविधायिनं पुत्रमपि परित्यजे-
गृध्रवद्दीर्घदर्शीस्यात् । बकवत् कपटमप्यवलंबेत । शार्दूलवन्महोत्साहमाश्रयेत् । भु-
गवत्कौटिल्यं सेवेत । परेषां भेदनाय सदा पौरसान्त्वनं कुर्यात् । पूर्वमेव धनैर्बु-
नाकृष्य गणांश्चोपजपेत् । पण्डितैर्वैरमुत्पाद्य निःशंकः सुखं न चरेत् । मिथ्या
कथां त्यजेत् । एवं सुवेरराजो भारद्वाजकणिङ्कभाषितं श्रुत्वा नयकोविदत्वमवाप ।

मनुष्यो दैवदोषकालदौरात्म्यभाग्यविपर्ययै र्विपदमवाप्य सुबुध्यैव दुर्गाणि तरति

तत्रादौ बुधः कष्टेषु त्रिवर्गसाधनं देहं सदा रक्षेत् । पुरा द्वादशवार्षिकेऽनावृष्टिहते काले तोये कथाशेषे, जने दुर्भिक्षक्षपिते, धर्मसंताने उत्सन्ने महीतले शवाकीर्णे च मुनयोऽपि लुप्तसंयमास् त्यक्ताग्निपरिचर्याश्च बभूवुः । अस्मिन्नेवावसरे क्षुत्क्षामकुक्षिर्विश्वामित्रो विचरन् क्वाऽपि कृत्तप्राणिवसाविस्रं श्वपचालयं प्राप्य तत्राऽपि भिक्षामयाचत । एवं प्रार्थितोऽपि स मुनिर्यदा किंचिन्नावाप । तदा मूर्छितो भूत्वा धरण्यां पपात । ततो लब्धसंज्ञः सोऽचिन्तयत् । अहो ! कष्टमियं प्राणापहारिणी विपत्तिरुपस्थिता । सम्प्रति जीवितमुत्सृजाम्यथवा प्राणरक्षार्थं निशि चौरवत् कुक्कुरमांसमपहरामि ? किमधिकम् । विपदि प्राणरक्षा हि धर्मस्य प्रथमांऽकुरोऽभिहितः। एतच्चिन्तयतस्तस्य मुनेः कृष्णरात्रिः प्रवर्तिता । सोऽथ शनैः कुटीद्वारमेत्य यावद्धर्तुमुत्सहते मांसम् । तावदन्तः प्रसुप्तो वृद्धश्वजीवी प्रोवाच । अहो ! केन स्नायुराकृष्यते ? नाऽहं निद्रावशंगतोऽस्मि । योऽत्र विलम्बते स एव शस्त्रेण सहसा हन्यते । निशम्यैतद् दुर्बलस्वरो विश्वामित्रोऽब्रवीत् । भद्र ! कौशिकमुनिरहम् । प्राणरक्षार्थं चौरतां गतोऽस्मि । अलब्धभैक्षः क्षुत्क्षामकण्ठः श्वजाघनीमेनां हरामि । घोरकृच्छ्रगतस्यातुरस्याऽधर्मोऽत्र नास्ति । धर्ममूलं प्राणरक्षणम् मत्वा तत् क्रियते । किम्बहुना । जीवारक्षानन्तरमेव सदाचारोचिताः सर्वाः क्रियाः प्रवर्तन्ते । तच्छ्रुत्वा स वृद्धः समुत्थाय जगाद । अहोनु भगवन् ! प्राणत्राणाय पापं प्रशंससि ? युष्माभिरेव तु भक्ष्याऽभक्ष्येषु निर्णयोऽभिहितः । सम्प्रति जीवितभ्रंशभयात् कथं पापे प्रवर्तसे ? नाऽहं ते मांसं वारयामि । न च ते स्वयमेव वितरामि । त्वं सर्वधर्मज्ञाता भूत्वाऽपि मोहान्निरयं माऽगमः । निशम्यैवं स मुनिः प्रस्खलन् प्रोवाच । शरीरेऽस्मिन्रक्षिते सर्वं ज्ञानं सुरक्षितम्भवति । प्राणसंशयाद्वियुक्तोऽहमभक्ष्यं भक्षयित्वाऽपि पुण्यतीर्थेषु व्रतोपवासादिभिः पातकं क्षपयिष्यामीत्युक्त्वा तां श्वजाघनीं समादाय च तूर्णं प्रययौ । अस्मिन्नेवाऽवसरे मेघाः सस्यसंपदो ववर्षुरित्येवं प्राणरक्षायै मुनिनाऽप्यतिगर्हिते श्वमांसे बुद्धिं विहिता । तस्मात् सर्वथा जीवितं त्रायेतेति सिद्धान्तः।

एतन्निशम्य धर्मसूनुर्विस्मयमवाप्य पितामहं शरणागतरक्षकगतिं पप्रच्छ । ततो देवव्रतोऽब्रवीत् । राजन् ! पूर्वं मुचुकुन्देन पृष्टो भार्गवो यज्जगाद तच्छृणु । पुरा क्वाऽपि वने कपोतदंपती निवसतः स्म । अथैकदा दुर्दिनायासे शीतसंपीडिताङ्गो लुब्धको रात्रौ वृक्षमूलमुपाश्रित्य सुष्वाप । तत्तरुस्कन्धे कृतसंश्रयः कपोतो वासरान्तेऽपि नायातां भार्यां स्मृत्वाऽत्यन्तमतप्यत । तस्मिन्नवसरे प्रियाविरहकातरो यं विलापमकरोत् । तं व्याधेन पंजरबद्धा कपोती शुश्राव । ततः सा तमूचे । कान्त ! सुकृतिनो न कदापि विषण्णतां

प्रयान्ति। प्रथमं त्वेतत्कर्तव्यं यच्छरणागतसंरक्षणं कुरु। वृक्षमूलेऽस्मिन् यो लुब्धकः सु
स्तस्मै यथोचितं सत्कारं विधत्स्व । यतो ह्येषः शीतार्तः शरणमभिवांछति । विहगः प्रे
स्या वचनमेवं समाकर्ण्य लुब्धकं प्रोवाच । भद्र ! त्वं मद्गृहमायातोऽसि । अतस्तवे
वितरामि । तच्छ्रुत्वा शीतार्दितः स बन्हिं तमयाचत । अथ खगस्तूर्णं समुत्पत्य कुतो
ध्यर्धदग्धं काष्ठखण्डमानिनाय । तत स्तृणपर्णसुसिद्धेऽग्नौ ज्वलिते विनष्टशीतः क्षुत्
लुब्धको भोजनमयाचत । निशम्यैवं पक्षी कारुण्यान्मां भक्षयेति निगद्य बन्हिं विवेश
तद् दृष्ट्वा व्याधोऽपि परममनुशयं प्राप्य कूटयंत्राणि त्यक्त्वा पंजरं च समुत्पाट्य सुवि
तानशनव्रतो वनमयासीत् । एवमर्कवर्चसा विमानेन कपोते त्रिदिवं याते भर्तारमनु
चंती कपोत्यपि बन्हिमाविवेश । रीत्याऽनया भर्त्रा सह निवसमानायान्तस्यां लुब्धको
दावानले तनुं त्यक्त्वा दिवं जगाम । राजन् ! शरणागतरक्षणमपि महाव्रतमस्ति ।

पितामह ! देहिनामज्ञानात् कृतं पापं कथं नश्यतीति युधिष्ठिरेण पृष्टः शान्तन
पुनरब्रवीत् । राजन् ! पुरा ब्रह्महत्याकुलः पारिक्षितिरिन्द्रोताख्यं मुनिवरं वने शर
मयासीत् । ततः पापसंसर्गभीरुणा तेन मुहुर्मुहुर्निरस्तोऽपि स राजा करुणवाक्यैस्तं द
द्रेतान्निनाय । अथाऽनुशयाग्निना तप्तस्य पापं कीर्तयतस्तीर्थाप्लुतस्य च तस्य स मुनिर
याजको बभूव । सोऽथ भूपतिर्हयमेधेन विधिवत्पूतात्मा भूत्वा कृतार्थतामगमत् ।
कृपालुरिन्द्रोतो घोरपातकाद्राजानं तारितवान् । अतो विचित्रोऽस्ति तपोमाहिमा ।

राजन् ! देहिनो लोके बुद्धिनिश्चयव्यवसायैर्नरकं तरंति । पुरा कमपि मृतं
श्मशाने बान्धवाः शोचितुमारब्धाः । अत्रान्तरे कश्चिद् गृध्रस्तान् समेत्य प्रोवाच । म
शयाः ! शिशुं त्यक्त्वा गच्छत । को नाम पर्यंते दशामिमां न गमिष्यति ? घोरेऽ
पितृकानने यूयं चिरं मा तिष्ठत । इह मर्त्यसहस्राणि क्षयं ययुर्यान्ति यास्यंति
निशम्यैवं बान्धवा बालकं त्यक्त्वा यावद् गन्तुमारभंते तावज्जम्बुकोऽभ्येत्य निर्घृ
यान् युष्मान् धिगिति जगाद । अहोनु ! यूयं दारुणा ये सुतमपि त्यक्त्वा
व्रजंति । यदा कदाचित् तु सुप्तभौतिका गतासवोऽपि जीवंति ? यदा दिवाकरो
स्तं न यातस्तदाऽस्मिन् श्मशाने कथं वो भयम् बाधते ? किं बहुना । बालेऽस्मिन्
णामपि करुणाकणः संजायते । इति शृगालेन गदिते गृध्रः पुनस्तान् शवभृतोऽब्र
चित्रं वो जम्बुकगिरा भ्रमः ? यूयं जीवरत्नभृतः काष्ठलोष्ठोपमाकृते गतजीव
शिशोः स्नेहेन किं मूढतां याताः ? वैराग्याद्वनं व्रजत वा महत्तपः कुरुत । वियो
गेऽस्मिन् संसारे सत्याद्न्यत्परायणं नास्ति । पुत्रोऽन्येन वर्त्मना पिता चान्येन

परलोकं गच्छति । अतः स्नेहविक्रियान्त्यजत । वृद्धतरुणबालकगर्भस्था अपि सर्वे यांति। किमत्र क्रियते ? प्रमाथिनः कालस्य गतिर्विचित्राऽस्ति । बान्धवा मोहवशात् प्रलपन्ति । वस्तुतः प्रेतो न शृणोति प्रलापं न च वाष्पं पश्यति । वत्सराणां सहस्रं मे साग्रं जातस्य वर्तते । परं मया निर्गतासुः प्रलापैः क्वचिन्नोत्थितो दृष्ट इति कथयित्वा विरते गृध्रे गोमायुः पुनरुवाद । भद्राः ! कान्तेऽस्मिन् बाले दयां कुरुत । पुरा रामराज्ये मृतोऽपि ब्राह्मणात्मजः शंबुकबधात् दुर्लभजीवितं पुनः प्राप । परलोकगः पिता शिशुनाऽनेन कराभ्यां वितीर्णं सलिलाञ्जलिं कदाचित्पास्यतीति जम्बुकेन भाषिते गृध्रः पुनस्तानुवाच । श्मशानभूरेषा दिनान्तेऽतिदारुणा भवति । गतानामागमः कथं संभवतीति यूयमेव चिन्तयत । एतन्निशम्य निवृत्तान् बान्धवान् वीक्ष्य स्वार्थैकपण्डितो गोमायुः पुन स्तानुपसृत्य प्रोवाच । अधुनाऽस्मिन्नबांधवे संसारे मम गतिर्नास्ति । यत्र बांधवाः काष्ठवत् पुत्रकं परित्यज्य गच्छंति । एवं क्षुत्क्षामौ तौ गृध्रजंबुकौ भक्ष्यार्थमूचतुः । यद् दिवा गृध्रभोज्य मासीत् तदेव रात्रौ गोमायुकस्याऽपि । अत्रान्तरे भगवानम्बिकासुतः स्वेच्छाविहारी तत्र समागत्य करुणया तं बालकमजीवयत् । ततस्ते स्कन्दवरात्तं सुतमवाप्य हृष्टाः स्वनगरं ययुः । अथेश्वरदृशा गृध्रजम्बुकावपि कुशलमवापतुः । राजन् ! एवमनिर्वेदशीला व्यवसायिनश्च पुरुषा भगवत्प्रसादादभीष्टसिद्धिमवाप्य सुखेन समयं नयंति । अतएव नीतिज्ञा अनिर्वेदः श्रियो मूलमिति भूयो भूयो व्याहरंति ।

राजन् ! दर्पमाश्रित्य दुर्बलो बलिना सह स्वप्नेऽपि वैरन्न कुर्यात् । महाशाल्मलिपादपो वायुस्पर्द्धया नामशेषतामवाप । पुरा हिमवत्प्रस्थे चुम्बिताम्बरः शल्मलिर्बभूव । अथैकदा यदृच्छागतो नारदमुनिः प्रीत्या तं पप्रच्छ । अहोनु ! तव पत्रपुष्पफलश्रियोऽति नीरन्ध्राः । मन्ये तव परं मित्रं वायुर्येन त्वं सदैव रक्ष्यसे । वनेऽस्मिन् तद्बलाक्रान्तास्तरवः प्रत्यहं विशीर्यंते च पतन्ति । श्रुत्वैतद्दर्पान्धः शाल्मलिरूचे । मुने ! चित्रमेतद्यत् त्वं मम महत्वं न जानीषे । अनिलोऽयं बले मे तुल्यो नाऽस्ति । एवं तेन शाखिना बहुशोऽभिहिते नारदस्तदेव गत्वा पवनाय निवेदयामास । तच्छ्रुत्वा क्रोधविधुरो मारुतस्तं वृत्तं समभ्येत्य श्वो द्रष्टाऽसीत्यवदत् । अथ रजन्यां स शाल्मलिस्तं महावेगं प्रभंजनं संचिंत्यैव संत्रासात् स्वयमशीर्यत । ततः प्रातःशकलिताशेषशाखासमाकुलं स्वयं च विशीर्णं शाल्मलिं दृष्ट्वा वायुरभ्येत्य तं प्रोवाच । तरो ! त्वं धन्यमंत्रोऽसि । यः स्वबुद्ध्यैवात्मानं रक्षितवानित्यभिधाय संतुष्टो वायुर्यथागतं प्रायात् । ज्ञात्वैवं बुधा नम्रतां धारयंति ।

लोभ एव महत्पापमस्ति । ज्ञानमेव परं महो विद्यते । दम एव परा शान्तिरभि

धीयते । तप एव परं पदं भणितम् । सत्य सदृशं पुण्यं नास्ति । क्रोधनिग्रहतुल्
श्रेयः प्रदोऽन्यो न विद्यते । आनृशंस्यं परमधर्मोऽस्ति । धर्मसारोऽयं मुनिभिः प्र
र्शितः । पापं श्रुतिस्मृतिविहितप्रायश्चित्तैस्तथा तीर्थसेवाहरिकीर्तनदानैश्च सद्यो नश्यति । ब्रह्म
द्वादशसमाः कपालाङ्को व्रतं चरेत् । भ्रूणहा युधि सम्मुखखड्गदलितोऽघान् मुच्यते
गुरुतल्पगा ब्राह्मणार्थे हता पापं तरंति । भूमिपा हयमेधेन सर्वपापेभ्यः प्रमुच्यन्ते
अत्रान्तरे नकुलेन पृष्टो भीष्मः करवालसंभवं प्रोवाच । पुराऽसुराभिहते काले हि
वंच्छिखरमास्थाय भगवान् स्वयंभूः खड्गं दध्यौ । सोऽथ ध्यातमात्रः प्रांशुर्नीलोत्प
श्यामो भुवनानि विलोकयँस् तत्राऽऽजगाम । ततः स विरंचिवाक्यात् त्रिनेत्र
कराग्रगो बभूव । रुद्रोऽथ तत् तेजसा पूर्वं निष्कंटकं जगत् कृत्वा पश्चाच्छिवाकृ
शशिभूषणो बभूव । ततो मनुप्रभृतयो भूपाः खड्गं लेभिरे । यस्य धारानिपा
देहिनां पुनर्जन्म न विद्यते । अतएव हि धर्मज्ञक्षत्रियाः सदैव खड्गपाणयो भवंति ।

एवं राजा भीष्मोपदेशं श्रुत्वा तद्गिरः स्मरन् स्वमंदिरं गत्वा च धर्मज्ञविदुरेणा
नाना कथाश्चक्रे । अथाऽन्येद्युर्युधिष्ठिरो भीष्मं समभ्येत्य पुनः पप्रच्छ । तात ! के
सौहार्दैर्न चलेदिति पृष्टः सोऽब्रवीत् । राजन् ! सभ्यसाधुकृतज्ञकुलीनगुणग्राह
सह सतां प्रीतिर्न नश्यति । मित्रद्रुहः कृतघ्नांश्च वर्जयेत् । कृतघ्नता समं पातकं ना
पश्यामि । पुरा मध्यदेशे वेदाध्ययनविवर्जितः शीलाचारपराङ्मुखो गौतमो नाम
बन्धुरभवत् । शवरीसक्तः स वसुमतीम् भ्रान्त्वा कदाचित्सार्थभ्रष्टो वनमाविवेश । त
स्तत्र स विश्रामार्थं कमपि न्यग्रोधतरुमासाद्य समुपाविशत् । अत्रान्तरे कश्चिद् दयार्
नाडीजंघाभिधो बकः समागत्य तं दुर्गतं प्रोवाच । ब्रह्मन् ! त्वमितो गत्वा सुहृ
विरूपाक्षं पश्य । स हि दातृधुर्यः कार्तिक्यां दरिद्रेभ्यो धनं प्रयच्छति । मम पर
दानेन सोऽतिसंतुष्टो भाविष्यति । तच्छ्रुत्वा स तत्र गत्वा तस्माच्च कनकमवाप्य
प्रत्यावर्तत । ततो लब्धधनो बकं विलोक्याऽचिन्तयत् । यद् विगताविक्रियेऽस्मिन्
नह्येतद्धेम भक्ष्यते।तस्मात् सुपीवरं बकमेवाद्य पातयामीति निश्चित्य पाथेयार्थी द्विजा
स सुप्तं सरलाशयं च तं बकं जघान । अथ राक्षसराजस्तान्मित्राऽदर्शनेन खिन्नो
चारचक्रं विसृज्य च तं क्षुद्रद्विजं प्राप । ततस्तेन हते बकं ज्ञात्वा तमुत्कटं निजग्रा
अत्रान्तरे खेचरः स सुरसारिक्फेनैर्जीवितमवाप्य करुणादृष्ट्या तं दुराचारमपि गौ
मजीवयत् । यतः सतामधमे मन्युर्न भवति । कौंतेय ! एवं कृतघ्नचरितो गौत
हिंसाव्रतं बकं जघान । यतः पापस्य सदा मनः पापमेवाभिरमते । धीधे

ब्राह्मणघातका न्यासापहारिणश्च यस्याग्रे धर्मिष्ठाः । स कृतघ्नो विचार्यताम् । एतादाकर्ण्य धर्मराजः पुनः पितामहं पप्रच्छ । पितामह ! विनष्टधनबान्धवः कथं धर्मं समाश्रयेत् ? एवं तेन पृष्टः सोऽब्रवीत् । राजन् ! पुराऽऽसीत् सेनजिन्नाम राजा । सचैकदा पुत्रशोकमवाप्य सर्वाणि राजकार्याणि तत्याज । ज्ञात्वैवं कश्चिद् ब्राह्मणस्तमभ्युपेत्य प्रोवाच । महीपते ! भवेऽस्मिन् सर्वजन्तवोऽभावायैव जायंते । कालेन शोच्यस्त्वमपि कथमन्याञ्छोचसि ? यदृच्छया संगतश्चेद् यदृच्छया प्रतियातस्तर्हि वियोगमयेऽस्मिन् संसाराध्वनि कोऽयं ते मोहविभ्रमः ? देहिनां क्षणदृष्टेषु स्नेहो दुःखाय जायते । ममाऽयमिति मुग्धानां कल्पना वृथा । वस्तुतस्तु स न तेषां न च ते तस्य संतीति जानीहि । लोकाः पूर्वमलब्धं शोचंति । ततः प्राप्तं शोचंति । अनंतरं च नष्टं शोचंति । विमूढा नराः कथय कदा सुखिनो भवंति ? एवमालोक्य विपश्चितो धनपुत्रकलत्रेषु न स्निह्यंति । यतस्तैः परैश्च नृणां विप्रयोगोऽवश्यं भावी। यदि वियोगेषु विषोत्कटा मर्मच्छिदो बाधा न स्युस्तदाऽमृतोपमान् प्रियसंयोगान् को नाम न मन्येत ? पुरा पिंगलाख्या वाराङ्गना निशि दत्तसंकेतं कान्तं चिरमनागतं ध्यात्वा स्वयमेवाऽब्रवीत् । वियोगे दुःखदायिना तेनाऽऽगतेनाऽपि किम् ? सम्प्रत्यहं तु शरीरस्थमनश्वरं कान्तं भजे । निश्चित्यैवं संतोषपीयूषं पीत्वा सुष्वाप । ततः प्रातः प्रबुद्धय शुभकर्मसु प्रवृत्तिं कुर्वाणा शनैः शनैः परमपदमाससाद । अस्मिन् प्रवाहवद्याति नृणामायुषि किं सुखमिति युधिष्ठिरेण पृष्टः पितामहः पुनरूचे । राजन् ! आसीत्तपोवने कश्चित् स्वाध्यायसंपन्नो ब्राह्मणः । तमेकदा मेधाविसंज्ञकः पुत्रः समुपसृत्य प्रश्नमिमं पप्रच्छ । सोऽब्रवीत् । वत्स ? पूर्वं ब्रह्मचारी भूत्वा वेदादि सच्छास्त्राणामध्ययनं कुर्यात् । ततो गृही भूत्वा पुत्रैः पितॄणामानृण्यमाधिगच्छेत् । अथ वनेऽनिलान्पीत्वा मुनिवत् समसुहृद्द्वेष्यो परमपदमुपेयात् । तच्छ्रुत्वा तनयोऽवदत् । तात ! सर्वमेतत्तदाऽनिन्दितम् । यदि श्लाघ्यश्रेयसे कालः प्रतीक्षेत । असमाप्तस्वकार्याणामेतत् स्वल्पायुरहोरात्रगणैरेवाऽलक्षितं स्रवति । कलिताऽखिलाऽयं कालः सुदूरगामी सार्थ इव मुहुर्मुहुः प्रार्थितोऽपि मुहूर्तमात्रमपि न विलंबते । निश्चित्यैवं पण्डितः कार्येषु क्षणार्धमपि न विलम्बेत । यतो न जानीमः कदा कस्मिंश्च कृतान्तो निपतिष्यति ? कालोऽयं देहिनां कार्यशेषेषु न वात्सल्यान् न कारुण्यान् नोपयोगान्नच गौरवात् प्रतीक्षां क्षमते । यस्य मृत्युना सह सौहार्दमस्ति । यश्चायुषोऽवधिं वेत्ति । तस्यैव श्वः कर्त्तास्मीत्येषा वाणी शोभते । अहोनु ! मोहमुग्धस्य लोकस्येयं प्रमादिता । यद्बालमपि मृतमालोक्य वृद्धो निर्भयस्तिष्ठति । किम्बहुना । नवे भोगार्हवयसि नवेषु विभवेषु नवोढेषु दारेषु च जनो

मृत्युना ह्रियते । तस्मात् संसारशान्तये आदावेव कुशलं कुर्यात् । यतो देहिदेहसमाग स्तरत्तरंग लोलोहि निर्द्धारितः । ज्ञात्वैवं पण्डिताः सदैव धर्ममेवाऽनुसरंति ।

अथ धनिकनिर्धनयोः सुखदुःख विभागं धर्मराजेन पृष्टो देवव्रतः पुनरब्रवीत् पुरा शम्पाको नाम विप्रोऽस्मिन् विषये प्रोवाच । लोका वितृष्णयाऽतिपीड्यन्ते संतोषस्त्वमृतनिर्झरो भणितः । निर्धनो भयानभिज्ञो, निश्चिन्तो निद्रावान् रोगवर्जि नित्यं सुखितो यथाचाप्तकृतक्रियश्च भवति। संतोषी सुखमास्ते सुखं शेते सुखं च प्र बुध्यते । निरामयो निरायासो निरपायश्च तिष्ठति । स दर्पपूर्णास्य धनिनो भ्रूभंगाज्ञा बलोकयति । धनिकोऽतितृष्णया न निद्रां लभते । सदा राजतश्चौरादिभ्य श्च विभेति पूर्वमर्थार्जने दुःखं ततोऽर्जितरक्षणे दुःखम् । अथाऽये दुःखं व्यये च दुःखं विचि धीमन्तोऽतितृष्णावन्तो न भवंति । धनिको धनवृद्ध्यर्थं नाना पापानि करोति । कार्प मवलंब्य विविधकष्टान्यनुभवति । धनी यावन्नृपदस्युमन्युभिर्न गृह्यते तावदात्म शक्रवैश्रवणोपमं मन्यते । धनं गृहान् सुपरिच्छदांश्च गणयतां धनिनामेव निर्ध दुःखविषूचिकाऽस्ति । ज्ञात्वैवं ज्ञानिनो लोभाय स्वमनस्यवकाशं न ददति ।

एतन्निशम्य राजाऽपृच्छत् । तात ! समारंभे वैफल्यं याते द्रविणोत्सुकः किं कु दिति भूभुजा पृष्टः शान्तनवो ध्यात्वाऽवदत् । राजन् ! यद्विनष्टार्थसमये दुःखभे तच्छ्रूयताम् । पुरा मङ्किर्नाम द्विजो बभूव । सोऽसकृद्धनमीहमानोऽपि विधिवैमुख हेलया न किमप्यवाप । सोऽथ क्षीणार्थोऽर्थशेषेण वृषद्वयं क्षेत्रे क्रीत्वा स्वयमेव क चक्रे । अत्रान्तरे निद्राभंगात्समुत्थाय पृथुग्रीवः क्रमेलकस्तौ वृषौ स्कन्धलम्बिनौ जग्मा एवमालोक्य शोकार्तो द्विजात्मजो विललाप । अहोनु ! मम चित्राङ्गौ वत्सतरौ क करभोऽयं रत्नभूषणाढ्य इव विभातीत्युक्त्वा जातनिर्वेदो गाढवैराग्यवासनः स पुनः पुनस्तृष्णां निनिन्द । अहोवत ! तृष्णा हि जंतूनां दुःखाय । यया विप्रल सर्वो जनोऽहर्निशं शोचति । लोकेऽस्मिन् अलब्धं बांछतां लब्धं परिरक्षताम् नष्टं च शो पुंसां दुःखं कदा विनिवर्तते ? धनेषु कामो विपन्मूलं संतोषश्च परमसुखमस्ति । निष्क सकामश्च स्वस्थःरोगी मे मतः । सधनो जनो भूपदस्युस्वजनैश्चिन्त्यते । लो विकलो निर्धनश्च न गण्यते । तस्मात् संतोषधनशालिनां संत्यक्तकामानां क्षयो व्ययायासैश्चेतो न परिभूयते । इदं लब्धमिदंनष्ट मिदं च पुनर्धिया लक्ष्य इति चिन् तामेव शरीरिणामायुर्जीर्यति । अधुना लोभमुन्मूल्य स्पृहां च दूरे निरस्य वी द्धोऽहं मुनितुल्यो भवामि । त्यागो हि व्यसनं हन्तीति सत्यम् । पुरा राजर्षि

दह्यमानेऽपि नगरे दुःखविक्रियान्नाऽभजत् । माङ्किरप्येवं निश्चित्याशापाशं पर्यत्यजत् । ततः शनैः शनै र्ज्ञाननिर्धूतकिल्बिषो भूत्वा परमपदमध्यगच्छत् । एतदाकर्ण्य राजाऽपृच्छत् । तात ! कथं जन्तु र्वीतशोको विचरेत् ? अथ देवव्रतोऽब्रवीत् । राजन् ! समाकर्णय । पुरा दानवाधिपप्रह्लादो नित्यानंदं ब्राह्मणमपृच्छत् । भूदेव ! सुखदुःखशतावर्तेऽस्मिन् भवार्णवे कथमविलुप्तधैर्यो नित्यतुष्टश्चाऽभिलक्ष्यसे ? तव केयं श्लाघ्यतरा वृत्तिः ? को वाऽयं धीविभवः ? यदस्मिन् संसारे क्रीडाविहारी त्वं न लिप्यसे ? तच्छ्रुत्वा सोऽब्रवीत् । दैत्यराज ! सर्वभावेषु तटस्थो नित्यतृप्तश्चाऽहं विचरामि । सर्वं संसारविभ्रमं मायाविलसितं विजानन् भूतानां क्षयोदयेषु सुखं दुःखं च न भजे । आयुषां विभवानां च स्वभावतोऽसारतां पश्यन् निर्व्यथोऽहं नाऽनुशोचामि । विविधभोगान् भुंजानोऽथवा निराहारो दिगम्बरो वा महार्हवसनः क्षमाशायी किं वा भुजोपधानः पर्यंकशयनः शमदमाभ्यां च समो व्रतमाजगरन्धरामि सदा । यथाऽजगरः प्राप्तान् गजकुरंगमहिषादीन् गिरत्यसंप्राप्तेष्वनुद्वेगं च विधत्ते । तथाऽहमपि सत्वस्थो लाभालाभौ सुखाऽसुखे च न चिन्तयामि । निशम्यैवं द्विजभाषितं विस्मितमानसः प्रह्लादस्तस्य तां जीवन्मुक्तदशां मुहुर्मुहुः प्रशशंस । लोके ये निर्द्वन्द्वास्त एव महाभागा धन्याः ।

एवं पाण्डुसुतः समाकर्ण्य पुनर्भीष्ममभाषत । पितामह ! कुलकर्मार्थबुद्धीनां यदुत्तमं तद्वदेति नृपतिना पृष्टो गांगेयो बभाषे । राजन् ! सर्वान् गुणानतीत्य प्रज्ञैवोपरि विराजते । पुरा धनमदाध्मातो वैश्यः स्यन्दनेन व्रजन् वर्त्मनि कृशतरं कश्यपमुनिमपातयत् । एवं ललत्कुंडलगण्डेन तेन वणिजा भुवि पातितः सः स्वदारिद्र्यं स्मृत्वा मरणे निश्चयं व्यधात् । अत्रान्तरे प्राणत्यागकृतव्रतं पांसुशायिनं च तं प्रबोधयितुं शृगालरूपधारी शक्रः स्वयमेत्य प्रोवाच । अहो बत ! संसारेऽस्मिन् कस्यचिदपि संतोषो नास्ति ? मुने ! यदुज्वलाचारोऽपि त्वमात्मानं न बहुमन्यसे ? संसारे ते मनुष्या धन्याः । यैः स्वहस्तेन भुज्यते । कण्डूर्निवार्यते । कीटकण्टकादिश्च विकृष्यते । अहो ! पूर्वं तु त्वं सुकृतिशिरोमणिरसि । यन् मानुषयोनिजः । ततो ब्राह्मणः । ततस्तपस्वी । कश्यप ! सर्वथा स्पृहणीयोऽसि । नाऽस्त्यत्र कश्चित्संदेहः । प्रिय ! त्वं धन्योऽसि । यन्नाखुर्नमण्डूको न कुक्कुटो न पुक्कसो न चाण्डालो न कुष्ठी न च जडोऽसि । लोके दीर्घरोगार्ता दुःखाद् दुःख तरं श्रिता दृश्यंते । किम्बहुना । तामसयोनिजानां तु कष्टं विलोकय । त्वं मनुष्यः परिपूर्णांगो व्याधिव्यसनविवर्जितः सुपात्रब्राह्मणश्चाऽसि । कथय त्वत्तोऽधिकः को धन्यतरोऽस्ति ? संप्रति त्वं मोहादसंतोषे मतिस्मा कृथाः । जनो महेन्द्रता-

मप्यवाप्य ततोऽप्याधिक्यं समीहते । शरीरिणामियं तृष्णा सतताभ्यासाद् विवर्धमानां-ऽत्रस्नायुमयी तंत्रीव कृष्टा दीर्घतामायाति । तस्मात् स्वधर्मनिरतः स्पृहणीयकुलोद्गतस्त्वं परविभवं दृष्ट्वा कामान्मर्तुं नार्हसि । अहं धूमग्निप्रायवादभृत् कुतार्किको भूत्वा वेदविरोधी नास्तिकश्च पापयोनिमिमां श्रितोऽस्मि । बहुशो निर्विण्णोऽपि भयात्तनुं न त्यजामि । यतोऽतोधिका अपि पापयोनयः संति । सुरपतिरेवं बुद्ध्या वीतशोकं तं विधाय ततोऽस्मै स्वं रूपं च दर्शयित्वा त्रिदशालयं जगाम । ब्राह्मणोऽपि ततः कृतार्थो बभूव ।

एतदाकर्ण्य कौंतेयोऽपृच्छत् । पितामह ! जगदिदं केन सृष्टम् ? देहे जीवः कीदृशः ? स च यातः क्व तिष्ठति ? भीष्मोऽब्रवीत् । पुरा कैलासशेखरे भारद्वाजमुनिना एतदेव पृष्टो भृगुरभाषत । राजन् ! पृथिवीपद्मपत्रसंस्थस्यमानसप्रजापतेर्व्यक्ताकृतिस्पृशो विष्णोः पूर्वसर्गोऽयमाकाशः । ततो वृक्षाणां मानुषाणां च पांचभौतिकं समानम् । तेनैवास्मिन् महासर्गे विचित्रव्यक्तयः कृताः । प्राणापानादिरूपेण वायुना सहितोऽनलो विराजते । उत्तरे हिमवत्पार्श्वे निरामया फलभूमिरस्ति । तां पुण्यकारिणो यान्ति । विपरीताश्च विपर्ययं गच्छन्ति । इहापि लोके सुखहर्षधनादिभिर्दारिद्र्यक्लेशादुःखैश्च जंतूनां शुभदुष्कृते दृश्येते । भवार्णवेऽस्मिन् ज्ञानीसुखमज्ञानी च कष्टं लभते ।

अथ राज्ञा पृष्टः पितामहः सदाचारोऽब्रवीत् । प्रातः प्रबुद्धो विजने मलं त्यक्त्वा सदा शुचिर्देवपूजारतो होता दाता भोजने मौनी ऋतुकालाभिगामी विनीतः क्षमी च यो नरः स सदाचारः शाश्वतं पदमवाप्नोति । तस्मात् सदाचार एव सुखमूलं गण्यते ।

ततो भूभुजा किमध्यात्मेति पृष्टः शान्तनवो हृदि सनातनं ध्यात्वा तत्त्वमुवाच । रश्मिवत् प्रसृतेन्द्रियः क्षेत्रे क्षेत्रज्ञस् त्रिगुणो व्यवहितैरपि च्छन्नोऽसक्तः सक्तवद् भाति । निवातदीपनिष्कम्पमानसोऽयत्नात्तेन्द्रियो मौनी स्थाणुभूतस्तं समीक्षते । बाह्यवृत्तिनिरोधेन मनोनिग्रहेण रागशोकभयद्वेषत्यागाच्च स सत्पुरुषैरवलोक्यते । असमर्थानां चित्तं तडित्तरंगतरलं वातवदुद्भ्रान्तं च भवति । योगिनोऽभ्यासेन निस्तरंग इवोदधौ समीभूते चेतस्य चलतां याते प्रशान्ताशेषविप्लवे प्रकाशतमसोश्च पारे शाश्वतं शिवं ध्यानेन पश्यंति ।

एवमाकर्ण्य राजा पितामहमभाषत । तात ! पातकफलावाप्तिस्तद्गतयश्च कृपया कथयेति वाक्यं श्रुत्वा गांगेयः पुनरुवाच । भूपाल ! पुंसां फलावाप्तिरभिध्यासदृशी विहिता । अहंकारप्रवृत्ता भोगैश्वर्यसुखार्थिनः कामिनो नराश्च निरयेष्वेव पतंति । पारिजातलतालोला नाकनायकसेवितासुत्रिदशभूमयोऽपि नियतावधयश्च निरयोपमाः संप्रचक्षते । किं बहुना । कालकलयाऽस्पृष्टं गुणत्रयविवर्जितमनादिनिधनं धाम निष्का-

मेनैव समुपलभ्यते । पुरा हिमालय शिखरे संहिताजापी कामरागोज्झितः कश्चिद् ब्राह्मणोन्यवसत् । अथ दिव्यज्ञानस्य तस्य वर्षसहस्रान्तेऽतिसंतुष्टा सावित्री स्वयमागत्य च तस्मै जपवृद्धिं प्रादात् । अथ गच्छता कालेन भगवान्धर्मस्तमभ्येत्य प्रोवाच । धर्मात्मन् ! शरीरं त्यक्त्वाऽत्रागच्छ । पुण्यप्रभावात्त्वं दिव्यवपुर्लब्ध्वा दिव्यलोकं समवाप्स्यसि । तच्छ्रुत्वा सोऽवदत् । महात्मन् ! नाहमेतां सहजां तनुं त्यजे । न मे काचित् स्वर्गस्पृहाऽस्ति । मम मते तु यथा मही तथैव द्यौर्वर्तते । सर्वथा यदि गन्तव्यं तत्सदेहेनैव यामि नाऽन्यथेति वचनमाकर्ण्य यममृत्युकालास्तत्रागतास्तं प्रोचुः । भूदेव ! धर्मवचनमनुपालय । अत्रान्तरे तीर्थयात्राप्रसंगेन राजर्षिरिक्ष्वाकुस्तत्र समाययौ । स तं जापकमभ्येत्य प्रोवाच । विप्र ! धनं मे गृहाण । त्वत्सदृशः पात्रं कोऽस्ति ? तच्छ्रुत्वा जापकोऽवादीत् । महीपाल ! निवृत्तोऽहमधुना दानप्रसंगात् । किंतु ये प्रवृत्तधर्मनिरता विप्रास्त एव प्रतिग्रहे पात्रम् । सम्प्रति तुभ्यमहं समीहितमाविलंबितं ददानीति ब्राह्मणेनोक्ते राजा जगाद । द्विजवर ! यत् त्वया समुपार्जितं तज्जपफलं देहि । निशम्यैवं विप्रो गृहाणेति तमभ्यधात् । ततो राजोवाच । सत्ववान् भवान् वाग्युद्धैरजेयः । अपरं च त्वद्दत्तमेतज्जपफलं न ममोपयुज्यते । अथ विप्रेण पुनः पुनः प्रार्थितो नृपोऽगदत् । क्षत्रियोऽहंदाता न च प्रतिग्रहीता । पूर्वं यन्मया याचितं तद्विनोदाय न प्रयोजनाय । अत्रान्तरे विरूपौ कामक्रोधौ तमभ्येत्य मुदा न्यायं पप्रच्छतुः । तयोरेकोऽवदत् । अहमस्मै देयं धेनुफलन्ददामि । तच्छ्रुत्वाऽपरोऽब्रवीत् । मया दत्तं पुनर्न ग्राह्यामिति मे निश्चयः । अथ राजा विवदमानयोस्तयोः प्रश्नोत्तरे च सुचिरं विचार्य जगाद । यो दीयमानं न गृह्णाति स जितः । एवमाकर्ण्य विप्रो राजानमुवाच । भूप ! किं त्वं मम न गृह्णासि ? अथवा सर्वः परोपदेशेष्वेव कुशलो भवति । जापकेनेति गदिते तौ कामक्रोधौ विलोक्य सह भोक्तव्यमित्युक्त्वा नृपतिः फलं जग्राह । ततः स विबुधे स्वर्गे प्राप्ते स जापकस्तेन भूभुजा सह प्राणे मनः समावेश्य नासापुटद्वयं पश्यन् षट्कोशं व्योम पूरयामास । ततो भ्रूमध्य निहितज्योतिर्ब्रह्मसंपुटं समुद्घाट्याऽतिसूर्यानलद्युतिरभवत् । अथ द्विजमहीभुजेस्तालुरन्ध्रसमुत्थं तत्तेजः साक्षात् प्रादेशपुरुषाकृति ब्रह्माणमविशत् ।

अथ ज्ञान विषये भूभुजा पृष्टो भीष्मोऽब्रवीत् । पुरा प्रजापतिर्मनु र्बृहस्पतिंहेयोपादेयलक्षणं सुखदुःखादिकं कर्म समुपादिशत् । यस्मात् कर्मणः प्रवृत्तिर्भवति । तत्सुखमप्यसुखम् । किं च यत् कामरागविवर्जितं सुखदुःखोज्झितं च तज् ज्ञानमभिधीयते । तत्र श्रौतकर्म सुखाय । तद्विरुद्धमसुखाय निगद्यते । ततो दानादिकाः

क्रियाः शुद्धसमाधिनियमैर्विभान्ति । नरास्तैस्तैः कर्मफलैस्तत्तदाकारभेदतो राग-मोहवशी कृताःसुखदुःखेषु सीदंति । इयं जगदुत्पत्तिस्थितिसंहारकारिणी महा-भूतमयी माया छायेवाकाशदर्शिनी कृता । यथा सदा सान्निहितोऽपि काष्ठान्तोऽनलो धूमाद्यैर्न विलोक्यते । तथा शरीरान्तर्गतोऽयं जीवात्माऽपि मोहाद्यैर्न दृश्यते । हेम्नि-कटकादिवत् किं वा काष्ठे सालभंजिकेव जगदखिलमात्मनि सदप्यसदिव स्थितं भाति। यथा वने गजो गजेनैव गृह्यते । तथा ज्ञानं ज्ञानेनैवोपलभ्यते । किं विस्तरेण । सर्प-पादान् सर्व एव जानाति । नान्यः कश्चिदिति सारांशः ।

अथ पार्थेन वैष्णवस्वरूपं पृष्टः पितामहो दिव्यदृष्टिभिर्नारदादिभिः संकथितं प्रो-वाच । भगवान् पुंडरीकाक्षो नाभिपंकजाच् चर्तुमुखं सृष्ट्वा सम्पूर्णसंसारं चक्रे । ततो मधुमुखान् दैत्यान्हत्वा शाश्वतीं स्थितिं विदधे । सर्वहरः संकर्षणः प्रलये रुद्रतां याति एष एव सर्गस्थितिविनाशानां कारणं मृणालीलीलया येन वराहेण मही समुद्धृता । वासुदेवः शाश्वतं ध्रुवमव्ययं परं धाम । गुरुर्निवृत्तधर्माय शिष्यायेति निवेदयामास । जंतवः किल विचित्रविष्णुमायामोहिता रागद्वेषमदग्रस्ता आयान्ति च यांति । ततः शुक्र-शोणितसंभूताः संसारिणो यांति । विपाकविषमभूमा ललनाश्च तान् मोहयंति । स्त्रियो हि-नाम रागद्वेषविषादानां संगतिग्रंथिरज्जवो वा संसारकारामंदिरशृंखलाः संति । यतेन्द्रि-येच्छा मूलवीजपरिप्लोषाश्च ब्रह्मचारिणो येषु कामो न जायते । तएव हि संसाराद्विमुच्यंते एता मनोवहाः सिराः संकल्पजं श्वभ्रं वहंति । येषां विरागेण तच्छुष्यति । ते परमप-गताः । देहिनामनाद्यंतस्तृष्णातंतुर्विसानामिव सहजोऽन्तःस्थितो निःशेषं हन्तुं च शक्यते । युक्तसमाचारैः शान्तैर्हृदि विशुद्धगगनप्रभं नारायणं दृष्ट्वा शांतिरवाप्यते ।

अथ कथं जनको मोक्षं प्रयात इति राज्ञा पृष्टो देवव्रतो मिथिलाधिपतिकथामवर्ण-यत् । पूर्वमाचार्यशतसेविनो जनकस्य ब्रह्मनैष्ठिकः कपिलः पंचशिखो नाम गुरुर्बभूव अथैकदा स गलज्जातिनिबंधः कर्मबद्धोऽप्यवासनो राजानमुवाच । राजन् ! अहंकार-विकारेषु मूलच्छेदविधायिनामवधानबलादेव भवविभ्रमो भिद्यते । सर्वमिदं मयि भाति सर्वत्र चाहमवस्थित इत्यसंसारिणामेव सतांवृत्तिर्महीयसी कथिता । ज्ञानिनः सदैव चित्त-वृत्तिनिरोधं कृत्वा त्यागमेव प्रशंसन्ति । यैर्गुणत्रयविमुक्तोऽसौ क्षेत्रज्ञो दृष्टस्ते पंके शशि-करा इव दोषैर्न लिप्यंते । तोषजुषि फले नष्टे पुण्यपापयोः क्षीणयोरव्यंगा गगनाकार-सूरयो महत्पश्यंति । सात्विकस्तथाबधं मुंचति । यथा चरन्मृगः शृंगं वृद्धोरगस्त्वचं विहगश्चोन्माथितं सालं च परित्यजति । निशम्यैवं गुरुवचनं राजा जनको रागद्वेषविवर्जि-

भूत्वा दग्धामदग्धां वा मिथिलां नाज्ञासीत् । ज्ञानवानेवं संसारार्णवं तरति ।

अथ सुखं किमिति पार्थेन पृष्टो भीष्मः पुनरब्रवीत् । राजन् ! संतोषशालिनां दान्तानामिहाऽमुत्र च सुखं विद्यते । धृतिर्दमस्तेजो दमः कीर्तिर्दमो रतिर्दमः किम्बहुना दमप्रसक्तानां पुंसां लोके कोऽपि शत्रुर्नास्ति । ततस्तपः किम् ? व्रतं च किमिति पृष्टो देवव्रतः कौन्तेयमुवाच । युक्ताहारो नरः सदा भुंजानोऽप्युपवासी स्यात् । उपवासो हि मूर्खाणां केवलं प्राणशोषणं श्रूयते । यथा सदा स्वदारेषु रतो नरो ब्रह्मचारी भवेत् । एवं यज्ञोपयुक्तमांसाश्यपि मांसविवर्जकः कथ्यते । यः सदाऽतिथिद्विजभृत्यानां शेषमश्नाति । सोऽमृताशी विज्ञेयः । ततो राजाऽपृच्छत् । कर्ता नरः कर्मफले किन्न वेत्तीति राज्ञा पृष्टो भीष्मोऽब्रवीत् । पुरा शक्रः प्रल्हादमुपसृत्य पप्रच्छ । दैत्येन्द्र ! त्वमधुना स्थानच्युतोऽसि । मया च ते बान्धवा हताः । परं शोकस्थाने त्वं कथं निराकुल इवेक्ष्यसे ? एतदाकर्ण्य दैत्यराजस्तं प्राह । शक्र ! त्वं वृथा किं कत्थसे ? भावाः स्वभाव चपलास्संति । तत्र निरर्थकः पुरुषार्थः । रौप्यवर्जितः सुरूपो, निरक्षरो बुद्धिमान् प्रमत्तश्च नीतिसम्पन्नः कथ्यतेऽत्र को हेतुः ? वृद्धसेविभिः सुखभ्रंशे कदाऽपि शोको नहि कर्तव्यः । सद्भावेऽभावो भवेत् । लोके भावाश्च भ्रूभंगभंगुरा विलोक्यन्ते । निशम्यैवमुपदेशं शक्रोऽतिसंतुष्टो बभूव । साधवो द्वेष्टारो न भवंतीति सत्यैषा लोकभणितिः । राज्ञामकालवन्हिनाऽत्र विभवकानने दग्धे किन्धैर्यमिति पार्थेन पृष्टः पितामहोऽब्रवीत् । पुरा भ्रष्टराज्येषु दैत्येषु वैरोचने च नष्टे प्राप्तैश्वर्यः शतक्रतु ब्रह्माणं गत्वाऽपृच्छत् । प्रजापते ! यः स्वशोभया लोकपालविभवमप्यभिभूय जगन्नाथो बभूव । स बलिः क्वाऽद्य वर्तते ? तच्छ्रुत्वा विरंचिरुवाच । देवाः ! स भ्रष्टैश्वर्यो बलिः खरो भूत्वा शून्यागारे स्थितोऽस्ति । श्रुत्वैतन्मुदितः सुरपतिरैरावतं समारुह्य तूर्णं तं द्रष्टुमगमत् । सोऽथ तत्र खररूपिणं तुषाशिनं च तन् दृष्ट्वा मनस्याचिन्तयत् । अहो ! को वा विपद्भिर्न पीड्यते ? ततस्तमुपसृत्याऽपृच्छत् । भद्र ! त्वं त्रैलोक्यनाथो भूत्वाऽपि कथमिमां शोच्यां गतिमापन्नोऽसि ? क्व तच्छत्रम् ? क्व चामरम् ? क्वाऽप्सरसां गीतम् ? क्व च सा ब्रह्मदत्ता हेममाला ? दैत्यराज ! अपि स्मरसि किम् । यत्तव शासनात् पृथिव्यकृष्टपच्याऽभूत् ? एवमैरावणस्थस्य शक्रस्य सुभाषितं श्रुत्वा वामनवंचितो बलिर्धैर्यपूर्वकं प्राह । सहस्राक्ष ! तरंगतरलालक्ष्मीरायाति च याति । अस्माभिः किमपकृतम् ? यच्छत्रवः प्रनृत्यंति । लोके निस्तरंगजलाधिवत् स्वसत्वस्थोऽहं महता कालेन कथाशेषीकृताः श्रियो दृष्ट्वाऽपि नाऽनुशोचामि । अवश्यं विधिदौरात्म्यात् संपदो विपदन्ता हि भवंति । अतः

को विनश्वरः कालकवलीकृतां तां लक्ष्मीं शोचेत् ? सर्वत्र कालोऽयमनतिक्रमणीयो विजृंभते । यत्तुषैः कल्पितवृत्तिरहं खरतामधुना प्रयातः । विकोशाशापलाशे संसारोरुसरोरुहेऽस्मिन् कालभृंगोऽजसा जनकिंजल्कं पिबत्येव । किम्बहुना । शक्र ! तस्य जगद्ग्रासगरिष्ठस्य कालस्य शासनाद् भवानपि स्मृतिशेषदशां गमिष्यति । इयन्तरला लक्ष्मीः प्रयाति । इदमलक्षितमायुः स्रवति । विलोक्यैवं मद्विधो जनो वस्तुस्वभावेऽस्मिन् को नु शोचति ? लोकेऽस्मिन् केनाक्षयमायुर्लब्धम् ? कस्य वा वियोगः प्रियः ? चपलेयं लक्ष्मीः कस्मिन्वा दृढतया निषण्णेतिवदतस्तत्कायान्निर्गतां ललनां विलोक्य शक्रोऽपृच्छत् । हरिणाक्षि ! का त्वम् ? किमर्थं च दैत्यराजविग्रहान् निष्क्रान्ताऽसि ? तच्छ्रुत्वा साऽवदत् । देवराज ! विस्मृताचारमुच्छिष्टस्पृष्टसर्पिषं चैनं त्यक्त्वा सुभटखड्गग्रधाराजलनिवासिनी श्रीरहं त्वां समुपस्थितेत्यभिधाय चतुर्भिः पादैर्भूमिजलवायुवन्हिषु सन्निधिमादाय शतक्रतुमुपाययौ ।

पुरा शक्रः श्रीविहीनं नमुचिन्नाम दानवं पप्रच्छ । दितिसुत ! शोककालेऽस्मिन् किन्न शोचसि ? एवमाकर्ण्य निःस्यन्दोदधिधैर्यभूर्दैत्योऽवदत् । मघवन् ! शोकग्रस्ता एव द्विषदानंददायिनो भवंति । शोकेन प्रज्ञा नश्यति । प्रज्ञानाशो हि विपत्तये प्रथितः । शोकदग्धशरीरस्य पुनः श्रीप्ररोहः कुतः ? किम्बहुना । स्वकृतं शुभाऽशुभं कर्मैव परिपाके भुज्यते । सज्जनानामम्लानवदनानां शत्रवोऽन्तरज्ञा न हि भवंति । अथ कदाचित् सहस्राक्षो बलिमुपसृत्य पुनरपृच्छत् । दैत्यवर ! त्वं व्यसनेऽप्यविलुप्तधीरसि । कोऽत्र हेतुः ? तच्छ्रुत्वा सोऽब्रवीत् । शूराणामवश्यमेव कर्मायत्तौ जयपराजयौ स्थितौ नाऽसि त्वं कर्ता । सर्वमिदं कालप्राप्तं भज । भवादृशां सहस्राणि यास्यंति । परमकालो न याति । शक्र ! त्वमपि कालेन गंता । धैर्येण किं विकत्थसे । सूक्ष्मधिया विचिन्वानोऽप्यहं लोकेषु तन्न पश्यामि । यत् कालजिव्हया लीढं न स्यात् । कालेन भुवनाधिपाः कथाशेषविभवाः श्रूयंते । शक्र ! त्वं वृथा किं प्रमाद्यसि ? अहमेव हि दर्पमोहितं सानुगं त्वाञ्जेतुं शक्नोमि । किन्त्वब्धेर्वेलेव कालोऽयं मम बलं सोढुं न क्षमते कालेन विपदः कालेनैव च संपदः समायांति । स्वकर्ममुद्राणां पुरुषाणां कोऽस्त्यत्र शोकावसरः ? निशम्यैतत् सहस्राक्षोऽमर्षसाहसाद्विरतोऽभवत् । ततः क्षणं ध्यात्वा तमूचे । महाशय ! यथा त्वमात्थ । तत् तथैव । परं यदा कलिस्पृशो लोका निर्मर्या भविष्यंति । तदा त्वं दारुणपाशैर्विमुक्तः स्वास्थ्यं गामिष्यसीति सत्यमवगच्छ ।

अथ राज्ञा शुभाऽशुभपूर्वरूपं पृष्टो भीष्मो जन्तूनां विनाशोदयलक्षणञ्जगाद पुरा नारदमुनिसमेतः शक्रः सुरसरित्तटे लक्ष्मीमवलोक्य पप्रच्छ । देवि !

तत्वमिहागमनकारणं ब्रूहि । निशम्यैतद्वाक्यं सा कमलेक्षणाऽवदत् । देवराज ! नष्टाचारान् दैत्यान् विहाय साधुसुरसद्म तवान्तिकं सम्प्राप्ताऽस्मि । पूर्वमसुराः सदाचाराः स्नाता हुताग्नयः स्त्रीपूजिता अजिता निःस्पृहा दातारः क्षान्ता अबंध्यरतिसर्गाः प्रभाते च घृतदर्शिनोऽभवन् । निशीथे तथोत्संगे दधिसक्तुभुजो नासन् । कारणैरेभि स्तानभूषयम् । परमद्य तु त्यक्तमर्यादास्ते मया परित्यक्ताः । दिनेष्वेतेषु ते दैत्या दर्पान्धाः स्त्रीजिता धूर्तसचिवा वृद्धावमंतारोऽअशौचा अमेध्यसूदसिद्धान्नभक्षकाश्च स जाताः । गृहेषु तेषां हासकेलिरता नार्यो धान्यं पयोन्नं विवृतं स्वोच्छिष्टस्पृष्टसर्पिषं च न वीक्षंते । पुरुषः स्त्रीयोग्यकेशांशुकविभूषणं धत्ते । स्त्री च स्वेच्छया पौरुषमाचारगतिसंलापं संविभर्ति । यत्रैवंविधः क्रमविपर्ययो भवति तत्र मम वसतिर्न भवति । सुरपते ! यत्राऽहं प्रसन्ना निवसामि । तत्राशाश्रद्धाकांतिजितिमतिवृत्तिधृतिक्षान्तयोऽपि सुखेन निवसंतीति ब्रुवाणां महालक्ष्मीं शक्रः समवाप्य त्रिविष्टपं प्रायात् । अतएव यत्र धर्मस्तत्रैव लक्ष्मीर्विराजते ।

अथ राज्ञा ब्रह्मपदं पृष्टः पितामहः प्रोवाच । पूर्वमसितो देवलो जैगीषव्यमभाषत । ऋषिवर ! त्वं वंदितो निन्दितश्च समः प्रियाऽप्रिययोस्तुल्यश्चासि । त्यक्तरागभयद्वेषश्च केन हेतुना लक्ष्यसे ? निशम्यैवं स्वतंत्रवृत्तिर्जैगीषव्योऽब्रवीत् । महामुने ! शांतमनसोर्मम सर्वमिदञ्जातम् । विद्यानलसमुद्भूतविवेकव्यस्तविप्लवाः संतो न हृष्यंति । न च शोचंति । ये मानावमानयोस्तुल्यास्तथा स्निग्धवैरिणोऽपि च समानास्ते चैव शाश्वतं सुखं लभन्ते । अहमेव सर्वतंत्रस्वतंत्रो ममेदं च सर्वमिदमिति योऽभिमन्यते । स एव पततिनाऽन्यः । परंतु ये स्वप्नमायासु प्रबुद्धा भूत्वा सर्वबंधविनिर्मुक्ता निर्भयाः संचरंति । ते चैवाक्षयं ब्रह्मपदं समाप्नुवंति । अतः समदर्शी निरहंकारश्चैव मोक्षपदं लभते ।

ततो जगतीभुजा सर्वत्र प्रियः पूज्यश्च कोऽस्तीति पृष्टो भीष्मः श्रीकृष्णोऽन्धकं यदाह तदवर्णयत् । लोकेऽस्मिन्नेकएव स्वच्छन्दचारी जितेन्द्रियो नारदो निखिलप्रियः पूज्यश्चास्ति । अथ पार्थेन पृष्टो भीष्मः सर्गस्थितिं कालं च प्रोक्तवान् । पुरा शुकेन पृष्टो व्यासदेवो द्विजकृत्यमब्रवीत् । राजन् ! सहस्रयुगपर्यन्तेष्वव्यक्तो व्यक्ततामगमत् । ततो ब्रह्मशब्दात्तु व्योमादिक्ष्मान्तपंचकं सृजति । अथ तदुद्भूते सर्गे कालेनाकाशशेषतां याते व्योमाद्यव्यक्तसंज्ञके विलयं प्रयातीति सर्गसंक्षेपोऽयं निगदितो मया । सम्प्रति द्विजकृत्यमाकर्णय । पूर्वं जातकर्मादिसंस्कारैर्विभूषितो द्विजो ब्रह्मचारी भवेत् । ततो गृही भवेत् । अथात्मानमात्मना पश्यन् वानप्रस्थो भवेत् । ततो यतिर्भवेत् । साम्प्रतं ज्ञानिनां वृत्तिं शृणु । अनादरविरक्तेच्छो ज्ञानवानात्मनोऽन्तर्विद्युत्तरलं परं ज्योतिः

पश्यन् समीरवत् सर्वव्यापी स्यात् । एवं शून्यस्थानैकनिलयः समदर्शी ब्रह्माणि लीयते । प्राणी कर्मणा संसारं याति । विद्यया च निः संसारो भवति । निजोद्भवाबिलीनेच्छः सततं स्वान्तविश्रान्तः संविद्विकचमानसश्च परमपदमवाप्नोति । एतदाकर्ण्य राजा भीष्मं पप्रच्छ । पितामह ! य एते पृथिवीश्वरा मृत्युवशं यातास्तेषां को मृत्युः ? कृपया वद । तच्छ्रुत्वा भीष्मोऽब्रवीत्। पुरा पुत्रशोकार्तं शत्रुवशमागतमनुकम्पकभूपालं च नारदोऽवदत्। राजन् ! विधिरेतत् सर्वमसृजत् । ततः शनैः शनैः प्रजा विपुलतां गताः । अथावर्त-माने भुवनेऽखिलंकृत्यं दृष्ट्वा स क्रोधं समाययौ । तत् क्रोधाद् दीप्तशिखिना दह्यमानेषु जंतुषु कृपावांस् त्र्यम्बकश् चतुर्मुखं क्रोधशान्तिं समयाचत । ततः शंभुप्रार्थितो धाता तं क्रोधाग्निं संजहार । अथ संहृतकोपात् कमललोचना नभःश्यामा रक्ताम्बरविभूषणा च कन्योदतिष्ठत् । ततो ब्रह्मा तामुवाच । भद्रे ! त्वं शनैः शनैः प्रजाः संहर । यतो ह्येषा प्रतिष्ठिता धरित्री भारेणाशु निमज्जति । निशम्यैवं दारुणं धातृवचनं स्वजन्म निन्दन्ती सा नेत्रजं जलं पाणिभ्यां गृहीत्वा प्रत्यवदत् । देव ! मद्विधा तव सुताचेयं घोरकर्माणि कर्तुं कथं शक्ता ? अपरं च नाऽहं बन्धुवियुक्तानां दुःखिनां गिरः श्रोतुमुत्सह इत्यभिधाय सा तपोवनं गत्वा विविधं तीव्रं च तपश्चक्रे। सा सर्वसंहारभीता कारुण्यशालिनी मृत्युरस्ति । ब्रह्मा तस्यै वरान् प्रादात् । तेऽश्रुबिन्दवो व्याधिरूपेण जनान्ताय भविष्यंति । मोहिता लोकास्त्वां न ज्ञास्यंति । राजन् ! सा ब्रह्मणा विसृष्टा सर्वसंहृतिमृत्युरस्ति । ज्ञात्वैवं मा शुचः । यतः सा हि कन्नापसर्पति?निशम्यैवं पुनर्धर्मजेन धर्मतत्त्वं पृष्टः पितामहः परहि-तस्वरूपं धर्मसारं शशंस । राजन् ! धर्मगतिरतीव सूक्ष्माऽस्ति । सहसा सा विज्ञेनाऽपि ज्ञातुं शक्यते । क्वचिद्विपरीतविचाराणामधर्मोऽपि धर्मतां याति । पुराऽऽसीज्जाजलिर्नाममहामु-निः । स महाभागोऽन्तर्जलतपा बभूव । किम्बहुना । विश्वासाद् यज्जटासु पक्षिभिरपि कुलाया कृताः । अथैकदा स मूर्ध्नि निर्वृत्तान् पक्षिशावकान् दृष्ट्वा धर्मसंमत्तो बभूव । विलोक्यै तं राक्षसाः प्रोचुः । मुने ! त्वं तुलाधारसमतामनासाद्यैव कथं माद्यसि ? नूनं स्फारतप-मपि व्ययं कर्तुं त्वं समुद्यतोऽसि । तच्छ्रुत्वा स मुनिर्वाराणसीं गत्वा तत्र तमन्विष्य च त मांसविक्रयजीविकं ददर्श । ततः स तुलाधारो ज्ञानदृष्ट्या च स्वयं तदागमनकारणं विज्ञा प्रोवाच । ब्रह्मन् ! धर्मस्तु गगनात्मकोऽस्ति । सर्वभूतेभ्योऽभीतैः कर्मनिपुणैरस भूतानामभयप्रदैश्च धर्मगतिरासाद्यते । अहिंसा परमो यज्ञः स पुण्यैर्यष्टुं शक्यते । गोप प्राणपीडनात् कृशप्राप्यं पापं पश्य । त्यक्ताभिमानस्पर्द्धानामात्मतीर्थैकसेविनामात्मयज्ञपरायणा नां च बान्धवा नैव शोचंतीति शिक्षां कथयित्वा स तुलाधरो जाजले र्मानमहामोहं निवा

मास । ततोऽसक्तकर्मस्थः स परमां गतिं प्रययौ । पुराऽऽसीद्विचख्नुनामको महात्मा । स महामुनिभ्यो ज्ञानमवाप्य लोकानादिदेश । लोकाः ! संसारेऽस्मिन्नहिंसैव परमोधर्मोऽस्ति । अयमद्रव्याऽम्बरः क्रतुरस्ति । एते कामात्मानः फलेच्छामनुसृत्यैव यत् पशुप्राणैर्यजन्ते । तत्तु मांसमत्स्यमधुप्रायं भोज्यं धूर्तैर्भोगाय कल्पितम् । लोलुपा दंभगुरवश्च पशुयागं प्रशंसन्ति । भगवान् विष्णुस्तु पूज्योऽस्ति । स हि जलैः पुष्पैश्च संतुष्यति । यथा शरीरं ग्लानिं नाथाति । न च कस्याऽपि मरणं भवेत् । तथा धर्मसाधनं कर्म प्रवर्तेत । एष एव हि धर्ममार्गः ।

अथ राज्ञा कार्याकार्यविमर्शाय पृष्टः पितामहः प्रोवाच । राजन् ! पुराऽऽगिरसोमुनिश्चिरकारीति विख्यातोऽभवत् । स यदा तदा चिरं विचार्यैव कर्माणि करोति स्म । तस्य तां दीर्घदर्शितां विद्वाँसस्तु प्राशंसन् परं मूर्खाश्चानिन्दन् । अथैकदा स मुनि स्वयं पित्रा जननीवधे प्रेरितः संदेहदोलविश्लथमानसश् चिरं निदध्यौ । अहो ! एकत्र गुरुवचोऽविलङ्घ्यम्परत्र च जननीवधो दुःसह इति मत्वा धर्मसंशये पतितो यावद्दुःखकलुषितोऽभूत्तावत् पश्चात्तापमनुप्राप्तस् तत्पिता स्वयमेव निजाज्ञां निवारयामास । एवं महामुनिश्चिरकारी विमर्शे न स्वयं मातरं गुरुवाक्यं च ररक्ष । नूनं विमर्शो हि शुभास्पदमस्ति । राजा लोकानपीडयन् सदाचारं कथं रक्षेदिति राज्ञा पृष्टो देवव्रतोऽब्रवीत् । पुरा सत्यवान् नाम साल्वराजो बभूव । स चैकदा बध्यानतिपीडितान् दृष्ट्वा द्युमत्सेनं पुत्रं बभाषे । वत्स ! धर्मगतिरतिसूक्ष्मास्ति । विप्रासामर्थ्येन यथा तथा दस्यव एते त्वया कथं निगृह्यन्ते ? एकस्यैव बधेनैते भार्यापुत्रबान्धवा बहवो जना हता भवंति । तस्माद् दण्डो विवेच्यते । निशम्यैवं पितृवचो द्युमत्सेनोऽब्रवीत् । तात ! दण्ड्यानदंडयन् राजाऽगाधे भयमहावटे प्रजाः क्षिपति । पुरा जना मृदवोऽल्पद्रुहो लघुदण्डाश्चाभूवन् परमद्य तु कालविपर्ययाद्वध्यदण्डेऽप्यसंयतास्संति । एवं दण्डविषये भूपराजपुत्रयोः परिभाषणमभूत् ।

ततो भूभुजा प्रवृत्तं निवृत्तं च धर्मं पृष्टो गांगेयस्तत्ववेत्ता व्याजहार । पुरा नहुषस्य सौरसत्रे यूपसंगताङ्गां विलोक्य स्वच्छन्दस्वभावः कपिलः प्रोवाच । अहोनु दुर्वृत्तैर्हिंसा धर्माय परिकल्पिता ? कामफलेप्सवो लुब्धाः परोपघाते नन्दंति । तच्छ्रुत्वा द्विजः स्यूमरश्मिर्गां प्रविश्याऽब्रवीत् । त्वया वेदवचनस्यापि प्रामाण्यं नाङ्गीक्रियते ? यजेत दद्यादित्येषा श्रुतिः किंवा स्मृतिर्न श्रुता ? गार्हस्थलक्षणो धर्मो यज्ञाङ्गोह्यखिलाश्रयश्च कथितः । निशम्यैवं कपिलोऽवदत् । महानुभावाः ! शुद्धज्ञानमयः क्रतुरेव तमसस्तारयति । द्रव्ययागस्तु बन्धनं निगद्यते । एवमाकर्ण्य स्यूमरश्मिः पुनः प्रोवाच । क्रियया विशुद्धे हि चिन्मणौ ज्ञानं प्रतिमामाश्रयति । अथ धर्मार्थकामानां किं वरमिति भूमिपेन पृष्टो गांगेयोऽब्रवीत् ।

पुरा कश्चिद्धनार्थी ब्राह्मणो देवानाराध्यापि निष्फलोऽभवत् । ततोऽसौ भक्त्या चिरं कुंडधाराख्यं ज्ञानधरं सिषेवे । ततस् तस्मिन् संतुष्टे स स्वप्ने यथोचितं धनं वितरंतं मणिभद्रं वैश्रवणालये ददर्श । अत्रान्तरे कुंडधारस्तमभ्येत्य ब्राह्मणार्थं धनमयाचत । अथ ब्राह्मणो हितकारिणा कुण्डधारयोगेन वरान्निर्वेदमवाप्य तपसे वनमयासीत् । ततोऽसौ धर्मप्रभावेण दिव्यदृष्टिर्नभश्चरोऽभवत् । एवं त्रिवर्गसारो धर्म एव शुभफल प्रदोऽस्ति । किम्बहुना । अर्थकामप्रसक्तानां नृपाणां नरके स्थितिं निशाम्य को नाम धर्मोपार्जने मतिन्न कुर्यात् ? अतएव प्रोक्तं धर्ममूलं हि सर्वसुखम् ।

पुराऽसितो देवलो नारदेन पृष्टोऽवदत् । महामुने ! अहिंसैव परमधर्मोऽस्ति । अनिर्वेदं श्रियोमूलं गणय । सर्वत्यागश्च पराशान्तिरिति मत्वा लोके व्यवहर । श्रोत्रा-दिपंचकं मनो बुद्धिश्चित्तं चेत्यष्टौ ज्ञानेन्द्रियाणि । वागादीनिपंच षष्ठं च बलमिति कर्मे न्द्रियाणि । एवं मिलित्वा चतुर्दशेन्द्रियाणि भवंति । ततो भावा गुणाश्चेन्द्रियसहिता संकलनया सप्तदश स्मृताः । अथाष्टादशो देही यः शरीरे शाश्वतो विराजते । क्षेत्रज्ञेन पुनः संगमं वृक्षपक्षिवद्याति । अक्षीणवासनातंतुर्भिन्नोऽपि न हि मुच्यते । विच्छिन्नकर्मा पुण्यपापविवर्जितो निर्द्वन्द्वश्च देही देहवियोगे परब्रह्माऽधिगच्छति । पूर्वं प्रक्षीणवासनाजालो जनको माण्डव्यमब्रवीत् । ऋषिराज ! अर्थवर्जितोऽहमधुना सुखिनां धुर्योऽस्मि । यस्य नगरे दह्यमानेऽपि किंचिन्न दह्यते । संसारमरुतप्तानां तृष्णामूर्छितचेतसां जनानां संतोषामृतवारिदः परमभेषजं नाम । लावणेन वारिणेव धनेन तृष्णा वर्द्धते विवृद्धतृष्णाया गोःशृंगमिव शोको विवर्द्धते । ज्ञात्वैवं तृष्णां परित्यज्य च गतसंगोऽहं निर्दुःखपदमाश्रितोऽस्मि । लोके यः कूर्माङ्गवत् संहृतेच्छो भवति । स एव कर्म बन्धनाद्विमुच्यते । निशम्यैवं जनकवचनं माण्डव्यः संगं परित्यज्य च शाश्वतमनाम ब्रह्मसायुज्यमवाप । पुरा हारीतमुनिः शिष्यानुपदिदेश । छात्राः ! यतेन्द्रियेच्छः सन्यासी सर्वभूतान्यपीडयन् विचरेत् । निर्वेदरहितो मौनी सततं परमेश्वरं ध्यायन् ध्रुवं ब्रह्मप्रका विशति । पुरा भ्रष्टैश्वर्यो वृत्रः शुक्राचार्यमुपसृत्य प्रोवाच । गुरुदेव ! पांचभौति तिष्ठतां कर्मबन्धानां जीवानां संपदस्तथा विपदः पर्यायेणैव भवंति । निःस्पृहोऽहं दुःखे विषीदामि न च सुखे प्रसीदामि । किम्बहुना । अवर्णोऽहं वर्णसंगमादधुनाऽपि न यास्यामीत्यभिधाय दानवपतिर्यदृच्छोपगतात्सनत्कुमारान्महामुनेर्जगत्कारणमव्य विष्णुमज्ञासीत् । ततः स निरन्तरं तं ध्यायन् ज्ञानमवाप्य परमगतिमाससाद । राजन् सोऽयं नारायणः कृष्णस्तव सम्बन्धी वर्तते । अथ राज्ञा वृत्रकथां पृष्टः पितामहः पु

प्रोवाच । राजन् ! पुराऽत्र वृत्रासुराख्यो महादैत्योऽभवत् । स चोग्रतपसा वरमवाप्य रणे देवराजमपि जिगाय । ततो वसिष्ठेन प्रबोधितः शतक्रतुर्विष्णुतेजोविभूषितं वज्रमवाप्य तेन तं महाकृतिं जघान । ततो वज्रहतस्य वृत्रस्य कायात् कृशा मुक्तकेशी घोरा च ब्रह्महत्या विनिर्गता । साऽथ विद्रुतं सहस्राक्षं चिरमन्विष्य च तं कण्ठे जग्राह । ततस्तया चिराय गूढमाक्रान्तं तं विलोक्य कृपया चतुराननः शक्रमुक्तये तां ययाचे । अथ ब्रह्मवाक्यात्सा ब्रह्महत्या चतुर्धा स्थितिमवाप्य सपदि देवराजं तत्याज । तत्रादौ यः प्रज्वलितेऽग्नौ यत्ताद्वीजादिकं नार्पयेत् । यः पर्वकाले त्रिटपिच्छेत्ता स्यात् । यो रजस्वलां कामयेत् । यश्च जलेश्लेष्ममलादिकं प्रक्षिपेत् । स ब्रह्महत्यामवाप्नोतीति समादिश्य-श्रीविरंचिस्तिरोदधे । अथ राज्ञा ज्वरोत्पत्तिं पृष्टो भीष्मः पार्थमभाषत । राजन् ! पुरा भगवान् गौरीपतिः सुमेरुशृंगे स्थित आसीत् । तत्र कस्यचित् प्रमथमुखाद् दक्षप्रजापतेर्देवाकीर्णं यज्ञं शुश्राव । ततो हरो गौरीगिरा कथं त्वं यज्ञेऽवभागार्होऽसीति वाक्यं निशम्याऽनाहूतोऽपि दक्षयज्ञविध्वंसे मतिमकरोत् । अथ क्रुद्धस्य तस्य ललाटस्वेद-वारिकणात् सहसा त्रिशिरास्ताम्रलोचनो ज्वरः समुद्ययौ । सोऽथ दुःसहो ब्रह्मणा किल भागशो विन्यस्तोऽभवत् । अन्यथोत्कटं च तं को नु सहेत ? तत्र संतापं गजकुंभेषु शिला-जतु पर्वतेषु निर्मोकपट्टं सर्पेषु नीलिकां जलेषु खोरकनिःश्वासं गोषु ऊषरं क्षेत्रभूमिषु पादरोगं हयेषु नेत्ररोगं पिकेषु पित्तभेदंमेषेषु हिक्काश्वासं शुकेषु शिखाभेदं मयूरेषु श्रमं सिंहेषु तथा जन्मविवाहदेहान्तेषु मनुष्येष्वेवं बहुधावस्थितं घोरं ज्वरं च प्रचक्षते । ततो रुद्रो वीरभद्राख्य गणं भद्रकालीं देवीं च ससर्ज । अथ तौ बहुद्रव्यं प्रजापतियज्ञं गत्वा तं खण्डितं कृत्वा धावन्तं मृगरूपिणं च यज्ञं ताडयामासतुः । ततः प्रजापतिर्दक्षो विरूपाक्षं शंकरं तुष्टाव । भगवन् ! देवाधिदेवमहादेव ! शृणु मदीयां प्रार्थनाम् ।

नमो यज्ञाय वन्द्याय शर्वाय वृषकेतवे ।
सर्ववेदमयोङ्कारवाच्याय परमात्मने ॥
उग्रायोदग्रमहसे त्र्यम्बकाय भवच्छिदे ।
आशुतोषाय रुद्राय मृडाय च नमो नमः ॥

ततो भगवति त्रिपुरान्तके तुष्टे दक्षो महेशवराद्यज्ञसहस्रफलं लेभे ।

एवमाकर्ण्य राजाऽपृच्छत् । पितामह ! विजितलोकानां मृत्युभयं कथं निवर्तते ? तच्छ्रुत्वा शान्तनवोऽब्रवीत् । पुरा समङ्गाख्यो महात्मा बभूव । अथैकदा नारदेन पृष्टः सोऽवदत् । मुने ! प्रायेन्द्रियजयान्नूनं शोको मृत्युश्च विनश्यति । यद्यपि पंचे-

न्द्रियहितं तुष्ट्यै भवति । परंतु सा तुष्टिरुत्सेकमेव जनयति । किं बहुना । यत्रोत्सेकस्तत्र विनिपातो निश्चित एव । ब्रह्मपुत्र ! अहमरागमोहो विचरामि । तेनाऽशोकत्वमवाप्तवानस्मि । त्वमधुना मम स्थितिं पश्य । मुने ! वीतरागो हि सुखमनंतं लभते ।

अथ शास्त्रं निःसंशयं श्रेय इति राज्ञा पृष्टो भीष्मः पुनरब्रवीत् । राजन् ! पुरा नारदोऽपि सर्वदर्शिनं गालवं प्रश्नमिमं पप्रच्छ । तच्छ्रुत्वा सोऽवदत् । मुने ! सर्वभूतहिते वर्तेत । अहंकारं सर्वदा परित्यजेत् । संसत्सु परनिन्दया स्वोत्कर्षं न ख्यापयेत् । पैशुन्यं परिहरेत् । लौल्यं नाश्रयेत् । आलस्यं विवर्जयेत् । रात्रिचर्यां न कुर्यात् । दर्पाद्बहुभाषी न स्यात् । इन्द्रियाणां हितमाचरेत् । सुखभ्रंशे नानुशोचेत् । दुर्लभञ्च कामयेत् । जानन्नपि कौटिल्यं न कुर्वीत । कुपात्रेषु न विश्वसेत् । सत्संगे सदा मतिं कुर्यात् । सदाचारपुरे वसेत् । पापं सहसा त्यजेत् । तथाऽनुतापदं कर्म न कुर्यादिति ।

ततो राजाऽपृच्छत् । तात ! शनैः शनैः मुक्तिः कथमवाप्यते ? तच्छ्रुत्वा भीष्मोऽब्रवीत् । पुरा सगरमरिष्टनेमिर्विमुक्तये यदवोचत् । तच्छृणु । राजन् ! भवपादपोऽयमाशालतावलयितोऽविद्यया च बद्धमूलोऽस्ति । प्राज्ञोऽपि सुखेन तं पातयितुं न शक्तः । कोहि ललनाधनबंधुषु जन्मसहस्रोत्थां वासनाभ्यासजां प्रीतिं च सहसा वारयितुं समर्थो भवति ? ललनांभोजषट्पदः कान्तां समारूढ श्रियं परित्यजेति विषसंकाशं वचनं को नाम पिबेत् ? अहो ! स्वयमेवार्जितेषु धनपुत्रकलत्रेषु क्षुद्राः क्षौद्ररसेष्विवासन्ना विनश्यंति । दैवकल्पितां व्यस्तां शिशुवृत्तिमालोक्य तद्वर्तनादानैरात्मानं कोह्यवसादयेत् ? यो लोहकांचनयोः किं वा पर्यंकपांसुसंस्तरयो रथ च वल्कलचीनांशुकयोः समानः स एव विमुच्यते । यः पुमानन्तवत्सकलं कलयन् परमनिर्वेदं गतः सर्वभावेषु च तटस्थो भवति । स एव मुक्तिपदमवाप्नोति । निर्ममः पुरुषो लोके कांचनाश्मनोरप्यन्ते दुर्दशां मत्वाऽविद्याग्रंथिभेदेन विमुच्यते । कथितं च ज्ञानादृते मुक्तिर्नास्ति ।

अथ राज्ञा शुक्रकथां पृष्टो देवव्रतोऽब्रवीत् । पुरा योगीश्वरः शुक्रो धनाधिपशरीरं प्रविश्य भूरिधनं जहार । ततो राजराजो दुःखात् तद्दस्युवृत्तं वनस्थाय पिनाकिने निवेदयामास । अथ कुपितो रुद्रो भृगुनंदनमादाय पपौ । ततोऽसौ विपुले शिवोदरे चिरं बभ्राम । सोऽथ दह्यमानोऽग्निना सर्वस्रोतःसु रुद्धेषु महादेवबल्लभां तुष्टाव । ततः स शुक्रद्वारेण निर्गतः शुक्रतां ययौ । एवं सतीसंरक्षितः शुक्रः पूर्ववत् स्थितिञ्च लेभे ।

ततः किंश्रेय इति राज्ञा पृष्टः पितामहः प्रोवाच । राजन् ! पुरा पराशरो विदेहाधिपतिं यदुवाच । तच्छृणु । यस्य मनोरथो रथः शांतिरश्मिभिः संयतोऽवटे न चरति

तस्य कर्मिणोऽपि नित्यं सुखमस्ति। राजन् ! सतां भोगवियोगेषु निर्वेदो नाम संजायते। स च तपसे तपश्च संसारे शांतये भवति। नित्यं सदाचारप्रवृत्तानां स्वकर्मपरायणानां शास्त्र विधिमनुसरतां च जनानां संपदः स्वयमायांति। तस्मात् सदाचारः सर्वदैव रक्षणीयः।

अथ राज्ञा पृष्टः पितामहोऽब्रवीत्। पुरा हंसरूपी प्रजापतिः शिष्यानुपादिशत्। क्रोधः कुजंतूनां मृत्युः। क्रोधेन दग्धः शोचति। क्रोधान्धाश्च निपतंति। किं बहुना। ग्रस्तरागादिबन्धनो जितक्रोधश्च सुखं शेते। ज्ञात्वैवं बुधः क्रोधं परित्यजेत्।

ततः किमजरमिति राज्ञा पृष्टो भीष्मो जगाद। राजन् ! भगवान् वसिष्ठो जनकं यदवदत्। तदाकर्णय। लोके चतुर्दशविधः सर्गो गुणाः कर्माणि चोदनाश्च सर्वमेतत् क्षरं विद्यादक्षरन्तु परमपदमस्ति। अयमक्षरक्षरसंगो देहिदेहसमागमोऽस्ति। ततो देहताम्र कलादाहेऽक्षरं हेमवद् दृश्यते। एवं वशिष्ठवचनं श्रुत्वा जनकः कृतार्थो बभूव।

अथ राज्ञा पृष्टो भीष्मोऽवदत्। पुरा गुरु र्याज्ञवल्क्यः स्वशिष्यं जनकं परमाक्षर निर्णयं प्रोवाच। राजर्षे ! अध्यात्मचिन्तागन्तव्यमधिभूते कारणम्। गुणत्रयविनिर्मुक्तमक्षरं च वेद्यवर्जितम् प्रोक्तम्। निस्तरंगोदधिनिभा योगिनः सांख्ययोगोदितंशाश्वतं पश्यंति। श्रीसूर्यनारायणप्रसादान्मे वदनं सरस्वती प्रविष्टा। तयाऽहं वेदविद् भूत्वा सारपदमेव श्रितोऽस्मि। पंचविंशके प्रलीनं व्यक्तं षड्विंशो मुच्यते। इति गन्धर्वराजो विश्वावसुं बोधयामास। अथ गृहेऽपि तिष्ठन् को नु मुक्त ? इति पार्थेन पृष्टो देवव्रतो बभाषे। राजन् ! पुरा त्रिदण्डधारिणी सुलभा नाम भिक्षुकी मुक्ता बभूव। सा वरानना युवतिरेकदा विहायसा जनकं द्रष्टुं मिथिलां प्रायात्। अथ मैथिलस्तां लावण्यललिताकृतिं विलोक्य सुधासारसिक्तांग इव पाद्यासनादिभिस्तस्यै समुचितां पूजां चक्रे। ततस्तत्र सा भुक्तोत्तरं जनकमुपेत्य सभायां रश्मिभिः स्वीकृतान्तरं चक्रे। साऽथ चारुनयना नेत्राभ्यां तं प्रविशंती सुप्तसुधानदीव क्षणमन्तरंगाऽभूत्। ततस्तद्भाव स्पृष्टभावो जनकः सास्मितं बभाषे। अयि ! अनवद्यांगि ! चित्तसुधासिन्धुचंद्रिका त्वं का कस्य वाऽसि ? कुतश्च संप्राप्ता ? अहं सांख्यवेदविदः पंचशिखस्य शिष्यो विवेकबलान्मोक्षमवाप्तवानस्मि। सुभगे ! किरीटवानपि मुण्डितेच्छो नगरस्थोऽपि वानप्रस्थोऽहमस्मि। महात्मना पंचशिखेन मे स्वान्तबोधकपालेऽस्मिन् ज्ञानबीजं संस्कृतम्। अतोऽङ्कुरो विषयेषु न जायते। नैकान्तवासिता क्षान्त्यै न च गेहं बन्धनाय भवति। किन्तु निर्लेपचेतसां सर्वत्रैव मुक्तिर्विहिता। त्वया योगतः किमयमन्तर्मे प्रवेशः कृतः ? एष संकरो वर्णगोत्राश्रमादीनां विभेदाज् जातः। वेदस्माज् जेतुमिच्छसि। तदेष ते मानः

सिद्धः । तवायं स्वशास्त्रे दोषो यत्परान् स्पृशसि । किम्बहुना । सती भूत्वाऽपि त्वं सर्वाङ्गसंगं कुर्वाणा न लज्जसे ? भद्रे ! कारणं ब्रूहि । अत्र मिथ्या वक्तुं त्वन्नार्हसि । निशम्यैवं राज्ञः परुषवचनमपि सा धैर्यान्न चचाल । किन्तु प्रविष्टाऽपि सा छायेव पुरतः स्थिता सस्मितमब्रवीत् । राजन् ! मुक्तःसन् सज्जनसंसदि त्वं पूर्वाऽपरविरुद्धं भेदवाक्यं वदन्न राजसे ? त्वं काऽसि ? कुतो वाऽऽगतासि ? कस्य चाऽसि ? एवं यदभिधीयते ? तत्र त्वया काष्ठजन्तुवद् गुणभौतिकं किन्न श्रुतम् ? राजन् ! त्रिंशद् गुणकलाकारोऽव्यक्तो व्यक्तत्वमागतोऽस्ति । सोऽयं तत्त्वचक्रस्य संघातः कस्य नास्ति । किं वा कस्यास्ति ? अथ ताः शुक्रसेकाद्यवस्था जरावधि तथा न लक्ष्यंते । यथा याता दीपार्चिषः । अतः सोऽयं कस्याऽस्ति । कस्य वा नास्ति । जगत्संबंध इव स्वांगैरपि संबन्धो न विद्यते । मुक्तोऽप्यात्मानि विम्बवन्नात्मानं कथं न पश्यसि ? राजन् ! विकल्पं पृच्छतस्तव समराराव-भग्नस्य दन्तिनो जयमालेव । नैषा मुक्तता शोभते । इदमपर्यन्तं राज्यं तिष्ठतस्ते विमुक्तता मरुतटे तप्तस्य वितृष्णतेव नाऽहं मन्ये । एता राजलक्ष्म्यश्चामरैः विवेकं लोलयंत्येव । छत्रैराच्छादयंति । मदकल्लोलैश्च हरंति । युद्धे सेनाहता राजपुत्र श्च निपातित इत्यादि साधारणदोषै र्नृपाणामेव दुःखिता भवति । कोशे धनं शाले गजा गृहेषु सचिवाः शय्या विभागे महिषी त्रियामायान्तु त्वमेकक एव । शय्यायामकंकणमहारं च वपुर्वर्तते । स्वप्ने उच्छ्वास शेषो विमुखश्चेतस्ततो धावसि । शून्यनिलया भिक्षुकी शून्येऽस्मिन् तव विग्रहे क्षपामेकां वसामि । तत्र ते का क्षतिः ? यद्यहं योगतस्ते वपुरस्पृशंती प्रविष्टा । तन्मुक्तः कथं सरागवत् स्पर्शं वेत्सि ? वर्णसंकरभीरोस्ते पंचशिखो गुरुः कथम् ? यत् त्वयोक्तं तत्सर्वमधुना वृथा जातम् । ज्ञानवीजं मे नैवांकुरसमर्थं विषयेषु प्ररोहतीति स्वयमुक्तमपि न पश्यसि ? वयं सर्वेऽपि समाश्रयिसमाश्रयात् तरौ लता तत्र पुष्पं तास्मिन् द्विरेफा इवाऽभिन्नाः । चेत् त्वं सर्वात्मना पृथक्त्वं भागं प्रपश्यसि । तदेकान्त विभिन्नस्य कस्य केनाऽत्र संकरोऽस्ति ? स त्वं प्रवृत्तो निवृत्तिं न प्राप्तवानसि । किम्बहुना त्रिशंकुरिव मध्यस्थस्त्वं न दिवं न च भुवमाश्रितोऽसि । राजन् ! सर्वमेतन्मम वाऽहमेव सर्वमिति निष्ठामनासाद्य कथं मुक्तोऽसि ? निशम्यैवं सुलभोपदेशं राजा हृष्टो न च विषादी किन्तु तूष्णीं माकाश इव निर्लेपोऽतिष्ठत् । राजन् ! एषा मोक्षरीतिः ।

ततो राज्ञा शुकवैराग्यं पृष्टो भीष्मः पुनरब्रवीत् । राजन् ! पुरा वेदव्यास शुकदेवं यदुवाच । तदाकर्णय । पुत्र ! संसारमरणौ सरतामज्ञानिनां शीतातपव्या मरणावधिदुःस्थितिं पश्य । वत्स ! शरीरकुसुमेऽस्मिन् भृंगवज्जीविते स्थिते कपो

भावेषु ताटस्थ्यं न शोभते । यथालिखितमेवायुः किल लभंते प्राणिनः । अथ प्राप्त कालानां कोटिभिर्मुहूर्तमपि जीवितं दुर्लभम् । नानाभावरसाहृते स्वयमुत्पादितेऽस्मिन् वासना चौद्रपटले मग्नः को नाम क्षुद्रो मुच्यते ? लोकेऽस्मिन् जन्तवोऽपर्याप्तमनोरथा धनपुत्रदारां- स्त्यक्त्वा हन्त कालव्यालसमाकृष्टा गच्छंति । परलोके घोरमसिपत्रवनं तप्ता वैतरणीनदी तथोष्णकटाहाश्च संति । तत्र न गेहं न च बान्धवा मिलंति। यावदेतत्तारुण्यमनुपलक्षितं न गलति । यावच्च संतप्तचर्मवत् संकोचं न यासि । यावत् स्वप्नविलोचनो हिक्का- श्वासविपर्यस्तश्च कुलालचक्रवद्भ्रान्तो दशाऽपि दिशो न पश्यसि। यावद्धिरण्यवर्णां वसुधां वीक्ष्य बान्धवरहितो दीर्घं तमो न गच्छसि । यावच्छुभाऽशुभाक्रान्तो न हृष्यसि न वा विरौषि । तावत्समाधिविबुधो विनिवृत्तभवोभवेति पितृवाक्यं श्रुत्वाऽवाप्तनिर्वेदो वैयासकिः स्वमाश्रयं त्यक्त्वा पितरावामंत्र्य च श्रेयः समाधये ययौ। अतएव शुकदेवमुनिः पूज्यतमः।

एवं रणांगणे सुकृतदुष्कृतं कर्ममूलं निशम्य राज्ञा शुककथां पुनः पृष्टः पितामहः प्रोवाच । पुरा हारफणिरत्नांशुपिंजरो हरो मेरुकर्णिकारवने विजहार । तत्राऽसौ पुत्र कामः सत्यवतीसुतो व्यासो महत्तपसा महेश्वरात् पुत्रवान् भवेति वरं प्राप । ततः कालेन स मुनिः स्वयमागतां घृताचीमप्सरसं पश्यन् बन्ह्यर्थमरणीं ममन्थ । अथ शुकीभूतान्तां विलोक्याशु तस्य शुक्रं पपात । अथारण्यामरतस्याऽप्यस्य यो तनयोऽभवत् । सोऽयं व्याससुतः शुकदेवोऽस्ति । अथ गच्छता कालेन स महाशयो वृहस्पतेः सकाशाद्वेदविद्या मधिगम्य तपसा ब्रह्मचर्येण च दिवौकसामपि मान्योऽभूत् । ततोऽसौ पितुरुपदेशमवाप्य तद् गिरा मोक्षधर्मार्थनिपुणं जनकं द्रष्टुं पद्भ्यां ययौ । सोऽथ मिथिलामवाप्य तत्रत्य परुषवादिभिर्द्वाःस्थैर्निवार्यमाणोऽप्यक्रोधोऽतिष्ठत् । ततः सचिवप्रवेशितो मुनिसुतोजनक- राजस्य कक्षाद्वयमतीत्यान्तः पुरे पूजितोऽभवत् । किम्बहुना । यासां सितामृतैः शिवदग्धोऽपि कामो जीवति । ता नीरजनयना ललनास्तं पर्यचरन् । एवं ध्यानपरा- यणोयोगी तत्र वराहेशयने रात्रिं निनाय । प्रातश्च नृपस्तं द्रष्टुं समाययौ । ततो गुरु- पुत्रो जनकेन विधिवत् पूजितो रत्नासनोपविष्टश्च मिथिलेश्वरं पप्रच्छ । राजन् ! पित्रा भगवता व्यासेन विसृष्टोऽहं तवान्तिकं समायातः । साम्प्रतं गुरूपदेशसम्बन्धमनामयं ज्ञानं वद । तच्छ्रुत्वा जनकः प्राह । मुने ! शनैः शनैः क्रियासोपानपंक्तिभिः शुद्ध चेतसा विशुद्धं परमधामसमारुहेत् । यतो ज्ञानानिलेन संकल्पविकल्पात्मके घनाडम्बरे विलीने द्वन्द्वत्रियामाविरतौ च बोधभास्करो दृश्यते। अतः पूर्वं ज्ञानार्जनमावश्यकम् ।

यो ज्ञानी मुनिः सर्वमात्मनि सर्वत्र च तमात्मानं विलोकयन् गुणत्रयविनिर्मुक्तश्च-

रति । स एव निष्कलंको मोक्षपदं लभते । योगी पूर्वं स्पृहाग्रंथिं मुक्त्वा ततो राग मनंतरं च शुचं त्यक्त्वाऽहंकारपरित्यागाच्च च ब्रह्ममयो भवेत् । योगासक्तःप्रथमं सर्वान्तरात्मतां याति । ततः सर्वज्ञपदमाप्नोति । सोऽथ शैलेषु सलिलेषु च विमिश्रता मधिगच्छति । अहमित्येव संसारो नाऽहमित्येव च संसृतिनाशः। एवमहर्निशं चिन्तयतां सतां वासनातन्तुरु छिद्यते । पूर्वं भावस्नेहं परित्यजेत् । ततो देहमानं समाश्रयेत् । अथ देहमानविरामं कृत्वा प्राणमानं समुपाश्रयेत् । ततः प्राणमानं निरस्य विश्वाहंकारंसमाश्रयेत् । पश्चाच्छून्यतां चिन्तयेत् । यया च ब्रह्मणि लीयते । एवं मिथिलेशस्य विशदं वचो निशम्य तमामंत्र्य च शुकमुनिस्तुहिनाचलं प्रायात् । अत्रान्तरे देवर्षिर्नारदोऽपि लतालास्यविलासमणिमंदिरं हिमाचलं द्रष्टुं समाययौ । अथ शुको विनयशालिनः शिष्यानध्यापयन्तं पितरं समभ्येत्य स्ववृत्तान्तं निवेदयामास । निशम्यैवं वैयासकिवचनं पैलसुमंतुजैमिनिवैशंपायनाद्या व्यासशिष्याः प्रमदात्तं परिषस्वजिरे । अथ कदाचिद् कृष्णद्वैपायनं समामन्त्र्य महीतलं वैशंपायनमुख्येषु शिष्येषु यातेषु तत्र ध्यानपरायणः शुक एव धीमता व्यासेन व्यस्तं वेदमधीयानस्तस्थौ । अथ शुकः प्रवातिपवनेऽध्ययने च कृते गुरूदिता नाना समीरणगतीः शुश्राव । तत्रादौ दिव्यः समानाख्यो वायुरस्ति । तस्मादुदानः । उदानाद्व्यानः । व्यानादपानः । अपानात् प्राणः । तेषां गतिक्रमाः सप्त । कर्मचैषां नामसदृशं बहुविधमभिधीयते । तेषु प्रवहोऽनिलो धूमाभ्रप्रेरकः । आवहस्तडिद्विभ्रमकृत् । यो मेघेषु जलं वहति । ग्रहानुदीरयति । सर्वसमुद्रांश्च शोषयति । स उद्वहनामको वायुः । देवविमानवाहको संवहः । व्योमगंगाम्बुधर्ता निवहः । योऽमृतेनेन्दुं पूरयति स परिवहः । भूतान्तकृद् वायुः परावहोऽन्यः सप्तमः । स एव निःश्वासो वायुर्वहत्स्वेतेषु नः पठेत् । एतदुक्त्वा नभोगंगां कृष्णद्वैपायने गते नारदः प्रीत्या शुकमेकाकिनं समाययौ । अथ व्यासतनयस्तमादरात् पूजयित्वा च सुखस्थितमपृच्छत् । देवर्षे ! कृपयैहिकं श्रेयो वद । तच्छ्रुत्वा नारदोऽब्रवीत् । विद्याचक्षु स्तपः सत्यं त्यागरागौ तथा सुखासुखे क्रोधो मृत्युरित्येतद् यो वेत्ति स न कदापि शोचति । अहिंसा धर्मस्य धाम स्पृहा दुःखायतनं संगत्यागो मुक्तिपदं भोगाभ्यासश्च शोकगृहम् यैर्विप्रयोगे महाँस्तप प्रजायते । साधुरापातरमणीयान् भावान् न चिन्तयेत् । शान्तचित्तः संतोषमवलम्ब्य धा न बहुमन्येत । बहुबाधकं संसारसारवैचित्र्यं गणयन् बुधो विस्मयसंतापानुरागान् न भजेत लोकेऽस्मिन्नलसा दीर्घसूत्राश्च सविभवा दृश्यंते । ईहमानाश्च दक्षा धनरहिता विलोक्यंते । संततिमनिच्छतां बहवः सुता जायंते । पुत्रकामाश्च न सुतं नवा सुतां लभंते

यस्मिन् समास्थिता दुर्जरा अपि पदार्थाः सहसा जीर्यंते । तस्मिन्नेवोदरे गर्भो दशमासान् विवर्द्धते । वैद्यशतैर्वृता व्याधिग्रस्ता विपद्यंते । अन्ये च रथ्याकर्दमशायिनो रोगानति तरंति । रूपबुद्धिविहीनानां स्वाकृतयो बुधाश्च दासाः संति । एकत्र विधवा विलपंत्य न्यत्र च गतभार्याः शोचंतीति धियाऽखिलां मायां कलयन् पण्डितो भवस्वभाववैरी स्यान् । न तु सज्जेतेति नारदप्रोक्तं वचनं निशम्य शुकदेवः संसारसरणिं ध्यायन् निर्वेदाद् धृतिं न ययौ । ततः सर्वत्यागधृतोद्योगः स नारदं समामंत्र्य सरित्तीरे व्यासमेत्य ववंदे । अथ गतवासनः स शुको विनयान्निर्वेदं निवेद्य गुरुं प्रदक्षिणी कृत्य च गंतुमभ्युद्ययौ । तच्छ्रुत्वा पिता तमूचे । पुत्र ! यावत् त्वद् दर्शनामृतैश्चेतः प्रीणामि तावत् क्षणं प्रतीक्षस्व । ततः स निरपेक्षो वनं गत्वा गिरिशिखरमारुह्य च समदेशे समुपाविशत् । अथोल्लंघनाक्रमेणैव स ग्रंथिबन्धान् विमुच्य होम्नि कांचनमिवैकरसे तेजसि तेजो धृत्वा रविवायुजलभूमिगगनानि प्रविश्य च विश्वाविष्कारसुकलया शून्याऽशून्यसमाश्रयोऽभवत् । ततो विहस्योत्पत्य च सशरीरोऽप्यदेहवत् सहसा समीरवत् सक्तांगो वैनतेयवत् खे ययौ । एवं परमसिद्धिं प्राप्तं तं शुकदेवं देवगन्धर्वयोषितो व्योमचारिणश्च सर्वे पुष्पवर्षैरवाकिरन् । ततः स सर्वा देवता अब्रवीत् । महाभागाः ! मां विचिन्वानस्य प्रलापिनश्च पितुराश्रमे सर्वाभिर्युष्माभिः प्रतिवचो देयमित्यभिधाय क्षिप्रमष्टाविधं तमः समुल्लंघ्य सप्त विधं रजस्त्यक्त्वा केवलं सत्वमपि चोत्सृज्य महोल्कापातदिग्दाहैश्च भुवनत्रये कम्पिते निरंजनं निर्गुणं च ब्राह्मं तेजः समाविवेश । ततः प्रफुल्लोदार मंदारपारिजातमनोहरे श्री मंदाकिनीतीरे देववृन्दाः समाययुः । अथ गतेषु तेषु विवाससः स्नानकेलिरतास्तु त्रिदशयोषितो वीतरागं शुकं दृष्ट्वा विस्मयनिश्चलास्तस्थुः । अत्रान्तरे सुतप्रियो व्यास स्तूर्णं तमन्वेष्टुं विहायसा समभ्यायात् । ततस्तत्र हापुत्रेति पितृवाक्यं श्रुत्वा सर्वान्तरात्मतामवाप्तः शुद्धचिन्मात्रः शुको भोऽइति शब्दमकरोत् । अथ तस्य शून्याकारस्य शब्देन नगा अपि प्रतिध्वनिं चक्रुः । एवं तस्मिन् परेधाम्नि लीने शुके तनयवत्सलो व्यासो द्युसरित्तीरे हेमाशिलातले न्यषीदत् । ततः परस्परं वारिक्रीडासक्ता अप्सरसस्तं दृष्ट्वा गात्रे वासांसि निधाय ह्रिया संकोचं समाययुः । ततो ज्ञानभास्करमपि शोकसमाक्रान्तं तं शिवः स्वयं समेत्य समाश्वास्य च वीतशोकं विदधे ।

एक एव को देवो वेद्य इति भूभुजा पृष्टः शांतनवो हृदि नारायणं ध्यात्वाऽब्रवीत् । पुरा नारदेन बदर्याश्रममभ्येत्य दर्शनाय प्रार्थितो नारायणस्तमभाषत । नारद ! स विभुर्ज्ञाननिर्धूतकल्मषैरेकायनै रेकदेवै रेकव्रतैश्च सदा दृश्यते । त्वमितः श्वेतद्वीपं गत्वा

विष्णुरूपान् विष्णुध्यानपरायणान् श्रीवत्सलक्षणान् पश्य । निशम्यैवं भगवद्वाक्यं मुनिरेकचित्तो भूत्वा जगत्कारणं श्रीविष्णुं द्रष्टुं तत्र प्रययौ । सोऽथ श्वेतद्वीपं समासाद्य-तत्र कर्पूरप्रभान् रुचिरान्नरान् विलोक्य प्रसन्नोऽभवत् । ततो रचितांजलिर्दिव्यमन्त्रपदैः श्रीविष्णुं स्तोतुमारभत । श्रीमन्नारायण ! पुराणपुरुषोत्तम । विजयताम् ।

ओं जयाच्युत ! निर्लेप ! निरंजन ! सनातन !
शांत ! शाश्वत ! विश्वेश ! परमानंदमंदिर !
मत्स्य ! कच्छप ! वाराह ! नृसिंह ! वटुवामन !
हैहयारे ! दाशरथे ! कृष्ण ! गोवंशवर्द्धन !

इत्यादि सहस्रनामभिः स्तुत्वा नानावर्णं ज्योतिः स्वरूपं ददर्श । अथ जितन्ताद्येन मंत्रेण सितनरैः स्तूयमानं तं भगवन्तं दृष्ट्वा कृतकृत्यो मुनिः प्रययौ । एवं नारदादन्यो मुनिस्तं परमेश्वरं नाऽपश्यत् । यतः सोऽव्यक्तो विष्णुर्भूतानांप्रभवोऽनादिनिधनः शुद्धः सूक्ष्मो निरंजनश्चास्ति । एवं निवृत्तधर्ममाकर्ण्य युधिष्ठिरेण शान्तये पुनराश्रमिणां धर्मं पृष्टो देवव्रतोऽभ्यभाषत । राजन् ! आसीत्कश्चिद् गंगातीरकृतोटजो ब्राह्मणः । स एकदा गृहमागतमातिथिं सर्वधर्माणां किमभ्यमित्यपृच्छत् । तच्छ्रुत्वा सोऽब्रवीत् । विप्र ! गोमतीतटे नैमिषे यः पद्मो नाम महानागो निवसति । स एव सर्वं जानाति । ततः सोऽग्रजस्तद्वचसा गोतमीतीरं गत्वा वारेण सूर्यरथगं तं भुजंगमं न ददर्श । सोऽथ निराहारः कतिचिद् दिनानि तत्र स्थित्वा गृहागतं नागं दृष्ट्वा च कौतुकं पप्रच्छ । नागराज ! त्वया तावद् रविरथस्थितौ दिवि किमाश्चर्यं दृष्टमित्यभिधाय पश्चाद्धर्मं प्रवक्ष्यासि । निशम्यैवं नागोऽब्रवीत् । भूदेव ! वारेण वहता मया मार्तण्डवर्त्मनि यद् रथचक्रं दृष्टम् । तत्र प्रभाकरांशुशाखासहस्रेषु शकुनिगणवत्सुरसिद्धमुनिवृन्दास्तिष्ठन्तीति महत् कौतुकम् । ततोऽसौ करैर्जलमाकृष्य च त्यजति । श्रीसूर्यनारायणोऽलाक्षितोऽपि सर्वं पश्यतीति महद् वैचित्र्यम् । पुरा तपःप्रकर्षान् मर्त्यलोकात् समुद्गतोमहासत्वो मध्यान्हेरविस्तस्य करमग्रही दित्यपि मया दृष्टः । स रविमण्डलं भित्त्वा तेजस्येव समाविवेश । एवं तत्तेजसि संलीनं तं दृष्ट्वा दिवाकरोऽस्माभिः कोऽयमिति पृष्टो हर्षपूर्णोरविरब्रवीत् । अयमुञ्छवृत्तिः सिद्धः कापोतीं वृत्तिमाश्रित्य मदीयं धाम यात इत्येतदपि कौतुकं विद्यते । निशम्यैवं नागवचः विप्रः प्रहर्षविकचाननो बभूव । ततोऽसौ ब्राह्मणो यथोचितमुपदेशं श्रुत्वा पन्नगमामंत्र्य च च्यवनमुपाश्रयत् । सोऽथ गुरुप्रसादादुंछवृत्तिमुपसेव्य सुरैर्गीयमानो दिवं जगाम रहस्यमेतच्च्यवनान्नारदेन सम्प्राप्तम् । नारदाच्छक्रेणाधिगतम् । शक्रो वसूनुपादिशत्

ते मामवोचन् । मत्सकाशाच्च त्वया श्रुतम् । राजन् ! तपोमाहात्म्यं विलक्षणम् ।

एवं विविधं शममाकर्ण्य धर्मराजः पितामहं बभाषे । तात ! संसारेऽस्मिन् दैवेन सर्वस्वजनसंहारे हेतुतामहंनीतोऽस्मि । मादृशः कोऽन्यो दुष्कृती जायेत ? यस्त्वां शरशतैर्घातयित्वा च निरीक्षते । पितामह ! नूनं सुयोधनो धन्यः । हीनपुण्यं च मान्धिक् । यो भवद्विधानां बन्धूनां क्षये साक्षितां गतः । शैशवे यस्याङ्क लङता मया क्षौमवसनं म्लापितम् । स एव भवान् मया निहतः । तच्छ्रुत्वा देवव्रतोऽब्रवीत् । पुत्र ! मिथ्यैवानुशयव्यथां मा कृथाः । सर्वमिदञ्जगत् परतंत्रम् । लोकः स्वकर्ममुद्रितो भवाभवं प्राप्नोत्यत्र । पुरा क्वापि तपोवने गौतमी नाम ब्राह्मणी बभूव । सा सर्पदष्टं गतासुं च सुतं दृष्ट्वा विलपन्ती मुमूर्छ । अत्रान्तरेऽर्जुनको नाम व्याधस्तां पुत्रशोकार्तां दृष्ट्वा तं सर्पं बद्ध्वानीय चोत्थितां गौतमीं जगाद । भद्रे ! तेऽयं पुत्रहंता भुजंगमो मया बद्धः । ब्रूहि यावदेनं बन्हौ क्षिपाम्यथवा शस्त्रेण हन्मि ? निशम्य तल्लुब्धकवचो विविग्ना गौतमी प्राह । भद्र ! नायं वराकः पन्नगोऽज्ञानाद्वधमर्हति । नियतावधिमुद्रया तानि भूतान्यंतवन्त्येव । स्वयं मृत्युमुपयांति । अत्र कस्यचित् कोऽपि हन्ता नास्ति । तस्मान्नास्त्यस्मिन्मे कोपः । ततः कोपेऽपि निग्रहः कुतः ? जड ! विमुंचैनं । मे सुतस्तु कालेनैव हतः । एवं तयाऽसकृत् कथितोऽपि व्याधो यदा कोपात् सर्पवधे मतिन्नात्यजत् । तदाऽति दीनः फणी प्रोवाच । बालोऽयं मृत्युना हतः । यो मां स्वयं प्रेरितवान् । व्याध ! ज्ञातिक्रमान्ममाऽस्वतंत्रस्य का शक्तिरिति पन्नगेनाभिहिते लुब्धकः पुनरुवाच । सर्प ! त्वया कारणेन शिशुरयं मृत्युना नीतः । न हि नाम कश्चित् करेण मृत्युनाकृष्य नीयते । यावद् भवद्विधा हेतुतां न याताः । तस्माद् बालकविनाशे त्वं सर्वथा कारणं कोपाद्बहुशो बध्योऽसीति ब्रुवाणे व्याधे स्वयमानिग्रहान् मृत्युरभ्येत्य तमभाषत । जड ! नाऽहमस्य शिशोर्हन्ता न चाऽयं भुजगः किन्तु भगवान् कालोऽत्र प्रेरकः । यश्च संक्षये सर्वं क्षयति । त्रैलोक्यवर्तिनस्ते ते कालकलिता भावाः कदा त्वभावपदवीं स्पृशंति कदा च भावपदवीम् । अत्रान्तरे स्वयं कालस्तमभ्येत्याऽब्रवीत् । रे व्याध ! बालनिपातनेऽस्मिन् न सर्पो न मृत्युर्न चाऽहं समर्थः । किन्तु लोकोऽयं स्वकर्मभिरेव निधनोदयौ लभते । अत्र नरा यंत्रमया इव कर्मसूत्रैर्विचेष्टन्ते । किम्बहुना जन्तुः कर्मणा विना न जीयते न वर्द्धते न भुंक्ते न प्रसूते न मोदते न जीयते न च क्षीयते । इति कालेन कथिते लुब्धकः सर्पं तत्याज । ततस्ते सर्वे पृथक्-पृथक् प्रययुः । अथ नष्टशोका गौतमी चापि सर्वं दैवायत्तं मत्वा स्वगृहं जगाम । अतोधन्यःकर्ममहिमा ।

राजन् ! सर्वे जना लोके क्षीयंते स्वस्वकर्मभिः ।
विचिन्त्यैवं क्षयं यातान् मा शुचः पृथिवीश्वरान् ॥

अथ गृहाश्रमे वर्तमानेन केन धर्मतो मृत्युर्जित इति पाण्डुसुतेन पृष्टो देवव्रतोऽब्रवीत् । पुरा माहिष्मत्यामिक्ष्वाकुवंशजः सुयोधनो नाम राजा बभूव । अथैकदा कामार्ता नर्मदा नाम नदी स्मरेन्द्रधनदोपमं तं स्नातं दृष्ट्वाऽकामयत । ततः कदाचिद्राजा तस्यां सुदर्शनां नाम नयनानंदवर्षिणीं कन्यामजीजनत् । अथैकदा भगवान् पावकस्तां यौवनवतीं वीक्ष्य स्मराकुलो ब्राह्मणवेशं धृत्वा नरपतिं गत्वा च ययाचे । ततो राजा निर्धनावज्ञया तस्मै तां यदा न ददौ । तदा तस्य स यज्ञाग्निः कोपाददर्शनं प्रायात् । अथ सप्तार्चिर्नियमेन प्रसादितः स्वप्ने मह्यमेषा कन्या दीयतामिति तञ्जगाद । ततो राजा हर्षमवाप्य मखे प्रत्यक्षवपुषे तस्मै तां कन्यां प्रादात् । अथ तेनार्थितो हुताशनोऽद्यापि माहिष्मत्यां सर्वविक्लवान् क्षपयन् सदा सन्निहित आस्ते । ततो विभावसोः सुदर्शनायां गुणरत्नमहोदधिः सुदर्शनो नाम तनयो बभूव । सोऽथ युवा मोघवतो राज्ञो मोघवतीं नाम कन्यारत्नं लेभे । ततस्तया सह गृहस्थधर्ममनुपालयन् स राजा कुरुक्षेत्रे मृत्युजये यत्नमकरोत् । अथैकदा स विज्ञ भूपालो धर्मसब्रह्मचारिणीं जायां प्रोवाच । देवि ! त्वया सर्वदाऽर्थिमनोरथा अभग्नप्रणयाः कार्याः । एवं धर्मादच्यवतस्तस्य सदा छिद्रान्वेषी मृत्युरभवत् । परं कथंचिदपि नान्तरमलभत । ततः कदाचिदिध्मार्थं स्वयं सुदर्शने याते कश्चिद् ब्राह्मणोऽतिथिस्तद् भार्यामभ्येत्य प्रोवाच । सुभ्रु ! त्वयातिथ्यं क्रियताम् । यदि ते धर्मः प्रमाणम् तर्हि तु सुलोचने ! माम् भज । निशम्यैवं विप्रवाक्यं तयाऽसकृत् प्रबोधितोऽपि द्विजस्त्वां विना न किंचिदर्थयेऽहमित्युवाच । साऽथ पतिव्रता धर्म्यं भर्तृवचः स्मृत्वा तथेत्युक्त्वा च सर्वं ब्राह्मणसमीहितं चकार । अत्रान्तरे सुदर्शनो गृहद्वारमेत्य दयितामेहीत्याजुहाव । एवं भर्त्रा सहसाऽऽहूता दोलाविलोलहृदया सा द्विजान्तिकं न प्राप । किन्तु लज्जाकुला क्षणं व्यलम्बत । ततो गृहान्तराद्विप्रः सुदर्शनमभाषत । राजन् ! तव वधूरियं मयाऽतिथिना रतं समभ्यर्थिता नाद्यापि शयनं प्राप्ता त्वं च गृहाधिपः संप्राप्तः । किमत्रयुक्तं मन्यस इत्यभिधाय स विरराम । अस्मिन्नेवावसरे मुद्गरमादाय छन्नवपुर्मृत्यु र्लब्धोऽवकाश इत्युक्त्वाऽऽनंदनिर्भरो बभूव । ततोऽविकृताशयः सुदर्शनो विप्रमुवाच । ब्रह्मन् ! मद्गिरा मम भार्यया निःशंको रमस्वेति वन्हिपुत्रेणोक्ते त्रिदिवौकसां गगनात् साधु साध्विति सहसा विपुलशब्दो बभूव । ततः सोऽतिथिर्विरूपं परित्यज्य तेजोराशिर्महाकृतिः प्रीत्या सुदर्शनमभ्येत्य प्रोवाच । राजन् ! धर्मो

जिज्ञासयाश्रमे युवां दम्पती प्राप्तः । मयाऽद्य युवयोरखण्डितं सत्वमिदं दृष्टम् । तेजसाऽधृष्याचेयं त्वद् भार्या केन लङ्घ्यते ? योगेनैषा द्विधात्मानं विभज्य क्षितौ पुण्या मोघवती नदी भविष्यति । नित्यं च त्वामनुयास्यतीत्यभिधाय धर्मोऽन्तर्दधे । मृत्युरपि विमुखो ययौ । ततः सम्प्राप्तेऽवसरे सभार्यः सुदर्शनोऽपि दिवं जगाम । पितामह ! विश्वामित्रेण दुर्लभं ब्राह्मण्यं कथं संप्राप्तमिति युधिष्ठिरेण पृष्टो गांगेयः पुनरुवाच । राजन् ! पुरा कुशिकस्य राज्ञः श्रीमान् गाधिः सुतः सत्यवती नाम च पुत्री बभूव । महात्मा ऋचीकः श्यामकर्णानां हयानां सहस्रेण शुल्कलभ्यां तां समवाप्तवान् । अथ शीलशालिन्या तया यत्नात् समाराधितः स मुनिःपुत्रार्थं वरं याचितः प्रोवाच । सुभगे ! त्वमश्वत्थं समालिङ्गय तव माताचोदुम्बरं समाश्लिष्यतु । ततो मद्दत्तचरुसेवनात् चोभेऽपि युवां पुत्रवत्यौ भूयास्तम् । एवं वरं समासाद्य हृष्टा सत्यवती सर्वं वृत्तं मात्रे न्यवेदयत् । ततः सा तद्गिरा वृक्षयोस्तथा पायसे च व्यत्ययं चक्रे । यत्र क्रमभंगो भवति तत्र फलेऽपि विपर्ययः संजायते ।

अथैकदा ज्ञानलोचनो मुनिर्जायामुवाच । प्रिये ! त्वन्मातुर्ब्राह्मणः पुत्रस्ते च क्षत्रात्मा सुतो भविष्यति । तच्छ्रुत्वा दुःखसंतप्ता सा पुनर्मुनिं ययाचे । कृपानाथ ! क्षत्राचारो मे पौत्रो भवतु मा पुत्र इत्यभिधाय विरराम । एतदाकर्ण्य तथास्त्विति तेनोक्ते सत्यवती जमदग्निं सुतं लेभे । अस्य क्षत्रियोचितः परशुरामः सुतोऽभवत् । अथ गाधिपत्नी कालेन विश्वामित्रमजीजनत् । किम्बहुना । वृक्ष पायसयोर्व्यत्ययात्स ब्राह्मणाग्रणीरभवत् । एवं महात्मा विश्वामित्रो विद्यातपोभ्यां मंत्रद्रष्टामहर्षिरभूत् ।

अथाऽऽनृशंस्यगुणं राज्ञा पृष्टः शान्तनवः पुनरब्रवीत् । राजन् ! पूर्वं कानने घनच्छायो द्रुमो बभूव । स एकदा मृगगामिना लुब्धकेन विषदग्धेन शरेण विद्धो दावानलैरिव स्पृष्टः शोषमगमत् । ततस्तं निष्फलं परित्यज्य यातेषु सर्वपत्रिषु एक एव शुकस्तत्रतस्थौ । यतो लोके सतां प्रीतिरचंचला विदिता । अथैकदा शक्रो निदाघशोषपरुषे फल पुष्पविवर्जिते च तरौ स्थितं शुकं वीक्ष्य तमभ्युपेत्य च प्रोवाच । पक्षिन् ! स्वच्छच्छाया फलाढ्येषु वृक्षेषु सत्सु त्वयाऽयं शाखी कथं श्रितः ? साम्प्रतमेनं परित्यज्य निर्वृतश्चर । निशम्यैवं देवराजवचनं शुकः प्रत्यवदत् । महाभाग ! नेदं त्वया सदृशमुच्यते । यतः सज्जनसंगतिः सुखदुःखेषु समानाऽभिहिता । किम्बहुना । यत्रोषितं भुक्तं यथासुखं च विहृतं तस्मिन्कालहतैश्वर्ये साधवो न पलायंते । निशम्यैवं शुकवाक्यं भगवान् पाक शासनस्तोषात्तं वृक्षं सुधाकणैः सहसोदीर्णपत्रपुष्पफलाकुलं च चकार । राजन् ! एवमानृशंस्यात् स शुकः परमां गतिमवाप । अतो दाक्षिण्यसदृशोऽपरो गुणो लोके न विद्यते ।

ततः सपौरुषं दैवं राज्ञा पृष्टो भीष्मः पुनरब्रवीत् । राजन् ! उभयोः संगमः सिद्ध्यै वियोगश्चानयोर्निष्फलोऽभिहितः । कृष्टेऽपि क्षेत्रेऽनुप्तवीजे च दैवं किङ्करोति ? पुरुषैः कृतं कर्म पौरुषं यथा यत्र यदा च कृतम् । तथा तत्र तदाभ्येत्य च फलति विसंवादोऽत्र न दृश्यते । दातृव्रतिपुण्यशीलसत्यवादिनां राज्यस्वर्गगतिभूतिभिस्तास्ता धन्यता दृश्यंते ।

अथ के पूज्या इति पार्थेन पृष्टः सुरव्रतोऽवादीत् । राजन् ! द्विजातयः सदा पूज्याः । यतस्ते सर्वत्र परायणम् । पुरा जन्मान्तरे नरौ कपिजम्बुकतां गतौ जातिस्मरौ मिथः सुहृदौ श्मशानं ददृशतुः । तत्र खिन्नमानसो वानरः प्रेम्णा शृगालमूचे । सखे ! केन कर्मणा त्वं शवमांसाशितां यातोऽसि ? तच्छ्रुत्वा शृगालोऽवदत् । मित्र ! पूर्वं मया प्रतिश्रुत्य द्विजन्मने न वितीर्णं तेनाऽहं सार्गालीं योनिमाप्तवानस्मि । एतदेव शृगालेन पृष्टो वानरोऽब्रवीत् । सुहृत् ! ब्राह्मणानवमत्याऽहं कपितां प्रयातोऽस्मि । ब्राह्मणातिक्रमेणैव लोकास्तामसीन्दशां भजंते । तस्मात्कुशलमिच्छता जनेन सदा सर्वात्मना द्विजाः पूज्याः ।

अथाऽसवर्णोपदेष्टारो विप्राः श्रेयसां पदं किन्न स्युरिति राज्ञा पृष्टो देवव्रतोऽब्रवीत् । राजन् ! पुरा वने शूद्रमुने र्ब्रह्मर्षिः कश्चित् सखा बभूव । ततः कदाचिन् सोऽर्थितः श्राद्धे शूद्रेण तदाश्रममागात् । तस्य पितृकर्मणि हव्यकव्योपदेशकृत् मुनिः पूर्वमेतां शेषां बृसीं कुरुष्वेत्यवदत् । ततस्तौ महता कालेन कलेवरं क्षपयित्वा कर्मशेषोपभोगाय जन्मान्तरमवापतुः । सोऽथ शूद्रस्तु जातिस्मरः क्षितिपतिरभूत् । स ब्रह्मर्षिश्च नष्टस्मृतिः पुरोहितोऽभवत् । अथैकदा स्वस्तिपुण्याहवादेषु पुरोहितं दृष्ट्वा राजा जहास । विलोक्यैवं पुरोधा नृपं हासकारणं पप्रच्छ । ततः शपथदानेन पुनःपुनः पृष्टो भूपतिः पुरोहितं रहः प्राह । भूदेव ! पुराऽहं तु शूद्रोऽभवम् । भवांश्च ब्रह्मर्षिर्मह्यं सकृदुपदेशं व्यधात् । किम्बहुना । तेन सुरवन्द्योऽपि दशामनुचितां प्राप्तोऽसि । श्रुत्वैतत् स्मृत्वा च वृत्तं स विप्रः सहसा तपसे ययौ । एवं द्विजोत्तमोऽवराणान्नैवोपदेष्टा स्यात् । ज्ञात्वैवं नैवोपादिशंति शूद्रान् वेदविदः ।

अथ कः श्रियोभाजनमिति भूपालेन पृष्टो जाह्नवीसुतः प्राह । राजन् ! पुरा महालक्ष्मीः श्रीकृष्णाग्रे रुक्मिणीं यदभ्यधात् । तच्छृणु । महाराज्ञि ? वीरदक्षसुभगप्रगल्भशुद्धकर्मजितेन्द्रियेषु नरेषु प्रीत्या मे शाश्वतीस्थिति र्भवति । दैन्यलोभक्रोधोत्सेकसंत्रासरहिताः कृतज्ञास्सदाचाराश्च नराः सदा मम केलिसदनम् । पतिव्रतां गतनिद्रामकलहामकुतूहलामचपलामविप्रकीर्णभाण्डां च स्त्रियं सदैवाहं भजे । गजहयवृषभेषु फुल्लारविन्देषु शरच्चन्द्रकरेषु हंसहासासुनदीषु राजद्राजरणेषु मुनिपुण्येषु वनेषु विधियुतेषु यज्ञेषु चाऽहं वसामि । निशम्यैवं युधिष्ठिरः पुन र्भीष्मं पप्रच्छ । पितामह ! स्त्रीणां नृणां वा संगमे

स्पर्शाधिक्यं किमु ? कृपया वदेति भूपवचनं श्रुत्वा सोऽब्रवीत् । पुरा भृंगाश्वो नाम यज्वा महाप्रतापी भूपो बभूव । तस्य राज्ये धर्मकर्ममर्यादा समुद्रबेलेवस्थिरासीत् । स एकदा शक्रप्रतिकूलमग्निष्टुतं नाम यज्ञं प्रारभत । येन वासवोऽस्य शत्रुतां प्रयातः । अथैकदा स महेन्द्रमोहितो मृगयार्थं विपिने व्रजँस् तृष्णार्दितो बभूव । सोऽथ जलमन्विष्यन् क्वापि स्फटिकनिर्मलं सरः समवाप्य तस्मिन् सहसा स्नात्वाऽश्वं च जलं पाययित्वा पीनश्रोणिपयोधरो ललनारूपोऽभवत् । ततो लज्जादुःखविवशः स घोटकेन निजां पुरीं गत्वा निजवृत्तान्तमावेद्य च राज्ये पुत्रशतं व्यधात् । सोऽथ त्यक्तराज्यः स्त्रीरूपो विजनं तपोवनमासाद्य मनसि विधिवामतां कलयामास । ततस्तत्रकश्चित्तापसस्तं स्त्रीरूपमकामयत । उक्तंच । यत्र सरोजिनी तिष्ठति तत्र षट्पदाः पतंत्येव । ततः स तस्मात् पुत्रशतं प्रासूत । सोऽथ कान्तावपुस्तेष्वत्यंतवत्सलोऽभवत् । अथैकदा स पुंस्त्वजातान् पुत्रानभ्येत्य प्रोवाच । पुत्राः ! स्त्रीत्वजातैस्तैस्तैः सुतैः सह वसुधा भुज्यताम् । ततस्तद्गिरा मिश्रतां यातं पुत्रशतद्वयमम्लानयशोविक्रमशासनां भुवं बुभुजे । अत्रान्तरे विप्ररूपी सुरेश्वरः समभ्येत्य मिथोभेदेन राजपुत्राणां कलहोदयं विदधे । ततस्ते युधि सन्नद्धा राज्यहेतोः परस्परं सैन्यक्षयं कृत्वा निःशेषाः प्रलयमयासिषुः । एवं रणे भेदात् पुत्रशत द्वये निधनं प्रयाते ललनारूपो भृंगाश्वः करुणस्वनं शुशोच । ततो महेन्द्रस्तत्कथां श्रुत्वा कारुण्यात् प्रलीनमन्युः पुनर्ब्राह्मणवेशेन तमुपसृत्य सस्मितमवादीत् । राजन् ! शक्रोऽहं विप्रियकारिणस्तव ते पुत्रा मया भेदिताः । संप्रति प्रसन्नोऽस्मि । मद्वरादद्य ते पुत्रशतं जीवतु । निशम्यैवं शक्रवाक्यं प्रणताननो भृंगाश्वः स्त्रीत्वजातानां पुत्राणां पूर्वं जीवितमयाचत् । तच्छ्रुत्वा देवराजस्तं पप्रच्छ । भवान् पुंस्त्वजातान् सुतान् विहाय स्त्रीत्वप्रजातेषु पुत्रेषु कथं स्निह्यतीति मघवता पृष्टः स्त्रीवपुर्भूपो बभाषे । देवराज ! स्नेहवात्सल्यरागाणां मंदिरं ललना एव । श्रुत्वैतन् नृपवचनं शक्रोऽब्रवीत् । राजन् ! सर्वे च ते सुता अद्य जीवन्तु । त्वमपि स्त्रीरूपं परित्यज्य मद्वरात् पुरुषो भव । तच्छ्रुत्वा राजोवाच । मघवन् ! नाऽहं स्त्रीत्वं त्यजामि । स्त्रीणां या प्रीतिः स्पर्शेषु जायते । सा पुंभिः कुतो लभ्यते ? दैवान्मयेदं प्रकृतिद्वयं सुचिरं समनुभूयैतावदेव जाने । यल्लोके प्रीतिभाजनं स्त्रिय एव । सुलोचनानां तत स्पर्शामृतं कामस्य सारं रतस्य सुरतं सर्वात्मना भवेर निर्वृतिजीवशून्यं जीवितं कान्ता एव नाऽन्यत् । एवं तेनोक्तमाकर्ण्य प्रीतो देवराजो यथार्थमिति संभाष्यास्य पुत्रशतद्वयं जीवयित्वाऽमरावतीञ्जगाम । अतएव पुरुषात् स्त्रीस्पर्शसुखं बहुमन्यते ।

एवमाकर्ण्य युधिष्ठिरः पुनः पितामहं पप्रच्छ । तात ! देवाधिदेवस्य महादेवस्य

चरितं श्रोतुमिच्छामीति नरेन्द्रेण पृष्टो विबुधव्रतो व्याजहार । राजन् ! श्रीशार्वमाहात्म्यं तु केशवो वक्तुमर्हति । उक्तंच । हरिरेववेत्तिहरम् । वा हर एव वेत्ति हरिम् । अनयोरेकैवमूर्तिः द्विधोतिश्रुत्वा हरिः पशुपतिप्रभावं वर्णयितुमारब्धवान् । पुरा पुत्रार्थिनी जाम्बवती मां प्रोवाच । देव ! त्वत्तोऽहं प्रद्युम्नसदृशं गुणोज्ज्वलं पुत्रं प्राप्तुमिच्छामि । त्वयैष संकल्पो मे पूर्यतामिति कुरंगनयनया दयितया तया प्रार्थितोऽहं मुहूर्तं ध्यात्वा तपोवनमगाम् । ततो गिरिशिखरमारुह्य निजाश्रमे विराजमानं पूर्णलावण्यविग्रहं तपोराशिमुपमन्युमपश्यम् । अथ तं प्रणम्य तत्कृतां पूजां च समादाय तत्संभाषणसंजातपरमानंदमयोऽहमभवम् । सोऽथ ज्ञानविलोचनो प्रणतं माम् प्रीत्याऽवोचत् । द्वारकानाथ ! देवं गिरिशं समाराध्य त्वमचिरात्तुल्यं पुत्रं समवाप्स्यसि । पुराऽपि सुकेशिप्रमुखास्ते ते त्रैलोक्यविजयिनः शंकरवराच्छक्राधिकं पदं प्राप्ताः श्रूयंते । पुराऽत्र पितुर्व्याघ्रपादमुनेराश्रमे सकृद् गोक्षीरमास्वाद्य तदर्थं पुनरपि मया जननी याचिता । तत्र पयसोऽसंभवान्मात्रा दत्तं विरसं पिष्टरसं पीत्वा दुःखात् साश्रुलोचनोऽहमभवम् । विलोक्यैवं जननी माम् प्रोवाच । पुत्र ! वनेऽस्मिन् कुतः पयः ? श्रीकण्ठमनाराध्य किम् क्वचिदभिमतं लभ्यते ? निशम्यैवं मातृवचस् तपोवने प्रयातोऽस्मि । ततोऽतियत्नाद्वार्षसहस्रिकं तीव्रतपोऽहमकरवम् । स्वयं शक्रवरं समवाप्याऽपि पीयूषकिरणोत्तंसाद्धूर्जटेरन्यत्र नाऽन्यतः प्रार्थये । तेन सुरराज्येनाऽलम् । मोक्षेणाऽपि किम् । यत्र निर्व्याजभक्तिदयितः शंकरो दाता नेति भर्गानुरागिणा मया बहुशोऽभिहितः शक्रो रूपमैन्द्रं परित्यज्य वृषभध्वजोऽभवत् । अथ जटिनं शूलिनं चन्द्रकलाधरं देवं च वीक्ष्य निर्भरानंदप्रसरद्बाष्पनिर्भरोऽहमभवम् । ततो मया स्तुतः शंभुर्मह्यं क्षीरोदधिं प्रादात् । सोऽथ मम संकल्पादाश्रमसन्निधिं चाऽपि विदधे । अतो यदुनाथ ! त्वं तपसा तं वरदं पार्वतीपतिं समाराध्य तनयं लभस्व । त्वं तु तस्यात्माऽसि । स च तवे त्युक्त्वा महात्मोपमन्युः शिवशासने दीक्षितम् माम् विधाय तपोयोगे रहस्यं गृह्यतामिति च समादिदेश । ततस्तद् वितीर्णेन मंत्रेण तपसा च समाहितोऽहं काले चन्द्रार्धशेखरंशिवमपश्यम् । अथाकाशे मेघजालसमारूढं सोमशतोज्ज्वलं तं विलोक्याभिनन्द्य स्तुत्वा च हर्षपरोऽहमभवम् । ततो महेश्वरो मह्यं यथेप्सितान्वरान्दत्वा दशापि दिशः सुधापूरैरापूर्येवान्तर्दधे । अथोपमन्युः प्रहृष्टं मामेत्य माधव ! तण्डिप्रोक्तानि सदाशिवनामानि शृणु इति व्याजहार । एवमाकर्ण्य मुनिवरवचनेषु दत्तावधानोऽभवम् । राजन् ! अतएव शिवोवन्द्यः ।

शंभो ! विश्वेश्वर ! शिव ! स्थाणो ! भर्ग ! महेश्वर !
शर्व ! रुद्र ! महादेव ! हर ! मृड ! वरप्रद !

ब्रह्मोपेन्द्रेन्द्रवपुषे त्रिगुणाय त्रिमूर्तये ।
नमस्तुभ्यं जगत्सर्गस्थितिसंहारकारिणे ॥

इत्यादि दिव्यैः श्रुतिप्रोक्तैः सहस्रनामभिः स मुनिः शशिशेखरं तुष्टाव । ततोऽहं हर्षाविष्टो मुनिना सह महेशकथाः कृत्वा गरुडमारुह्य च द्वारकामगमम् । ततो जाम्बवत्या वंशमुक्तामणिः साम्बो नाम सुतोऽभवत् । निशम्यैवं श्रीकृष्णकथितं श्रीकण्ठमाहात्म्यं भीष्मप्रभृतयः सर्वे लोका मुनिवृन्दं पुरस्कृत्य च मनसा नीलकण्ठं वृषाकपिं च भूयो भूयो ववन्दिरे । पितामह ! चपला जाया नृणां सहचारिण्यः कथं जाता? इति क्षितिभुजा पृष्टो जाह्नवीसुतो बभाषे । राजन् ! पुराऽऽसीदष्टावक्रो नाम महामुनिः । स एकदा वदन्यमुनिसुतां सुप्रभां विलोक्य विवाहार्थमतिमकरोत् । अथैकदा सोत्कंठितोऽष्टावक्रो मुनिमुपसृत्य तामिन्दुमुखीं ययाचे । तच्छ्रुत्वा वदन्योऽब्रवीत् । महाशय ! त्वं पूर्वं विशालामुत्तरां दिशं गच्छ । तत्र भवसेवितं कुवेरभवनमतिक्रम्य प्रतिनिवर्तस्व । ततोऽहं तुभ्यं सुप्रभां प्रदास्यामीति वदन्येनोक्तः स शनैस्तां दिशं प्रतस्थे । सोऽथ हिमाद्रिमुल्लंघ्य बाहुदां च नदीं समुत्ततार । ततो विमलेऽशोके स्नात्वा रुद्राणीकूपमाससाद । अथ कैलासतटमवाप्य स धनदालयं ददर्श । ततस्तेन वैश्रवणेन राज्ञा सादरं पूजितः स हेमपंकजिनीतीरलसत्कल्पलतावनस्थे मणिवेश्मनि साग्रं वत्सरमुवास । तत्राप्सरसां नृत्यैर्गन्धर्वयोषिताञ्चगीतैर् विपुलप्रीतिमासाद्य धनदमामंत्र्य च ययौ । सोऽथ गिरीन्द्रानुल्लंघ्य समां मणिमयीं भुवमवतीर्य च घनच्छायं रत्नलतावनं प्राप । ततस्तत्र स मणिमौक्तिकजालांकं दिव्यमंदिरं दृष्ट्वा संश्रयाशया दूरादतिथिः प्राप्तोऽहमित्यूचे । अथ दिव्यभूषणसम्पन्नाः कमललोचनाः सप्त कन्यास्ततो विनिर्गत्य तस्याऽतिथ्यं प्रचक्रिरे । ततस्ताभिर्गृहं प्रवेशितः स मणिपर्यंके भास्वरभूषणां वृद्धां ददर्श । सोऽथ मुनिर्मधुरवादिन्या तया निर्दिष्टमासनं समवाप्य गतक्लमो विस्मयनिश्चलोऽतिष्ठत् । ततो दिनांते स ताः प्राह सर्वाः स्वमालयं यांतु । केवलमेकैव शान्तहृदयेयं मम परिचर्यां करोतु । निशम्यैवं मुनिवाक्यं ताः सुलोचनाः स्वमालयं प्रययुः । किन्त्वेकैव शशिसितांशुका जरती तत्र तस्थौ । ततोऽष्टावक्रो वितानालंबिमंदारदाम्नि स्वच्छोत्तरच्छदे स्पर्शशालिनि च शयने सुष्वाप । ततो निशीथे द्वितीयशयनात्सा वृद्धा शनैः समुत्थाय निभृता ब्रह्मचारिणोमुनेः शय्यान्तिकं प्रायात् । साऽथ कम्पमानतनुः शय्यामारुह्य शीतापदेशेन मुनिं निविडं परिषस्वजे । सोऽथ परदारपरिष्वंगशङ्कासक्तचिंताशयस्तयालिङ्गितोऽपि काष्ठमिवाचलस्तस्थौ । एवमालोक्य मंजुवादिनी सा प्रणयात् स्पर्शविमुखं तं प्रोवाच । प्रभो ! मे भोगसंकल्पभंगं मा कृथाः । इदं चारुरत्न

लतावनयुतं रत्नभवनं मे त्वदधीनम् । यतोऽकस्मान्मे मनस्त्वय्येव रमते । मत्संगे ते दोषो नास्ति । लोकेऽस्मिन् योषितो नैव त्याज्याः । एता दुर्गमं नाभिजानंति न च श्रमं गणयंति । किन्तु रागवागुरया पुरुषानेव प्रयांति । कुलानुरोधेन नैता निवर्तन्ते । मकरध्वजोऽयं रामासु सर्वथाऽरुद्धप्रसरः । स्त्रीसतीति मिथ्यावाक्यम् । एता आपगा इव निम्ना न्निम्नं नरान्तरं यांति । मन्मथप्रेरितानारी कथं विमर्षं भजते । किम्बहुना यासां प्राणपणेनापि सुरतामृतं वल्लभम् । एवमभ्यर्थ्यमानोऽपि तया स मुनिस्तां नाभ्यनन्दत् । अथान्येद्युरपि सा रात्रौ तमुपसृत्य तथैवाऽभ्यभाषत । मुनिवर ! दुःसहोऽयं मदनज्वरो मां बाधते । स्वयमायातां मां भज । नाऽत्रदोषलेशोऽप्यस्ति । किं त्वं न जानासि । यद्रतिवांछासु निषेधो योषितां किल मरणम् ? एवमाकर्ण्यापि स मुनिर्यदा विचलितो नाभवत्तदा सा प्रोवाच । महाशय ! मामुत्तरां दिशं विद्धि । मयैषः स्त्रीवृत्तान्तः प्रदर्शितः । अधुना त्वमितो गत्वा वदन्यमुनिकन्यां समाप्नुहि । तच्छ्रुत्वा स मुनिः स्त्रीवृत्तं ज्ञात्वाऽति विस्मितोऽभवत् । ततः शनैः शनै र्निजाश्रममवाप्य गतक्लमो बभूव । ततः स वदन्यमभ्येत्य तं स्त्रीवृत्तं निवेद्य तेनोद्वाहविधिना वितीर्णां सुप्रभामवाप्य कृतार्थो बभूव ।

अथ राज्ञा विध्यनुगं श्राद्धं तथा पात्रापात्रक्रमं तीर्थगतिं च पृष्टः शांतनवोऽब्रवीत् । राजन् ! शुचिः शुक्लो मंगलालंकृतो शुद्धभोगैर्युतो जितेन्द्रियश्च पूर्वाह्णे देवान् यजेत् । तथाऽपराह्णे प्रयतमानसः पित्र्यं कर्म कुर्यात् । एवं यो यथाविधि देशकालानुसारं कर्म समाचरति । सोऽवश्यं पुण्यफलं लभते । श्वावलीढं केशकीटास्थिसंस्पृष्टं रसच्युतं देशकालादिरहितं च श्राद्धं राक्षसा अश्नंति । उन्मत्तः कृपणः काणः कुष्ठी वृषलीवरः चिकित्सकः वार्धुषिकः गीतनृत्यादिजीवी हीनाधिकांगः श्रुतिविक्रेता मिथ्यावादी अनग्निः सत्रभुक् क्षात्रियः क्षेत्रजीवी पिशुनः वेदविद्यारहितः हैतुकश्चैते विप्राः श्राद्धघ्ना अतस्ते परिहार्याः । परस्वहारी परदारोपसेवी भग्नव्रतः लुब्धः निषिद्धक्रय्यजीवी वृत्तिच्छेत्ता मित्रद्रोही भर्तृद्रोही विहिताचारभ्रष्टश्चैते नरा अवश्यं निरयनिलया भवंति । कारुणिकः विरक्तः पात्रवर्षी क्षमी प्रपाकूपसभादिप्रतिष्ठापकः याज्ञिकः तीर्थसेवी विद्वान् सत्यवादी मद्यमांसविरक्तश्चैते पुरुषा असंशयं स्वर्गलोकं सम्प्राप्नुवंति । पुरा गौतमेन पृष्टो मुनिरंगिराः प्रोवाच । भद्र ! पुष्कराद्यानि तीर्थानि तथा गंगाद्याः सरितः कश्मीर प्रभृतयः पुण्य प्रदेशाश्च विधिपूर्वकमुपसेविताः शुभफलप्रदानि भवंति । सर्वतीर्थानां तु गंगा प्रवरतीर्थमुच्यते । यतोऽस्थिमात्रे यया स्पृष्टे नृणामक्षया स्वर्गति र्नियता । क्षितौ न ते देशा न ते शैला न ते जनपदास्संति । यत्र जान्हवीपुण्यपताका न फरफरायते ।

अथापायमयैर्यज्ञैः किम् ? श्रमप्रदैस्तपोभिश्च कोऽर्थो यदि पुण्यवतां वपुर्जन्हुकन्यापयः पूतं वर्तते । यैर्व्योमश्रीमौक्तिकलता तथाश्रीकण्ठोत्तंसमालिका त्रिविधतापहारिणी गंगा स्नानपानध्यानादिभिर्नोपसेविता । तैर्मनुष्यजन्म धृत्वाऽपि किं कृतम् ? गंगाजलेन स्पृष्टानां सुरालयोऽल्पफलमिति शिलोंछवृत्तिना पृष्टः सिद्धः प्रत्युत्तरमिदं प्रादात् । एतदंगिरसाऽभिहितं गंगामाहात्म्यं श्रुत्वा गौतमः पुनः पुन र्देवनदीं ववंदे । ततस्तत्र स्नात्वा ध्यात्वा च हरिं कृतार्थो गृहं न्यवर्तत । अतएव नदीषु गंगा श्रेष्ठा भण्यते ।

अथ मनुष्येण कथं ब्राह्मण्यं प्राप्यमिति भुभूजा पृष्टो लोकमान्यो देवव्रतोऽब्रवीत् । राजन् ! ब्राह्मण्यं किल दुर्लभम् । पुरा कश्चिन्मतंगाख्योऽभवत् । स पितुर्नियोगाद् द्विजन्मनो यज्ञार्थं व्रजन् प्रतोदेन वाहं खरं गाढमपीडयत् । एवं पुत्रं व्यथितं दृष्ट्वा गर्दभी दुःखात्तमुवाच । वत्स ! नास्य ब्राह्मण्यं तेनैषश्चाण्डालचेष्टितो जातः । त्व मेनं यथाकथंचिद्वहेति वाक्यमाकर्ण्य प्रियस्तां पुनः पप्रच्छ । ततस्तया निवेदितां निजजातिं ज्ञात्वा स मेरुशृंगाद् गर्ते पतित इवाऽतिदुःखितो भूत्वा विललाप । सोऽथ ब्राह्मण्यकामस्तत्पापं मातापितृभ्यां विनिवेद्य तपसे वनं जगाम । ततस्तत्र स्थाणुभूतः शतंसमास्तीव्रं तपश्चकार । किं बहुना । यदा स्वयं प्राप्ताद् देवराजादपि ब्राह्मण्यं नाप्नवाँस्तदा गया क्षेत्रं गत्वा तत्र सहस्राब्दं परं तपश्चक्रे । एवं तत्र धूमायितजगत्त्रयः स पुनः पुनस्तपसा शक्राद् देवत्वं तु समवाप । परमुत्तमं ब्राह्मण्यं नाऽध्यगच्छत् । स एव मतंगश् छंदोदेव इति ख्यातो विद्याधरो मृगाक्षीणां पूज्यः परमवल्लभश्चासीत् ।

एवमाकर्ण्य राजाऽपृच्छत् । पितामह ! वीतहव्यभूपालस्य तु ब्राह्मण्यं श्रूयते । कृपया तद्रहस्यं वदेति राज्ञा पृष्टो भीष्मोऽब्रवीत् । राजन् ! पूर्वं बलवत्तैर्वीतहव्यसुतैर्हैहयैर्हर्यश्वो नाम काशिराजः समरे निपातितः । अथ गच्छता कालेन तत्पुत्रोऽपि संगरे लब्धलक्ष्यैस्तैरेव काशिनगरे निपातितः । ततस्तत्पुत्रो दिवोदासोऽपि पराजितोऽभवत् । सोऽथ भरद्वाजप्रसादात् प्रतर्दनाख्यं सुतं लेभे । ततो महाभागोऽयं प्रतर्दनो भरद्वाज मुनिकृपया सांगोपाङ्गामस्त्रविद्यां शिक्षित्वा समरे सर्वान् वीतहव्यतनयाञ्जघान । अथ प्रनष्टबलवाहनो हतसुतश्च वीतहव्यः प्रतर्दनाक्रमणं दृष्ट्वा सहसा भृगुं शरणमयासीत् । अत्रान्तरे वीतहव्यवधोद्यतः प्रतर्दनो भृगोराश्रममासाद्य मुनिवरं प्राह । ऋषिराज ! दुर्मदमेनंमुंच । तच्छ्रुत्वा भीतोभृगुः प्रोवाच । वीरवर ! नेह कश्चित् क्षत्रियः । वयं तु सर्वे ब्राह्मणाः । एवं क्षत्राभिधानात् प्रभ्रष्टं शत्रुं ज्ञात्वा प्रतर्दने याते भृगुर्वीतहव्यं ब्राह्मणं व्यधात् । राजन् ! एवं ब्राह्मणकृपया क्षत्रियेणाऽपि ब्राह्मण्यं प्राप्तम् ।

ततः के प्रणम्या इति राज्ञा पृष्टः शान्तनवोऽब्रवीत् । राजन् ! हिंसारागविवर्जिताः स्वकर्मधर्मनिरताः पवित्रचरितवृताश्च ब्राह्मणा एव प्रणम्याः भवंति । एवं शापानुग्रहसमर्थान् ब्राह्मणान् ये नृपा न पूजयंति । तेषां पोषस्तु दुर्लभः किन्तु शोष एव निश्चितः । किम्बहुना । सदैव भूमिदेवाः पूज्याः । यत् प्रसादाद्धुताशनो हव्यं कव्यं च वहतीति नारदः श्रीकृष्णमुपदिदेश । एवमेव बलं जये रक्षा भये व्यसनागमे च भेषजं वोऽस्तु विप्रा उभयत्रेति शम्बरः शक्रमवादीत् । अतो ब्राह्मणमहिमाऽतिगहनोऽस्ति ।

ततो राज्ञा निसर्गलोलानां स्त्रीणां स्वभावं पृष्टः पितामहो व्याजहार । राजन् ! पुरा शापकम्पिता पंचचूलाख्या देवाङ्गना श्रीनारदेन स्त्रीस्वभावं पृष्टा यथार्थं जगाद । देवर्षे ! तव शासनाद् भीता मादृशी सती स्त्री एव नारीस्वभावं वक्तुमर्हति नाऽन्या । त्वां तत्वतो यद् ब्रवीमि । तच्छृणु । एताः संघर्षक्षोभकारिण्यः सोद्वेगाः कलुषाशया मत्ताश्च निम्नगा इव निम्नगा वपुर्हरंत्येव । अन्विष्टा अपि न लभ्यंते । संत्यक्ता अपि न त्यजंति । संसारे वासना इव स्त्रियो मोहनैकरता अभिहिताः । विषादिन्यः प्रहसंति । हृष्टा हेलया शोचंति रागिण्योऽपि प्रियं हंति । को हि तां योषितं वेत्ति ? चपलाशया ललना न धनेन न मानेन न च सेवया मर्यादामनुवर्त्तते । स्त्रियः स्वेच्छया सुवेशं सुभगं चिरं परिचितमपि कान्तं त्यक्त्वाऽदृष्टपूर्वेण निन्द्येन सह रमंते । चेदतिमधुरं संभाषिताश् चेत्सस्मितं विलोकिताः स्वजनेन च यंत्रिता अपि योषितो न साध्या गणनीयाः । अर्थिनामप्यलाभेन किं वा दुःखदैन्यश्रमेणाऽकस्मात् क्वचित् सतीत्वं संजायते । प्रायः कुलयोषितोऽपि नानापुरुषसंवासहासोल्लासविलासिनीम् वेश्यायोषां सस्पृहं निरीक्षंते । नारीणां परसंगेषु निषेधादेव रोगिणां बालानामपथ्येष्विवाऽभिलाषो विवर्द्धते । आसामच्छिन्नप्रसरः कामो न धृतिं क्षमते । प्रायः स्त्रियः पुरुषासंभवे मिथोऽपि प्रवर्तंते । सततासन्नदोषाणां क्षणरागाणां क्रूराणां सन्ध्यानामिव योषितां को नाम विश्वसेत् ? पापिनाम् कारुण्यमिव किंवा धनाढ्यानामनुत्सेक इव हरिणीदृशामार्जवं न भवत्येव । बहुधा साध्व्यो बहुविधैरवरोधैर्नियंत्रिता अपि कान्तपुरुषमालोक्य सहसाऽऽर्द्रतां प्रयांति । पुरा वन्द्यो बंधूजनः सुरशंकास्पदमभूत् । ततो विबुधार्थितो धाता कृत्यासर्गात् स्त्रियो व्यधात् प्रायो ललनाः पुंसां कौतुकवृद्धये लज्जां लभंते । वस्तुतः पत्युर्विश्वासनोपायं कृतकं च सतीव्रतं दर्शयंति । एता योषितो यद् वदंति गायंति हसंति पतंति नृत्यंति हसंति च यान्ति तत् स्वप्नसमानचेष्टं सत्यंनास्ति किंतु मायामयमेव । तात ! ता लोलमतयः स्त्रियः पुरुषैः कथं रक्ष्या इति युधिष्ठिरेण पृष्टोऽनुभवी देवव्रतोऽब्रवीत् । पुरा देवशर्मा नाम मुनिर्यज्ञार्थं ग...

मुद्यतोऽभवत् । स स्वशिष्यं विपुलं शतक्रतुमाया दुरत्ययेति शशास । ज्ञात्वैवं त्वं रुचिं समीरवत् शरीरान्तः प्रविश । ततोऽतियत्नवानसौ तस्या गात्रैर्गात्राण्यवष्टभ्याऽतिष्ठत् । अत्रान्तरं समासाद्य समागतः सहस्राक्षश् चारुलोचनामचलां तां रुचिं ददर्श । ततस्सा सुलोचना तं शतक्रतुं दृष्ट्वा संजातमनोभवाऽपि विपुलसंरुद्धा वक्तुं न शशाक । विलोक्यैवं विपुलतर्जितः शक्रो विस्मितो भूत्वा न्यवर्तत । अत्रान्तरे देवशर्माऽभ्येत्य च तत्सर्वं बुबुधे । अथ विपुलः संतुष्टगुरोर्वरानवाप्य कृतार्थो गृहं निवृत्य जननीजनकौ च प्रमोदयामास । सोऽथ राजभिः प्रजाजनैश्च पूजितः दमां विचचार । अत्रान्तरे भगिनीपतिनाऽङ्गमहीभुजा निमंत्रिता रुचिर्गृहे पुष्पभूषितां भगिनीमपश्यत् । ततो देवशर्मणा पुष्पार्थं विसृष्टः शिष्यो मार्गे मिथुनं षड्देविनश्च कितवान्ददर्श । ततो विवादे यो विचलेत्स विपुलार्जितांल्लोकान्न समाप्नुयादिति शपथं शुश्राव । तच्छ्रुत्वाऽतिदुःखितो गुरुबधूगात्रसंस्पर्शपातकं शंकमानश् च स गुरवे न्यवेदयत् । अथ गुरुस्तमुवाच । शिष्य! यन्मिथुनं तत्त्वहोरात्रम् । ये च कितवास्ते षड्ऋतवो लोककर्मसाक्षिणस्संति । नार्यो रक्षितुं न शक्याः । त्वया च रुचिः संरक्षिता । असत्येन त्वयोदीर्णं । तस्मात्तव पातकं नश्यतु । राजन् ! पूर्वमेवं विपुलेन गुरुप्रिया संरक्षिता । वस्तुतोऽस्मिन्संसारे लोलाविलोचना एता रक्षितुं कश्चिन्न शक्तः ।

अथ राज्ञा विवाहधर्मं पृष्टो भीष्मः पुनरब्रवीत् । राजन् ! कन्या गुणवते कुलीनाय स्वरूपिणे च देया । शूद्राय श्रुतिरिव हीनाय प्रतिपादिता कन्या कुलद्वयं दहत्येव । तस्मात्पात्रं विचारयेत् । अशास्त्रोक्तैः परिणयैर्वर्णसंकरो जायते । किम्बहुना । विषमसंयोगै-र्भद्रमपि कुलं व्यसने पतति । अतो विवाहविवादौ समयोरेव शोभते इति नीति शास्त्रम् ।

ततो राज्ञा सज्जनदर्शने सहवासे गोमाहात्म्यविषये च पृष्टो भीष्मः पुनरब्रवीत् । पुरा गंगायमुनयोर्मध्येऽन्तर्जलव्रतः स्थाणुभूतश् च्यवनो नाम मुनीन्द्रोऽतिष्ठत् । अथ कारुण्यशालिनस्तस्य पुण्यमामोदं समाघ्राय मत्स्या वलयलीलया तद्गात्रेष्वालीय तस्थुः । ततो महता कालेन धीवरा जालेन विपुलमत्स्यसंघातं समाकृष्य तन्मध्ये महामुनिमपि ददृशुः । ततस्ते जालजीविनो विस्मयमवाप्य निमीलिताक्षं तं भगवन्प्रसीदेति जगदुः । सोऽथ सहवासिषु मत्स्येषु दयां कृत्वा निषादानवदत् । भद्रमुखाः ! यूयं तु दर्शनादिमे च मत्स्या सहवासान्मे दयिता जाताः । निशम्यैवं मुनिवाक्यं वेपमाना दाशास्तूर्णं गत्वा स्ववृत्तान्तं नहुषाय निवेदयामासुः । ततः स्वयं स महीपालः पूजामादाय पुरोहितं पुर-स्कृत्य च च्यवनं द्रष्टुं समाययौ । सोऽथ मुनिः कृतांजलिं नृपं समालोक्य यथोचितेन मूल्येन मां गृहाणेति जगाद । तच्छ्रुत्वा राजा मणिमुक्तादिसमेतमसंख्यधनं राज्यार्ध-

मथवा समग्रं राज्यं धीवरेभ्यो ददानीत्यवदत् । एवमाकर्ण्य मुनिर्दाशेषु कारुण्यादसकृत् प्रोवाच । राजन् ! नैतन्ममोचितं मूल्यम् । त्वं मुनिभिः सह विचिन्त्यताम् । ततः शापभीत मधोमुखं नहुषं कश्चिद् गोजातो द्विजवरो बभाषे । राजन् ! मुनीश्वरस्याऽस्य गौरेव तुल्यं मूल्यमस्ति । तस्मादेनं गवा गृहीत्वा निर्वृतो भवेति ब्राह्मणेनेत्यभिहिते प्रहृष्टः पृथिवीपतिर्मत्स्यसंघविमुक्तये गवा भार्गवं जग्राह । ततः करुणानिधिश्च्यवनो दर्शनवात्सल्यात् तत्कुशले स्थितो दाशेभ्यो धेनुं प्रतिजग्राह । अथ मुनीन्द्रेण विधिवद्गवि गृहीतायां तद्-दृष्टिपातान्मत्स्यसमेता धीवराः सशरीरा दिवं याताः । किम्बहुना । राजन् ! गावोऽमृतायतनम् । पवित्राएता रुद्रमातरोऽभिहिताः । देहिनां किल किल्विषं स्मृतिमात्रेणैव मुष्णंत्यतो गोमहिमालोकातीतोऽस्ति । अतएव न गोदान समं दानमिति महर्षयो भूयो भूयो व्याहरंति ।

अथ कुशिकमहीपतिकुले विप्रः कथं जात? इति राज्ञा पृष्टो देवव्रतोऽभाषत । पुरा भाविकथाभिज्ञश्च्यवनः पूजामवाप्य कुशिकभूपालमन्दिरेऽतिष्ठत् । ततः सभार्येण भूभुजा परिचर्याव्रते धृते मुनिर्भुक्त्वा निश्चेष्टस्तत्र सप्तरात्रत्रयं सुष्वाप । एवमालोक्य राजा चकितो बभूव । अथ निराहारो वधूसखो राजा निद्राभंगभयात् तस्य शनैः शनैः पादसंवाहनं चकार । ततो मुनिः समुत्थाय सहसाऽन्तर्दधे । एवमालोक्य तमनुसरन् राजाऽतिक्लममवाप्य मूर्छितो न्यपतत् । ततः पत्न्या समाश्वासितो राजा यावद्राजभवनं पुनः प्रविशति । तावत्तत्र काष्ठमिवाचलं मूकं मुनिं ददर्श । अथैकपार्श्वेन सुप्तस्य तस्यैकविंशतिं क्षपा याताः । पुनरेवं पादसंवाहने तौ निराहारौ दंपती तस्थतुः । अथ भूभुजा शतपाकेन तैलेन प्रतिबुद्धो भक्त्या च निवर्तितस्नानो मुनिः सिंहासनं भेजे । ततो राजयोग्यं नानाविधं भोज्यं स्वयं सभार्येण राज्ञा कृतं तथा दत्तं गृहीत्वाऽपि मुनिः पुनरन्तर्हितोऽभवत् । ततोऽस्य संनिधिं कृत्वा सभार्यं निर्विकारं च तं दृष्ट्वा मुनिरतिविस्मितो बभूव । अथाऽन्येद्यु मुनि र्वधूसखं राजानं सांयुगीनेन रथेन मां वहेत्यचोदयत् । ततस्तौ जम्पती रथे धृत्वाऽपि स विचचार । अथ मुनिस्तौ मुहुर्मोहयन् सनंदनोद्यानं स्वर्गमदर्शयत् । अथ तौ जायापती यदा मुनिविहितैर्दृष्टनष्टैर्बहुविधमायाचटुलविभ्रमैरपि मोहं न जग्मतुस्तदा त्व चिरात्तुष्टो मुनिवरो रथान्मुक्त्वा तौ जगाद । धीरौ ! युवयोर्भक्त्याऽतितुष्टोऽहम् । सम्प्रति वरं गृहीतं । राजन् ! ब्राह्मणतर्पणादस्मात् ते पौत्रो ब्राह्मणो भविष्यति । भार्गवाणां तद्वंशजैः सह विरोधोऽयमुपस्थितः । तस्मात् क्षत्रियविच्छेदभिया त्वं मया पीडितोऽसि नरपाल ! त्वमधुना मद्वचसा गतक्लमः पीयूषपूरितोपमश्च भवेत्युक्त्वाऽन्तर्हिते तस्मिन् कालेन तद्भूपतिवंशे तपोनिधिर्विश्वामित्रः समजायत । यथा परशुरामोऽजायत

श्रीमदृचीकप्रभावेण तत्तु त्वया पूर्वमेव श्रुतम् । एतदाकर्ण्य राजा परमसंतोषमवाप ।

अथ पृथ्वीक्षयपातकशंकिना भूभुजा पुनः पृष्टो भीष्मो दानफलमब्रवीत् । राजन् ! तपोदानदमसत्याचारानृशंस्यैः सर्वं समाहितं लभ्यते । मानवो विभूषितां कांस्यदोहनींकपिलां धेनुं दत्त्वा पृथिवीदानसदृशं फलं समवाप्नोति । तिलधेनुप्रदाता नरो वसुलोकं प्रयाति । कन्यादाता भूमिप्रदश्च शक्रलोकमासाद्य मोदते । भूताभयप्रदानं तु सर्वदानानां प्रवरं स्मृतम् । निजाभिमतदानेन नरः सर्वार्थसिद्धिमधिगच्छति । सुवर्णदानेन नृणां किल पातकं क्षीयते । वसुमती सर्वं सूते निखिलं च जगद्धत्ते । तस्माद् भूमिदाता दातॄणां वरो ज्ञेयः । शरीरिणां प्राणा अन्नम् । तस्मादन्नदः प्राणप्रदः स्मृतः । लोकेऽन्नदानसदृशं दानं नास्तीति नारदो ऽब्रवीत् । प्राणिनां पानीयदानममृतं संप्रचक्षते । यतः परलोके विच्छायतापज्वलिताहि भूमयः संति । निखिलैनसां क्षयाय तिलदानं प्रशंसंति शास्त्रज्ञाः । पुराऽतिसंतुष्टो यमो तिलान्देहीति विप्रमचोदयत् । ब्रह्मस्ववर्जं सर्वस्वं दत्वा नरो दुर्गाणि संतरेत् । यतो ब्रह्मस्वशल्यं हि नृणां तीव्रपातं प्रचक्षते । पुरा द्वारवत्यां गुल्मतृणावृते महाकूपे वृष्णिवृन्दा महाकायं कृकलासमद्राक्षुः । ततः स तैः समुद्धर्तुं पृष्टः शनैरवदत् । महाशयाः ! अहं नृगनामको नृपो ब्रह्मशापादिमां दशां प्राप्तः । पुराऽहंगृहमेधिभ्यो विप्रेभ्यो गवान्निखर्वाणि दत्त्वा परां निर्वृतिं यातः । अथैकदा मद्दत्तधेनुं विप्रमंदिरे चौरहृतां दृष्ट्वाऽपरोद्विजो निजां ज्ञात्वा जग्राह । राज्ञा तु ममेयं वाग्दत्ता किन्तु दस्युनाहृतेति परो जगाद । एव विवदमानौ तौ मत्सभां समाजग्मतुः । ततस्तद्वृत्तान्तमहमाकर्ण्य यद्यप्यहंधननरगोहयप्रदानैर्बहुशस्तयोर्यत्नात् पृथक् प्रार्थनामकरवम् । परमेकोऽपि स्व हठं न तत्याज । अथ कालेन धर्मराजनिकेतनमवाप्य तत्रात्मनो बहुदानार्जितांल्लोकानहमश्रौषम् । किंतु स्वयं यमो ब्रह्मस्वविभ्रंशाच्छौरिदर्शनपर्यन्तं ममेमां कृकलासतामादिदेश । एवमभिधाय कृष्णदर्शनाद् विध्वस्तपातको नृगो विहाय तां कृकलासतां त्रिदिवं जगाम । आसीदुद्दालको नाम ब्रह्मर्षिः । तस्य नासिकेताभिधः सुतो बभूव । सोऽथ पितृकोपदृशाभिहतः प्राणान् तत्याज । ततो निपतितं सुतं दृष्ट्वा शान्तकोपो मुनिः करुणां कृत्वा मंत्रप्रयोगैस्तमजीवयत् । ततः स्वप्नोत्थित इव प्राप्तजीवो मुनिसुतः पित्रा पृष्टो यद् यद् यममन्दिरे दृष्टं तत् सर्वं वक्तुमारभत । तात ! रत्नस्तंभशतोदारे पितृराजसभातलेऽहं पाद्यार्घ्यासनादीभिर्विपुलां पूजामवापम् । तत्र सूर्येन्दुद्युतिकांतिषु विमानेषु भास्वराभरणस्मेरान् सुकृतशालिनो नरानपश्यम् । अपरं च । तत्र हेमाब्जपुंजकुंजाग्रकूजन्मणिविहंगमा घृतक्षीरामृतजला मयापगा दृष्टाः । एवं दिव्यभोगान् दृष्ट्वा स्मयात् स्वयं वैव-

स्वतमहमपृच्छम् । देव ! एताः पीयूषवाहिन्यः केषां स्वेच्छापरिग्रहाः संति ? तच्छ्रुत्वा यमोऽब्रवीत् । वत्स ! गोदानामेताः क्षीरघृतापगा विद्यंते । पुरुषो धेनुमदत्वा परमामृतं नाश्नुते । अथ साक्षाद्धेनुदानासमर्थो नरस्तिलाद्यन्नमयीं घृतमयीं वा धेनुं कल्पयित्वा सुधाशया धेनुं दद्यात् । किम्बहुना लोके गोदानसदृशं दानमन्यन्न विद्यते । पितृपतिरेवं मां पुनः पुनः सादरं जगादेति नासिकेतेन प्रोक्ते मुनिशतैर्वृतो महर्षिर्मुहुर्मुहुर्गोदानस्य महत्पुण्यं प्रशशंस । पुरा शक्रेण पृष्टः कमलासनोऽब्रवीत् । सुरराज ! गोदाता सर्वलोकानतिक्रम्य गोलोकं प्रयाति । वसिष्ठाद्या मुनिवरा दशरथादयो भूपा रुद्राद्या देवगणा अपि गोतुल्यं पूजापात्रन्नान्यन्मन्यंतेस्म । पूर्वं गावो निवासार्थं श्रिया बहुशः प्रार्थिता अपि चपलाऽसीति निगद्य प्रतिश्रयं न प्रददुः । ततो लक्ष्मीरभाषत । देव्यः ! भवतीभिरनादरात् परित्यक्ताऽहं निन्द्या भविष्यामि । अतः पुनः पुनर्याचे । निशम्यैवं लक्ष्मीवचनं गावः प्रत्यवदन् । अस्तु तावद् गोमये तव स्थितिः । तच्छ्रुत्वा श्रीरुवाच तथास्तु । तदाप्रभृति गोमयं पवित्रं गण्यते । किम्बहुनाऽतः परं मांगलिकं पुण्यं पवित्रं चान्यन्नास्ति । हेमदानं देहिनां सर्वपापानि दहति । कौंतेय ! कांचनं हि परमतेजोऽभिधीयते विभावसोः । पुराऽहं पिण्डप्रदो जान्हवीतटे श्राद्धे पितुः शन्तनो रत्नकंकणं पाणिमुत्थितमपश्यम् । एवमालोक्य मया कुशेष्वेव पिण्डो यदा समर्पितस्तदाऽतितुष्टो मे जनकः स्वप्ने मामिदं प्रोवाच । पुत्र ! शास्त्रानुवर्तिना सूनुना त्वयाऽहं धन्योऽस्मि । संप्रति त्वं विप्रेभ्यो धनं देहि । यतस्तद् दानानामुत्तमं हि भणितम् । पुरा जामदग्न्यो रामो निःक्षत्रियं जगत् कृत्वा मुनिभिर्हेम दापितस्तस्मात्पापादमुच्यत । पुरा तारकोपप्लुता देवा भाविनीं कथां विज्ञाय शीतांशुशेखरं स्कन्दोत्पत्तिमयाचन्त । ततो गौरीपतिना त्यक्तं वीर्यं पावको दधार । सोऽथ भर्गो गङ्गायां निहितः । साऽपि तं गिरितटे निदधे । स भगवान् कार्तिकेयः शरवणे प्रादुर्भूय सुरसेनानीरभवत् । तस्य जन्मनि यत्पूर्वं जातवेदसः संजातं तत्सुवर्णमभूत् । वसुधारणात् पृथिव्येषा वसुन्धरेति विख्याताऽभवत् । एवं विज्ञाय धनार्थिनो हेमदानमेव कुर्वन्ति ।

अथ श्राद्धविधिं पृष्टो राज्ञा शांतनवोऽब्रवीत् । राजन् ! मधुघृताप्लुतं तिलप्रदानं श्राद्धं विज्ञेयम् । श्रुतिकोविदाः श्राद्धेषु माषमात्स्यैडशशकच्छागवराहशाकुनपार्षतन्यं

१ मनुस्मृतेस्तृतीयाध्यायेऽपि समांसश्राद्धविधिः कथितः । विषयेऽस्मिन् केचित्कथयंति यत् प्रवृत्तिरस्य विधेस्तदा भवेद्यदा दुर्भिक्षादावन्नाभावः स्यात् । ततः शीतर्तुः शीतदेशोऽपि भवेत् । अथ यजमानः क्षत्रियो यथावद्विधिव्यवहर्ता स्यात् । तथा ब्राह्मणोऽपिशस्त्राऽस्त्रशिक्षकः क्षत्रधर्मानुष्ठातास्यादन्यथा मनोर्मांसभक्षणनिषेधवचनान्येव प्रयोज्यानि भवंति । सात्विकानां श्राद्धं सात्विकविधिनैव भवति ।

गुगवयमाहिषैरपि मांसैः क्रमात् पितॄणां तृप्तिं वदन्ति । किंबहुना वाध्रीणसस्य च मांसेन द्वादशाब्दिकी तृप्तिः कथिता । केचित् खड्गलोहपृष्ठकालपृष्ठमांसैश्चाऽप्यक्षयां तृप्तिं मन्यन्ते । अथ ये ससर्पिषा पायसेन त्रयोदश्यां मघासु च विहितं श्राद्धं समाचरन्ति । तेषां पितरः शोच्या न भवंति । गयाकूटे वटतले कुंजरच्छायायां पुण्यदिनेषु च श्राद्धमनन्तफलदं प्रोक्तम् । काम्यं श्राद्धं विधिनक्षत्रयोगेषु विनिर्दिशेत् । निर्दोषविग्रहः सदाचारो विप्रः श्राद्धमर्हति । विष्णुपूजापुरस्सरैर्द्विजैर्वैश्वदेवेन विधिना संस्कृतेन च वह्निना श्राद्धं संरक्ष्यते । श्राद्धे सगुडं लवणत्रयं तथाऽजाजीहिंगुसौवीरपलाण्डुलशुनानि च वर्जितान्यभिहितानि । श्रद्धया दीयते क्रियते वा तदेव श्राद्धमभिधीयते । श्राद्धकर्ता धर्मज्ञं च सुतं लभते । अथ दातृप्रतिग्रहीतॄणां विशेषं जगतीभुजा पृष्टो गांगेयो ध्यात्वा पुनरभाषत । पुराऽनावृष्टिहते देशे निर्दग्धपादपे च काले पुरस्कृत्यारुन्धतीं सप्तर्षयः क्षितौ चेरुः । विलोक्यैवं पशुसखो नाम दासस्तद्वधूश्चण्डाभिधा दासी च क्षुत्तृष्णापरिपीडितौ तानेवाऽनुसस्रतुः । ततस्ते क्षुधाक्रान्ता मुनयः शैब्यभूपालराज्ये गतासुं तनयं स्थाल्यां पक्तुं समुद्ययुः । अथ वैश्रवणोपमो राजाऽतिखिन्नो भूत्वा मुनीनुपसृत्य च सादरं प्रोवाच । भवद्भिरियं जुगुप्साजननी वृत्तिस्त्यज्यताम् । निशम्यैवं राजवचनं मुनिवृन्दाः प्रोचुः । राजन् ! तपः क्षयकरो राजप्रतिग्रहोऽतिघोरोऽस्ति । किम्बहुना । सकृत् प्रतिग्रहाग्निदग्धानां किल्बिषाज्ञानशेषाणां च ब्राह्मणशाखिनां पुनः पुण्यफलं कुतः ? एतदुक्त्वा ते स्थालीं परित्यज्य काननं प्रययुः । धन्यास्ते ब्राह्मणा ये प्राणपीडापणेनाऽपि प्रतिग्रहपराङ्मुखा अभूवन् । ततो वृषादर्भि र्मंत्रिभि र्हेमगर्भाण्यौदुम्बराणि फलानि कारयित्वा वने तेषां पुरः प्राक्षिपत् । अथ भीता मुनीश्वरास्तान्यपि ज्वलितान्येव मत्वा परित्यज्य च मिथः पुण्यसंतोषशीलतां प्रशंसन्तो ययुः । ततो राजा सपदि तत्कोपात्पावकं हुत्वा कृत्यामुत्पाद्य च मुनिक्षये भयदां कृत्यामादिदेश । अत्रान्तरे वने सुखं चरन्तस्ते मुनयः पीवराकारं शुनःसखं परिव्राजं ददृशुः । ततोऽरुंधत्या तत्पुष्टिकारणं पृष्टास्ते मुनिवराः प्रोचुः । देवि ! यथा वयं क्रियाव्यग्रास्तथाऽयं नास्ति । नाग्निहोत्रं न वेदा न दुःसहा शास्त्रकथा नेन्धनप्रयत्नो न कलत्रं न च याचकाः स्वच्छन्दचारिणोऽस्य शुनःसखस्य । अतएव हि चिन्ताशून्यस्याऽस्य शरीरमिदं पीवरं वर्धते । एवमभिधाय तेन सह संजातसौहार्दा मुनयो वने फुल्लकमलोत्पलशालिनीं नलिनीं ददृशुः । ततो वृषादर्भिप्रयुक्ता सा यातुधानी बिसार्थिनस्तानुवाच । भो ब्राह्मणाः ! अहमत्र स्थित्वा नलिनीमिमां रक्षामि । यद्येषा रोचते युष्मभ्यं तर्हि तु निजनामान्यावेद्य मृणालिका गृह्णन्ताम् । किम्बहुना ।

अज्ञातनामधेयानां मत्सन्निधाविह गतिर्नास्ति । निशम्यैवमत्रिप्रभृतयो मुनयः क्रमाद् गूढनिर्वचनैस्तैस्तै र्नामान्यस्यै निवेदयामासुः । ततस्तुल्याक्षरपदक्षोभं निरुक्तस्तेषां नाम श्रुत्वा निष्प्रतिभा कृत्या विसरक्षां निवारयामास । साऽथ यदा शुनःसखोदितं नाम पुनः पप्रच्छ । तदा क्रुद्धास्ते दण्डेन तां भस्मसाद्विदधुः । ततो मुनयः शशिकराकारा मृणालिकाः समुद्धृत्य तास्तीरे निक्षिप्य च स्नात्वा जलक्रियां चक्रुः । अथोत्थाययदा विसाहारसादरास्ते तानि न्यस्तानि विसानि नलिनीतटे नापश्यन् । ततः परस्परं शंकिताश्च ते क्रमात् शपथं चक्रिरे । कथितं च । सहसाभिमतोच्छेदो महतामपि दुःसहो भवति । वृथापाकः कूटसाक्षी वृथाचारः कामचरितः नृशंसः वेदविवर्जितः चौरः पिशुनः परदाराभिगामी गरदः सोमविक्रमी गोऽवमन्ताऽग्निदूषको जलाऽपकारी चाऽस्त्वसौ येन नो विसभोजनमपहृतम् । निशम्यैवं मुनिजनवाक्यं शुनःसखोऽब्रवीत् । येन नो विसानि हृतानि । स याजिने छंदोनिधये शुद्धात्मने ब्रह्मचारिणे च कन्यां देयात् । तच्छ्रुत्वा मुनयः प्रोचुः । त्वया यदीप्सितं भाषितं । तेन त्वयैव नो विसानि हृतानीतिज्ञायते । एवं ब्रुवाणेषु तेषु शुनःसखो विहस्य प्रोवाच । वो हितकारिणा मयैवेह तद्विसस्तैन्यं कृतम् । सा घोरा कृत्या मयैव तु हता । त्रिदशेश्वरोऽहमित्यभिधाय निजस्वरूपं दर्शयामास । ततो नाकपतिः स सप्तर्षिभिः सह वेल्लद्विमानमालांकं नाकं ययौ । राजन् । प्रतिग्रह निवृत्तानां समुज्ज्वलितचेतसां संतोषशालिनां च लौल्यरहिता सुवृत्तिः सर्वदैव विभाति । पुरा कश्यपप्रमुखा मुनिगणा नहुषादयो राजानश्च शतक्रतुं पुरस्कृत्य तीर्थानि प्रययुः । ततस्ते पुण्यतीर्थेषु स्नात्वा पुष्कराहरणीं ययुः । ततस्तत्राऽगस्त्यमुनिर्न्यस्तं निजपुष्करं यदा नापश्यत्तदाते क्रमेण गुरुपातकं शपथं चक्रुः । निशम्यैवं देवराजोऽब्रवीत् । सोऽवश्यं धन्योऽस्तु । यः पुष्करमपाहरत् । एव माकर्ण्य तत्रत्याः सर्वे विस्मिता बभूवुः ।

ततो महीभुजाऽऽवश्यकवस्तुदानमाहात्म्यं पृष्टो देवव्रतोऽब्रवीत् । राजन् ! छत्रोपानत्प्रदानं परत्रेह च पुण्यप्रदं स्मृतम् । पुरा लक्ष्याभ्यास रतो जमदग्निरंशुमान् रश्मिमालामिव सायकश्रेणीं ससर्ज । ततस्तत्र तद् गिरा सुकुमारा रेणुका भर्त्रा विसृष्टान् विशिखान् पुनः पुनरानिनाय । अथ स मध्याह्ने चण्डकिरणस्फारसंतापायासमूर्छितां तां जायां वीक्ष्य क्रुद्धो दिवाकरमुदैक्षत । ततो दिव्यास्त्रविकटं प्रहर्तुमुद्यतं च तं रविर्भयादेत्य प्रसादयामास । अथ वासरेश्वरो गतक्रोधस्य तस्य प्रीतये छत्रमुपानहौ च प्रददौ । किम्बहुनाऽस्मिंल्लोके परत्र च दानमेतत् संतापशमनमभिधीयते । तडाककूपदानं चाऽपि शरीरिणां पुण्यफलप्रदं स्मृतम् । परत्र मरुसंतप्ते पानीयं दुर्लभं किल । निराश्रये परलोके घोरेऽपारति-

मिरे आलोको दुर्लभस्तस्मात्सदा नरो दीपं दद्यात् । पुरा शुक्राचार्यो दैत्यराजं कथान्तरे प्राह । दैत्यपते ! सुमनोबालिधूपदः सकलांल्लोकान् प्रीणाति । पुष्पधूपप्रदो नहुषोऽमरावत्यां महेन्द्रासनं संप्राप्तवान् । ततो यदा दृप्तः सर्पेति व्याहरन् पादेन मुनिपुंगवमगस्त्यं पस्पर्श । तदा भृगुणाऽत्र स निपातितः । राजन् ! अरण्ये घोराजगररूपिणो भीमबाहुमहकृतो यस्य नहुषस्य च शापमोक्षो भवतैव तु पुरा कृतः। ज्ञात्वैतद् बुधा अभिमानं त्यजंति ।

अथ नृपतिना ब्रह्मस्वहारिणां गतिं पृष्टो देवव्रतोऽब्रवीत् । राजन् ! ब्रह्मस्वं विषमं विषमस्ति । पुरा क्वापि कश्चिज्जातिस्मरो राजपुत्रो बभूव । स एकदा कमपि चाण्डालं कुजातिहेतुमपृच्छत् । तच्छ्रुत्वा सोऽभ्यभाषत । भद्र ! येनाऽहं चाण्डालतां यातस्तत्कारणं श्रूयताम् । पुरा प्रबलदस्युभिर्ब्राह्मणगावोऽपहृताः । तासां यद्रजो यज्ञभूमौ सोममध्येऽपप्तत् । तत्पीत्वा विप्रा दीक्षितेन सह नरकमाययुः । अथ तद्रेणु ब्रह्मचारिणो भिक्षापात्रेऽपि निपतितम् । तद्रेणु तत्रस्थितमन्नं च मोहान्मे भक्ष्यतामगमत् । अहं श्रोत्रियो जितेन्द्रियोऽपि ब्राह्मणस्तेनहेतुना दशामिमां प्राप्तवान् । एवं ब्रह्मस्वगौरवं पश्येत्यभिधाय क्षत्रियगिरा ब्राह्मणार्थे रणानले चाण्डालः शरीरं हुत्वा पुनः सद्गतिमवाप । ततोमहीभुजा पुण्यकृतां नानागतीः पृष्टो भीष्मोऽब्रवीत् । राजन् ! कर्मवैचित्र्यादेहधारिणः पृथक् पृथग्लोकान् संप्राप्नुवंति । पुरा गौतमाश्रमे कश्चित् कलभः समायातः । स होमावशेषपयसा नीवारप्रसवेन च विवर्धितो मदजलश्यामकपालालीनषट्पदोऽचलसनिभश्चाभवत् । किम्बहुना स महागजः सभिद्दर्भफलाहारी निर्जराश्रमपालकश्च मुनिपुत्र इव तत्रत्यानां कृपापात्रमभूत् । अथैकदा शतक्रतुः स्वयमेत्य धृतराष्ट्रभूपतेः स्वरूपमास्थाय च तं महागजं जहार । अथ मुनिना पुनः पुनर्याच्यमानोऽपि स नृपो यदा दर्पात् तं गजं न तत्याज । तदा गौतमोऽब्रवीत् । राजन् ! कालवशीकृता नराः शरीरान्ते यत्र गत्वा नंदंत्यथवा शोचंति । तत्र त्वं मे गजं दास्यसि । यत्र वैवस्वतसमादिष्टैर्भ्रुकुटीमुखैस्तैः प्रापात्मानो विशस्यंते । तत्र त्वं मे गजं दास्यसि । यत्र भीरवः शूराश्च समाना दुर्बलास्तथा बलिनस्तुल्याः किंवा मुग्धा विदग्धाश्च सदृशास्तत्र त्वं मे गजं दास्यसि । नरपाल ! धनदपुरे सुमेरौ नंदनवने वरुणराजधान्याम् सुरेशसदने सूर्यधाम्निचन्द्रलोके गोलोकेऽथवा ब्रह्मलोके तु त्वं मे गजं दास्यसि ? यतस्तत्र तु त्वं बलवान्नासि । एतदाकर्ण्य राजाऽब्रवत् । ब्राह्मण ! नरकं तु नास्तिका यांति । अथवा व्यामिश्रकर्माणो नरा यममन्दिरं प्रयांति । व्रतिनोऽतिथिपूजका धनदपुरं यष्टारो नंदनं दातारः सोममण्डलं स्वाध्यायिनो भास्करलोकं तीर्थसेविनो गोलोकं प्रशान्ताश्च ब्रह्मलोकं व्रजंति । परमहन्तु न क्वापि

गमिष्यामि । पुनः कुत्र ते गजं दास्यामीत्यभिधाय कुंजरं तस्मै प्रायच्छत् । ततः स्वं वपुर्दर्शयित्वा दिव्यगतिं च तस्मै दत्वा हसन्निन्द्रो दिवमयासीत् । एवं पुण्यमहिमाऽस्ति गरीयान् ।

पुरा गोवृषभूमिकन्याग्रामपुरादिप्रदो राजर्षिभगीरथः सशरीरो ब्रह्मलोकमगमत् । सदाचाराः शान्ता गुरुपूजारता ज्येष्ठशुश्रूषवश्च नरा लोकेऽस्मिन् शतायुषो भवंति । जपोपवासव्रतजुषां तिथिनक्षत्र योगतो नियमा दिव्यफलदा भवंतीत्यंगिराः पुरा जगादेति श्रुत्वा धर्मं तनये देहगतिं देहीति पुनः प्रष्टुं समुद्यते साक्षाद् बृहस्पतिस्तत्र समाययौ । सोऽथ भीष्मविदुरमुनिवरैः संपूजितो धृतराष्ट्रद्वारकानाथाभ्यां चाऽनुमोदितो रत्नोज्ज्वलासनं भेजे । ततो युधिष्ठिरो भीष्मशासनाद् देहदेहिनोराचारसंसारमरणं च पप्रच्छ । तच्छ्रुत्वा देवगुरुरुवाच । राजन् ! नरः पांचभौतिकं शरीरं पंचधायात मुत्सृज्य स्वप्नवच् चेष्टते । वासनाविद्धोऽयं देहभंगे निरालोकमबांधवं च देशं गत्वा तत्तच्छुभाऽशुभं वेत्ति । ततो धर्माऽधर्मयुतो जंतुः पन्नगो निर्मोकमिव कलेवरं त्यक्त्वा सामोदमारुतगत्या याति । अथ कर्मपुर्यष्टकाश्रयो निराकारोऽयं तत्तद्भुक्त्वा शुक्रमुखाच् च्युतः पुनर्भूतैः सह समागमं याति । तत्र शबलकर्मभिर्मधुवत् पुनर्लिप्त श्चक्रवत्परिवर्तमानो नानायोनिषु परिभ्राम्यति । पुण्यात्मा विपुलदानं दत्वोभयत्र मोदते । नरोऽहिंसया दिवं याति । तृष्णया चाऽति कष्टमनुभवति । विप्रो लोभात् पतितान्नं गृहीत्वा स्वयं पतितो भवति । धर्मकर्मविवर्जितो ब्राह्मणः सूकरकुक्कुटवृकजम्बुकगर्दभसारमेयादिषु कुयोनिषु जायते । गुरुनिकारं कृत्वा नरः पूर्वं श्वा ततो वृकोऽनंतरं च रासभो भूत्वा कष्टमश्नुते । पित्रोः कृतापकारः श्वा भवति । ततः कूर्मगतिं वा शल्यकतां लब्ध्वा पश्चाद् व्यालयोनिमवाप्य च कर्मक्षयावधि नीचदासतां प्रतिपद्यते । भर्तृद्वेषी वानरो वा श्वाऽथवा मूषिको जायते । निक्षेपहर्ता कृमिर्भूत्वा निकृष्टवस्तु सेवते । परनिंदारतः शार्ङ्गो भवति । विश्वासघातको मत्स्ययोनिमुपसेवते । दुष्कृती मृगश्छागः कीटश्च क्रमाद् भवति । आखु र्वा क्रोडो मस्यहर्ता भवति । पारजायिको विविधां क्रव्याद् जातिं भजते । शूद्रो विप्रवधूं गत्वा क्रिमिर्भवति । कृतघ्नः कृमिर्भूत्वा गर्भशतेष्वन्त र्विपद्यते । भ्रूणहा त्रिःसप्तकृत्वः कृमिरुत्पद्यते । भोजनहरो मूषिको वा मक्षिका भवति । गव्यहर्ता वको जायते । वस्त्रापहारको निकृष्टपक्षी भवति । वर्णहरो वर्ही मिष्टान्नस्तेयी च घूको भवति । तैलहरणात् पिपीलको भवति । गंधहर्ता छच्छुंदरिर्भवतीति बहुविधैः कुकर्मभिस्तां तां तमोमयीं योनिं शरीरिणः संसरंति । ज्ञात्वैवं बुधः सदा पापेभ्यो बिभेति ।

एवं विधानि नृणां पापानि प्रायश्चित्तैर्विना दानेनाऽपि किल शाम्यंति । यतो दानं हि

परमागति र्विद्यते । अन्नमेव भूतानां परं प्राणाः । तस्मादन्नदानं प्रशस्यते । अन्नदाता सदैव धनवान् भवति । परिवर्तिनि कालेऽस्मिन् पुण्यवान्नापचीयत इत्युक्त्वा महर्षिभिः पूज्यमानो देवगुरुर्दिवमाचक्रमे । अथाऽहिंसालक्षणं सर्वभूताभयप्रदं धर्ममजातशत्रुणा पृष्टो गांगेयोऽब्रवीत् । राजन् ! अमांसभक्षणं नृणां हयमेधशतैः समं विहितम् । यतो घोरतरपातकादृते मांसं हि नोपजायते । मांसं मांसादेव समुत्पद्यते । मांसमयोऽयं नरस्तुल्यव्यथेऽस्मिन् संसारे मांसं भुंजानः किन्न लज्जते ? यदा नराः कण्टकेनाऽपि संस्पृष्टाः कामपि विक्रियां यांति । तदा ते शस्त्रनिकृत्तं पशुविग्रहं कथमश्नंति ? देहिनां देहसंक्षयसमये तीव्रभयमाकम्पनं च दृष्ट्वा को नामाऽराक्षसो मांसेभ्यः स्पृहां कुर्यात् ? अमांसाशी वर्तते जगद्बन्धुः । स पुण्यकारुण्यसागरः प्राणिभ्योऽभयदानान्निर्भयं धाम प्रयाति । अहिंसा धर्मः संभाररहितः क्रतुर्नाम मार्गश्रमोज्झितं पुण्यतीर्थं मत्यक्त भोजनं च व्रतमभिधीयते । एवमाकर्ण्य राजाऽपृच्छत् । पितामह ! पुंसां प्राणाः प्रियतरा मताः । प्राणा रणानले यैर्हुतास्तेषां गतिं कथयेति राज्ञोक्तो भीष्मः पुनरब्रवीत् । राजन् ! एवमेतत् । दुःखितानामपि प्राणिनां प्राणाः प्रियाः । सत्ववतो विना सहसा कस्तान् परित्यक्तुं शक्नोति ? भयविक्लवा भीरवो जीवितभ्रंशे निश्चिते तृणांचितेऽपि नयने मील-यन्त्येव । पुरा ज्ञानलोचनो व्यासोऽध्वनि शकटसंत्रासाद् विद्रुतं कीटकं वीक्ष्य सास्मितं पप्रच्छ । क्षुद्रजन्तो ! तुच्छेऽप्यास्मिन् देहे रक्षार्थं कोऽयं ते विशेषाग्रहः ? अहं तु कुत्सि-तजीविनस्तव जीवनान्मरणमेव वरं मन्ये । एतन्मुनिवचनमाकर्ण्य कीटकस्तं प्रत्यभाषत । विभो ! देहिनां कायसमं किंचिद् बल्लभन्नास्ति । कीटिकाप्रेमासक्तस्य सूक्ष्मकीटकपुत्रव-तश्च मे विवरान्तरगेहे दिवि शक्रस्येव सुखं विद्यते । प्राणाः स्नेहायतनम् । तान् स्वयं त्यक्तुं क ईश्वरोऽस्ति ? किम्बहुना । मेरुशतैरपि नैते मुहूर्तमपि लभ्यंते । शूद्रोऽहं बहुभिः पापैः कीटयोनिमिमां श्रितोऽस्मि । किन्तु पित्रोः शुश्रूषया जातिमहं स्मरामि । तच्छ्रुत्वा करुणासागरो व्यासो तस्मै नृपपदं प्रादात् । ततस्तद्गिरा स जन्मान्तरे ब्राह्मणो भूत्वा परमगतिमाससाद । उक्तं च । विपत्सु महद्दर्शनं कल्पपादपवत् फलति । राजन् ! अतो यैस्संमुखैर्युधि प्रियतमाः प्राणाः परित्यक्तास्ते धैर्यसागरास् त्रिदिवे विबुधाधिपं स्पर्द्धन्ते । ततो विद्यातपोदानेभ्यः किं विशिष्यत इति राज्ञा पृष्टो देवव्रतो बभाषे । राजन् ! पुरा वाराणस्यां व्यासो मैत्रेयेण निमंत्रित आसीत् । स महात्मा भुक्त्वाऽति संतुष्टः कथान्ते प्रोवाच । ऋषिवर ! तप एव परंतेजोऽस्ति । तप एव परं बलम् विद्यते । सन्तस्तपसैव सर्वं पश्यंति । किम्बहुना ज्ञानमपि तपः फलं निगद्यते सुकृतिभिः । अ-

स्मिन् भवमहामोहव्याप्ते लोकत्रये विद्यैव परमं चक्षुर्वर्तते । किन्तु सर्वमेतदतीत्य दानमेव संसारेऽस्मिन् विशिष्यते । दानात्परं जगति देहिनां शर्म न विद्यते । अन्नदानैरनेके सुकृतिनोऽनायासलीलया मुनिप्राप्यं परमंपदं प्रयाताः । अन्नं हविः सुधा प्राणास्तद्दाता जीवनानंददातेत्यभिधाय मुनिमामंत्र्य च व्यासदेवो जगाम । तच्छ्रुत्वा राजाऽति संतुष्टो बभूव ।

अथ राज्ञा स्त्रीसदाचारविषये पृष्टो गांगेयोऽब्रवीत् । राजन् ! सततं सतीव्रतमेव नारीणां सदाचारः । पुरा कैकेयी सुमना नाम विनोदार्थं सुरलोकस्थितां शाण्डिलीं पप्रच्छ । सुभगे ! केन तपसा केन दानेन वा दिव्यविमानेऽस्मिन् रविप्रभेव भासि ? एवं कुतूहलेन पृष्टा सा शांडिली प्रोवाच । देवि ! नाऽहं व्रतैर्न सन्यासैर्न च दानेन दिवं श्रिता । किन्तु मया भक्त्या सततं देववत्पतिरेव संपूजितः । महाजना नातः परं स्त्रीणां तपः प्रशंसंति । अहं प्रोषितेऽपि पत्यौ व्रतं परित्यज्य निष्कुटे द्वारि वा हर्म्ये राजमार्गावलोकिनी कदापि नाभवम् । भर्तुश्छायेवानुगताऽहं कोपे भीता हितैषिणी च भूत्वा मनोवाक्कायकर्मभिः पतिव्रतं च पालयंती त्रिदिवमनुप्राप्तेत्यभिधाय शाण्डिली ततो निषधमुन्नतं प्रायात् । तस्मात्सतीव्रतादन्यन् नारीणां परायणं नास्ति । सती कुलद्वयमपि तारयतीति सत्यम् ।

किंस्वित् साम्ना दानेन वा जनोऽधिकं प्रीयत इति युधिष्ठिरेण पृष्टो देवव्रतोऽब्रवीत् । राजन् ! पुरा वने कश्चिद् ब्राह्मणो राक्षसेन बलाद् गृहीतोऽभवत् । सोऽथ सर्वोपायासमर्थः सामपूर्वकं प्रोवाच । आर्य ! कृपया दीनब्राह्मणं तु मा पीडय । तच्छ्रुत्वा सोऽवदत् । विप्र ! वंचनाय बधोद्यतोऽहम् । कारणेन केन पाण्डुरो दुर्बलश्चाहम् ? तत् कथ्यताम् । निशम्यैवं निशाचरवचनं द्विजोऽब्रवीत् । सखे ! ते सुहृज्जनो दूरीभूत इति मन्ये । निःसहायेन च त्वया राजलक्ष्मीरियं प्राप्ता तेन पाण्डुरोऽसि । अपरं च यत्नाराधितोऽपि स्वजनो विरक्त इति विचिन्त्याऽपि परिशुष्यसि । किम्बहुना । त्वत्तो हीनगुणान् व्यक्त पूजितान् दृष्ट्वा भवान् दुर्बलः । त्वं त्यागी दारिद्र्यमनुभवसि । गुणवानपि न पूज्यसे ? प्राज्ञस्याऽपि ते वचो न शृण्वंति लोकाः । साधुस्सन्नपि त्वं खलैर्वंच्यसे । शास्त्रज्ञस्य निर्धनत्वं धूर्तस्य च धनाढ्यत्वं विलोक्याऽपि त्वं हरिणः कृशोऽसि । निशम्यैवं द्विजवचनं निशाचरः स्वाशयपरिज्ञानात् प्रीतस्तं सहसैव तत्याज । राजन् ! भुवनेऽस्मिन् सान्त्वैः को हि न तुष्यति ? एवमाकर्ण्य राजा दानादपि सान्त्वमाधिकं सममन्यत ।

अथ राज्ञा कृष्णप्रभावं पृष्टः शांतनवोऽब्रवीत् । राजन् ! पुरा तपःस्थितं शौरिं मुनयो द्रष्टुमागच्छन् । ततस्तत्र ते पूर्वं तु विष्णुवक्त्रोत्थिताग्निना दग्धं वनमपश्यन् पश्चात तेनैव दृशाप्यायितं हरितं प्रफुल्लितं च काननं विलोकयामासुः । अथ नारदमुखा

श्रीकृष्णमाहात्म्यं समाकर्ण्य तं पुराणपुरुषोत्तमं बुबुधिरे । ततः कथांते नानाकथाख्यानकोविदो नारदो विष्टरश्रवसा पृष्टः प्रस्तावोचितं समभ्यधात् । पुरा हिमगिरौ गौरी लीलया किल धूर्जटिनेत्रे कराभ्यां पिदधे । ज्ञात्वैवमीशानस् तृतयिनेत्रमुद्घाटयत् । ततस्तृतीयनयनोद्भूतवह्निना स हिमगिरिः प्लुष्यत्साललताजालज्वालावलयिताम्बरोऽभवत् । अथ गौरीगिरा शीतांशुशेखरः शिवः पुनर्गौरीगुरुं गिरिं दृशैव स्मेरपुष्पलतावृत्तं चक्रे । ततस्तत्र प्रणयलालसो भगवान् बहुविधाः कथाः पृष्टो देवीकथान्ते धर्मार्थ निर्णयमुवाद । देवि ! नरो वा नारी सदाचारसमेतं वर्णाश्रमधर्मं नित्यं पालयेत् । प्रवृत्तः प्रवृत्तिलक्षणं धर्मं निवृत्तश्च ज्ञानध्यानमयं धर्मं पालयित्वा सुखमेधते । अथ शशांकचूडेन पृष्टा देवी मृगीदृशां वराराधननदैवतं पुनीतचरितं शशंस । ततो नीलकण्ठो मुनिवृन्दैः पृष्टोऽब्रवीत् । महाशयाः ! भूतानां प्रभवाप्यये परमकारणं विष्णुमेवावगच्छत । स महाभागोऽवनीतलेंऽशादवतीर्य देवकीवसुदेवयोस्तनयो भूत्वा च विबुधारातिसंहारतत्परो भविष्यति । स सूर्यः स चन्द्रः सोऽहं स च चतुर्मुखः । किम्बहुना स सर्वदेवमयो लोके वेदे च वर्णितोऽस्ति । ततो मुनिजनवचनात् केशवो द्वारकामेत्य रुक्मिण्यां महाभाग्यं पुत्रमवाप । एवं कथयित्वा गांगेये मुहूर्तं मौनमास्थिते मुनिसभामध्ये शनकै धर्मराजोऽब्रवीत् । पितामह ! सर्वदेहिनाम्परमदैवतं किम् ? विश्वमिदं कस्मिन् प्रतिष्ठितं ? स्तुत्या च मुक्तिप्रदः कः? निशम्यैवं युधिष्ठिरवचनं गांगेयो मनसा पुण्डरीकाक्षं नत्वा सादरं प्रोवाच । श्रीराजाधिराज ! देवदेवो जगत्प्रभुर्नामसहस्रेण स्तुतो भक्ताय भुक्तिं मुक्तिं च संप्रयच्छति । सोऽनंतः, आद्यः, इज्यः, ईशानः, उज्ज्वलः, ऊर्जितः, ऋतधामा, एकः, ऐश्वर्यवान्, ओङ्कारः, औपनिषदः, अन्तर्यामी, कृष्णः, खगवाहनः, गणपतिः, घनश्यामः, चक्रपाणिः, छान्दोग्यवेद्यः, जगद्योनिः, झषकेतुपिता, टंकारप्रियः, ठक्कुरः, डामरज्ञः, ढुंढिराजः, तथागतः, थुर्वकारी, दक्षिणामूर्तिः, धर्मराजः, नारायणः, पुराणपुरुषोत्तमः, फणीन्द्रशायी, ब्रह्म, भगवान्, महाभाग्यः, यज्ञपुरुषः, रामः, लक्ष्मीकान्तः, वामनः, शरणागतवत्सलः, षडभिज्ञः, संसारगुरुः, हरिः, क्षमा-सिन्धुः, त्राता, ज्ञानसिन्धुरित्यादिभिरसंख्यनामाभिस्तं सनातनं श्रीमहाविष्णुं भीष्मस् तुष्टाव । निशम्यैवं युधिष्ठिरः श्रीकृष्णचन्द्रं वन्दित्वा पितामहं श्रीभूमिदेवानां प्रभावं पप्रच्छ । तच्छ्रुत्वा शान्तनवोऽब्रवीत् । राजन् ! ब्रह्मनिष्ठानां ब्राह्मणानां भयात् किल श्री सूर्यः समुदेति समीरणश्च वाति । पुरा दत्तात्रेयवरादवाप्तसहस्रभुजं जितजगत्त्रयं कार्तवीर्यं च वायुः प्राह । राजेन्द्र ! लोकेऽस्मिन् ब्राह्मणेभ्यो बलवत्तरः कोऽपि नास्ति । किं बहुना । येषां दृशा भवादृशा

भवंति च न भवंति । पूर्वं जलनिधावगस्त्येन पीते निःशरणा दैत्या देवैर्हताः दैत्यसमरेऽतितिमिरे जाते देवत्राता शीतकरोऽत्रिणा सृष्टः । च्यवनः शक्रमजयत् । निशम्यैवं ब्राह्मणमाहात्म्यं हैहयभूपतिरर्जुनो भूमिदेवान् प्रत्यहमपूजयत् । अतः परं ब्राह्मणप्रभावं केशवो जानातीति भीष्मेण कथिते युधिष्ठिरो हृषीकेशं विप्रमाहात्म्यं पप्रच्छ । स च पृष्टस्तमेवमभ्यधात् । राजन् ! पुराऽहं प्रद्युम्नेन पृष्टो द्विजन्मनां शक्तिमवदम् । यत्तपसा दैवतान्यपि कम्पंते । पुत्र ! सर्वप्रयत्नेन सदा ब्राह्मणान् पूजय । क्रोधप्रसादाभ्यामेते दहंति च जीवयंति । पुरा प्रतिश्रयार्थी दुर्वासा मद्गृहे नानोपायैः सेव्यमानो न्यवसत् । सोऽथ पूजितोऽपि तप्तपायसं भुक्त्वा रुषा ज्वलन्नुच्छिष्टे नांगानि लिम्पेति मा माह । भयादहं तदकरवम् । ततः सोऽब्रवीत् । कृष्ण ! रुक्मिणीं रथे योजयित्वा बहुयोजनं माम् भ्रामय । तदपि मया कृतम् । एवं कृत्वाऽपि यदाऽहं निर्विकाराननोऽतिष्ठम् । तदा स परुषाश्रयोऽपि मां दृष्ट्वा तुतोष । ततःप्रहृष्टेनान्तरात्मना प्रोवाच । यदुनाथ ! विना पादौ तव वपुरुच्छिष्टालिप्तं बज्रमयं भविष्यति । यतस्त्वया तौ न लिप्तौ । एतत् कृष्णवचः श्रुत्वा पार्थः पुनः शान्तनवात् कल्मषनाशनान् भृगुकण्वैरभ्यवसिष्ठ कश्यपच्यवकौतवंशान् रामश्वेतनहुषदुष्यन्तालर्कभगीरथान्ववायांश्च शुश्राव । ततो देवव्रतः क्षणं स्थित्वा व्यासाज्ञया पाण्डवं पुरं विससर्ज । अथ कौंतेयः सकृष्णधृतराष्ट्रं पुरस्कृत्य भ्रातृभिरनुगैश्च सह हस्तिनापुरं प्रययौ । सोऽथ प्रजाभिः पूज्यमानस्तत्र किंचित् कालं स्थित्वोत्तरायणे दिनाधीशे पुनः पितामहमुपागमत् । ततोऽपरे ब्रह्मलोक इव मुनीन्द्रजुष्टे सदसि निःशब्दसंचारे च संजाते भीष्ममुखावलोकिनि राज्ञि शनैर्नयने समुन्मील्य सानुगान् पाण्डवान्वीक्ष्य वाग्मिवरो देवव्रतो युधिष्ठिरं प्रोवाच । वत्स ! दिवाकरे परिवृत्ते दिष्ट्या त्वं समायातोऽसि । निशातशरशायिनो मे मासद्वयं च व्यतीतम् । पुत्र ! एष त्वामामंत्र्य सनातनलोकान् व्रजामीत्यभिधाय सत्यसिन्धुः पितामहो विदुराग्रे धृतराष्ट्रमप्युवाच । राजन् - तव विद्यामयं चक्षु स्लक्ष्णं लक्ष्यते । पुत्रशोकार्त्या मोहं मागमः । यतः कालो हि दुर्जयोऽस्ति । सम्प्रत्यनृशंसं युधिष्ठिरं पुत्रवत्पश्य । येन संतोषशालिनस्तव शेषोऽयं कालः सुखेन प्रयात्वित्युक्त्वा हृषीकेशं मूर्ध्ना प्रणम्य च भगवन्नधुना मां गन्तुमनुजानीहीति बभाषे । ततः कृष्णाभ्यनुज्ञातो भीष्मो मुहूर्तं प्राणधारणान्दधानो जलधिरिव निस्तरंगो बभूव । सोऽथ दलितदलसरोजप्रोच्चटज्जीवहंसो भीष्मो मनसा प्रणवं जपित्वाऽतिशशिसूर्यां दृशं भूविभागे निवेश्य गलितकरणवृत्तिग्रामानिःस्पन्दलक्ष्यः सपदि सच्चिदानन्दस्वरूपं चिन्तयामास । अत्रान्तरे तडित्पुंजपिंजरांशुशताञ्चितं ज्योतिर्भीष्मस्य

मूर्धानं भित्त्वा विमलनभः प्रविवेश । ततः सविदुरो धर्मराजोऽस्य रत्नाभरणैर्वासोभिस्तथा कुसुमैः स्वयं वैमानिकं चक्रे । तस्य यशः शुभ्रं छत्रं तूर्णं युयुत्सुर्जग्राह । भीमार्जुनौ चामरग्रहीतारावास्ताम् । ततः सबाष्पं भरतस्त्रीभिस्तालवृन्तानिलेन वीज्यमानः स श्रीखण्डागुरुकल्पितां चितां प्राप । अथ स्फारतेजसि गांगेये सजीव इव संलीने साश्रुनेत्रा युधिष्ठिरमुखा जलक्रियां चक्रुः । अत्रान्तरे मंदाकिनीतीरे सानुगे राज्ञि युधिष्ठिरे विषण्णे साश्रुलोचना जान्हवी जलमध्यात् समुत्तस्थौ । ततोऽतिविव्हला सा खिन्नैर्व्यासनारदकण्वाद्यैर्मुहुरालोकिता प्रोवाच । हा पुत्र ! त्रिपुरारातिशिष्यं क्षत्रियद्विषं रामं जित्वाऽपि कथं परैर्निहतोऽसि ? अहोनु ! यशोनिधौ त्वयि कालेनास्तं याते वीररत्नं विना शोच्येयं पृथिवी जाता । मद्विधाऽन्या का पापा जननी भविष्यति । या त्वादृशं पुत्रं निहतं दृष्ट्वाऽपि न विदीर्यते । अहोबत ! जम्बुकोपमेन शिखण्डिना भीष्मो मृगेन्द्रनिभो निपातितः । तच्छ्रुत्वा जनार्दनः प्रलापमुखरां जान्हवीं शनैराश्वासयन् प्रोवाच । देवि ! विज्ञातपरमार्थाऽपि त्वं सामान्यजननीव कथं विमुह्यसे ? बलीयसः कालाद्विना त्रिपुरारिपराक्रमं हन्तुं शिखण्डिनः शक्तिर्नासीत् । किम्बहुना । स्वच्छन्दनिधनः स महाभागस्तु परमपदमवाप । अशोच्यं पुत्रं मा शुचः । त्वमपि तु चिन्तय । तद्विधः कोऽन्यो जायेत । एवं श्रीकृष्णचन्द्रेण समाश्वासिता व्यासादिभिश्च प्रबोधिता मंदाकिनी निःस्यन्दमानमकरा क्षणं बभौ । ततो दुःखाकुलाः सानुगा युधिष्ठिरमुखास्तां समामंत्र्य वासरेश्वरेऽस्तं याते राजधानीं न्यवर्तत । अथ राजभवनं प्रविश्य धौम्यः शांतिपाठं पपाठ ।

**ॐ शन्नो मित्रः शंवरुणः शन्नो भवत्वर्यमा ।**
**शन्न इन्द्रो बृहस्पतिः शन्नो विष्णुरुरुक्रमः ॥**

**ॐ द्यौः शांतिरंतरिक्षꣳ शांतिः पृथिवी शांतिरापः शांतिरोषधयः शांतिः । वनस्पतयः शांतिर्विश्वेदेवाः शांतिर्ब्रह्म-शांतिः सर्वꣳ शांतिः शांतिरेव शांतिः सा मा शांतिरेधि ॥यजुः॥**

इति श्रीगद्यभारते शान्तिपर्व समाप्तम् ।

---

ओंनमः शिवाय ।

# अथाश्वमेधिकं पर्व प्रारभ्यते ।

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥

एवं भीष्मभास्वत्यस्तं प्रयाते शोकम्लानमुखाम्बुजोऽजातशत्रुर्मूर्छामवाप्य धरणीतले निपपात । ततो बांधवैः सह तस्मिन्विषण्णे शुचं संस्तभ्य शनकैर्धृतराष्ट्रस्तमुवाद । राजन् ! उत्तिष्ठ । मुनिभ्यः संसारासारचरितं श्रुत्वाऽप्येवं त्वं धैर्यं हातुं नार्हसि । धैर्यसागर ! स्वधर्मपालकस्य ते नाऽयं शोकावसरः । साम्प्रतं जागरूकतामवलम्ब्य प्रजापतिरिव प्रजाः पाहि । अधुना तु ममैवाऽयं कालः शोचितव्यः । येन सुनयोज्ज्वला विदुरगिरो न श्रुताः । एतदाकर्ण्य कृष्णोऽपि पार्थमब्रवीत् । धर्मनन्दन ! मा शुचः । क्षत्रधर्मेण लब्धामिमां महीं भुंक्ष्व । धैर्यायत्ता विभूतयो दुःखिभ्यो हि पलायन्ते । अथचेत् पापाच्छंकसे । तर्हि दिग्विजयी त्वमश्वमेधविधिना देवान् यजस्व । यतस्तद्योग्यतामवाप्तवानसि । ततो मुनिवराः प्रोचुः । राजन् ! श्रेयस्करं श्रीकृष्णवचनमनुपालय । निशम्यैवं मुनिवृन्दानुशासनं राजा यथाकथंचिद् धैर्यं धृत्वा श्री वृहद् यज्ञार्थं बद्धमनोरथो बभूव । ततो भूपो धनमूलां सर्वां क्रियां मत्वा कोषाध्यक्षान् समाहूय च राज्यकोशस्थितिं पर्यपृच्छत् । तच्छ्रुत्वा ते सविनयं प्रोचुः । पृथ्वीनाथ ! युधि कौरवैस्तत् सर्वस्वं क्षयितम् । अत्रान्तरे द्रविणं विनाऽश्वमेधे राजानं निराशं विज्ञाय करुणासिन्धुर्व्यासो निर्वापयन्निव प्रोवाच । हिमाचले यन् मरुत्तभूपालस्य यज्ञशेषं भूरिकांचनं विद्यते । तत् त्वं समवाप्स्यसि । श्रुत्वैतत् पाण्डुपुत्रेण मरुत्तमहीपतेर्महायज्ञकथां पृष्टो मुनिपुंगवः प्रोवाच । आसीन्मनुवंशे करंधमो नाम प्रतापपुंजो राजा । तत्कुलेऽग्निभक्तो मरुत्तसंज्ञको नरेश्वरो बभूव । किम्बहुना । तमिन्द्रोऽपि नित्यं चेष्टितैः स्पर्द्धते । परं स तस्य किमपि कर्तुं न शशाक । अथैकदा मन्युतप्तः स वृहस्पतिं रहः प्राह । गुरुदेव ! करंधमनृपस्तु त्वत्पितु र्याज्योऽभवत् । त्वं च गुणाधिकस् तत्सूनोर्मरुत्तस्य याजको भवसि । यद्यनुग्रहःस्यात् तर्हि तु तद्दर्पसंघर्षाद् भवन्तमहमभ्यर्थये । भवताऽधुना तस्य याजकपदं

न गंतव्यम् । एवमाग्रहातिशयेन मघवता सम्प्रार्थितो वृहस्पतिस्तथेत्यूचे । अत्रान्तरे नरपतिर्मरुत्तो देवगुरुमुपसृत्य प्रोवाच । गुरो ! महायज्ञेऽस्मिन् भवानेव मम याजको भवतु । एतदाकर्ण्यापि शक्रप्रणययंत्रितो वृहस्पति र्यदाऽभ्युपगमं न चकार । तदा लज्जितो राजा विनष्टसंकल्पो भूत्वा ततः प्रतस्थे । अत्रान्तरे पथि नारदं दृष्ट्वा संतोषमवाप । अथ नारदोऽपि तं समालोक्य तत्कथां श्रुत्वा च जगाद । राजन् ! संतापं त्यज । वृथैव च विमना मा भव । संवर्ताख्यो योगीन्द्रो वाराणस्यां निवसति । सोऽस्ति वृहस्पत्यनुजः । त्वमधुना तं शरणं व्रज । अथ केनाऽहं सूचित इति तेन पृष्टस्त्वं नम्राननो मह्यं नारदस्त्वामिहस्थमावेदयदिति ब्रुवीथाः । नारदेनेत्यभिहिते हर्षनिर्भरो भूपालः स्वयं वाराणसीं गत्वा सर्वं तदुक्तं विदधे । सोऽथ संत्यक्तोन्मत्तरूपं तं याजकं समवाप्य तदनुज्ञातो हिमगिरितटेऽत्युग्रं तपश्चकार । ततस्तत्र यज्ञवित्तार्थी स पार्थिवः शंकरं समाराध्य तत्प्रसादात् सुमेरुतुल्यं कांचनराशिं लेभे । अथ शिल्पिभि र्हैमेषु सर्वभाण्डेषु रचितेषु राज्ञः संपूर्णो यज्ञसंभारः प्रावर्तत । ततो वृहस्पति र्यज्ञे तामतुलां समृद्धिं संवर्तकं च याजकं दृष्ट्वाऽत्यन्तं पश्चात्तापमवाप । अथ शक्रेण शोककारणं पृष्टो भ्रातृस्पर्द्धाकुलः स म्लानमनसा मरुत्तयज्ञविभवं प्रकटयामास । एतदाकर्ण्य गुरुभक्तो महेन्द्रोऽग्निदेवं समाहूय प्रोवाच । देवदूत ! त्वमधुना मद्वचसा मरुत्तपार्थिवं गत्वा तथा ब्रूहि । यथा स संवर्तकं त्यक्त्वा वृहस्पतेरेव याज्यो भवेत् ।

अथ देवराजेनोक्तो बन्हिर्नराधिपमुपेत्य शक्रसंदेशमवदत् । परं राजा तं नाभ्यनंदत् । ततः प्रतिनिवृत्य पावको यदा वृत्तान्तं देवराजाय वर्णयामास । तदा वज्रिणा पुनर्गच्छेति प्रेरितोऽग्निः संवर्तभयकम्पितोऽवादीत् । देवराज ! स तत्र ब्रह्मचारी संवर्तकः क्रुधा मामूचे । तेजोराशे ! यदि त्वं पुनरत्र समेष्यसि । तर्हि त्वामवश्यं शपेयम् । तच्छ्रुत्वा पुरंदरस्त्वं कातरोऽसीति जगाद । सोऽप्यवादीत् । अहो नु शक्र ! प्रमादात् किं वा मोहादथवा कोपाद् ब्रह्मकोपाग्निस्ते विस्मृतः ? अहल्यावल्लभ ! यदा स च्यवनः कोपान्महादंष्ट्रमसुरं त्वद्वधार्थं व्यसृजत्तदा ते धैर्यं क्व गतम् ? ब्राह्मणरुषोऽति दुःसहाः क्षणाज्जगन्निर्दहंतीति हुताशनेनोक्ते शक्रः किमपि प्रत्युत्तरं नादात् । ततो महेन्द्रेण विसृष्टो गंधर्वपति र्गुरुं भजस्वेति नृपमवादीत् । तच्छ्रुत्वा राजा तं मैवं वद । मैवं वदेत्यभ्यधात् । अथ क्रुद्धो वज्री गर्जन् मेघान् पुरस्कृत्य यज्ञाङ्गणं प्रययौ । ततस्तत्र मरुत्वान् वज्रं प्राक्षिपत् । परं संवर्ततेजसा तन्मेघेष्वेव विलीनमभवत् । अथ तन्मंत्रशक्त्या विवशो वृत्रहा देवावाहनसमये सोमपीथिभिस्त्रिदशैः सह स्वयं तत्र समाययौ । ततः शांतमन्युः

शतक्रतुर्मरुत्तेन प्रपूजितो यज्ञक्रियापरिकरे स्वयमेव परिचर्यापरो बभूव । अथ तदाज्ञया सर्वेऽपि यज्ञसंभारकारिणो देवा भूमिपालस्य चिरं निदेशवशगा अभूवन् । एवं संवर्ततेजसा कनकवर्षिणो मरुत्तस्य महायज्ञो निर्विघ्नः पूर्णतां प्राप । राजन् ! तच्छेष द्रविणेन हयमेधमहामखं सांगोपांगं समवाप्नुहीत्यभिधाय मुनीश्वरो विरराम ।

अथ श्रीकृष्णमुनिगणादिभिश्च समाश्वास्यमानो राजा हयमेधानुष्ठाने धृतिमलभत । ततः प्रजाकार्यं द्रष्टुं प्रवृत्ते युधिष्ठिरे सर्वं तन्मुनिमण्डलं तमामंत्र्यान्तर्दधे । अथ कृष्णौ हेमरत्नलताकान्ते विकासिकनकाम्बुजे च सभोद्याने प्रीत्या स्वैरं विजह्रतुः । ततस्तत्र कथांतेऽर्जुनः कंसारिमवदत् । महानुभाव ! युद्धारंभे यत्किमपि त्वयोक्तं तत्सर्वं मम विस्मृतम् । अतः कृपया पुनरुच्यताम् । निशम्यैवं पार्थवचनं केशवः पुनरुवाच । सखे ! यद्यपिनैतत्पुनर्वक्तुं शक्यते । तथापि प्रेमाधिक्यात्संप्रति यद्वदामि तत्सावधानतया पुनः समाकर्णय । पुरा कश्चिज्जीवन्मुक्तदशां श्रितः सिद्धो ब्राह्मणेन पृष्टो भवविभ्रमं विज्ञाय सर्वमवदत् । असत्यसंघातेऽस्मिन् पांचभौतिके गुणनिबद्धो जीवः पंजरे पक्षीव तिष्ठति । अहंकारैकसाराणां विस्मृतात्मनां देहिनां सुखदुःखचयोदयाश्चक्रवत् परिवर्त्तन्ते । देहांते कर्मसंसर्गाज्जन्तवः स्वशुभाशुभैस्तारारूपा विमानानि नरकाणि च भजंते । ततो भोगक्षये शुक्ररूपः शोणितसंप्लुतश्चात्मा योन्यां प्रविश्य जरायुवेष्टितं गर्भं समवाप्नोति । यथा दर्पणोदरे निःश्वासाग्रैर्वारि विलीयते । यथा च निर्धूतबन्हेरूष्मा च व्योम्नि प्रसर्पति । यथा वा कुसुमामोदोऽन्तरेऽनिले प्रविशति । किंवा सरंध्रे स्फाटिके रागः संक्रान्तिमायाति । तथा दुर्लक्ष्यसंचारोऽयमात्माऽनिलः शीतस्पर्शमिव वासनामन्तर्बिभ्राणो गर्भं प्रधावति । तृष्णातंतुर्बिसस्येव जातस्य जायते । वर्धमानस्य वर्धते । किन्तु शुष्यतो नहि शुष्यति । ब्रह्मदीक्षितो विवेकाद् दुःखसंयोगाद् वागाढवैराग्यमाश्रित्य नाऽहमस्मीतिमंत्रेण विमुच्यते । योगी पूर्वं भावेषु निर्वाणस् ततः कारणवृत्तिषु निरालम्बदशामेत्य परब्रह्मणि लीयते । सर्वतः पाणिपादं सर्वव्यापिनमात्मानं सत्यामेतां च भवस्थितिं परिज्ञाय स मुमुक्षुः शाश्वतं सुखं लभत इत्युक्त्वा ब्राह्मणं स सिद्धः सहसाऽन्तरधीयत । कौंतेय ! इदमन्यच्च प्रयतः श्रेयसे शृणु । पुरा काचिद् ब्राह्मणी विजने भर्तारमब्रवीत् । कान्त ! त्वत्परायणाऽहं साध्वी कांगतिं गमिष्यामि । तच्छ्रुत्वा स्मिताननो विप्रस्तामुवाच । प्रिये ! वैश्वानराभिधोऽग्निः किल सर्वदेहिनामन्तः स्थितः । तस्य पंचेन्द्रियाणि मनो बुद्धिश्च सप्तार्चिषः स्मृताः । अस्य समिधो विषया भोक्तारश्च सप्तर्त्विजः । श्री पतिभक्तिपरायणे !

समिधोऽस्य विषयाः । भोक्तारश्च सप्तर्त्विजः । तस्मिन्हते च सर्वमिदं पुनः पुन र्जायते । मनस इन्द्रियाणीव तेषां च सर्वदैव मनः परस्परोपकारेण देहसंगमे प्रीयते । पुरा मनोबुद्धिप्रभृतयः सप्तेन्द्रियमृगा राज्ञा योगमयैः शरैरतर्केणैव निहताः । किम्बहुना । जितेन्द्रियस्य सर्वमिदं करतलगतमिति जनकोविप्रमुवाच । अथासक्तमनसा मया भवाविर्भावशांतये सर्वमिदं त्यक्तम् । कल्याणि ! तवापि गतिः सदैव मद्भावसदृशी । ज्ञानपावकं ब्रह्मारणी समुद्भूतं जानीहि । एतत् पतिवचः श्रुत्वा तत्वदर्शिनी ब्राह्मणी परं प्रावीण्यमगमत् । पार्थ ! पुरा स्वयंभुवाऽभिहिता भवविच्छेदकथा बृहस्पतिप्रभृतिभिः श्रुता । अत्र गुणत्रय निबद्धानां कर्मभेदविकारिणां प्राणिनामल्पोऽपि भावोऽयं विशालतामायाति । सर्गोऽयमहंकाराद्विनिर्गतो विचित्रःकिल । यथा श्वभ्रे पुष्पचयस्तथा तस्मिन्नेव लयं याति । जन्मान्तरशताभ्यासादन्तरंगत्वमागतो मनसः सोऽहंकारः केन लीलया विनिवार्यते । अविद्या तानवेनैव शनै शनैः सन्यस्तकर्मणो विकल्पद्वंद्वविरतौ ज्ञानालोको भवति । ज्ञानवानेवं प्रवृद्धेन ज्ञानाग्निना भवविषद्रुमं दग्ध्वा सर्वग्रंथिविनिर्मुक्तः परमामृतं समश्नुते । पार्थ ! अहमेव गुरुस्त्वं च मम शिष्यसमोऽसीत्यभिधाय जनार्दनो विरराम । एवं कृष्णः किरीटिना सह प्रीतिपूर्वकं सुचिरं विहृत्य बंधुजनोत्सुको द्वारकागमने मतिं चक्रे । ततो धृतराष्ट्रादीन् समामंत्र्य कुंतीं प्रणम्य सकृष्णां सुभद्रां समाश्वास्य पुनर्हयमेधे समेष्यामीत्याभिधाय श्रीदारुकप्रेरितरथं समारुह्य च गरुडध्वजः प्रतस्थे । ततः श्रीसात्यकिसखो व्रजन् पथि तेजोराशिमुत्तंकमुनिमालुलोके । अथ शौरिस्तं सादरं प्रणम्य वीतरागाणामाश्रमवासिनां कुशलमनामयं च पप्रच्छ । एवमाकर्ण्य प्रीतिपूर्वकमनामयमभिधाय हरिमुत्तंकः प्रोवाच । कच्चित् त्वया साम्ना भारतकुलं संरक्षितम् ? कच्चिद् दुर्योधनो राजा धर्मपुत्रश्च सानुगौ विगतसंघर्षौ त्वद्बुद्ध्या श्री पैत्रिकेपदे सु प्रतिष्ठितौ ? इत्युत्तंकेन पृष्टो गोविन्दस्तं प्रत्यभाषत । मुनिराज ! विदुरं पुरस्कृत्य भारतसंधौ च मया पूर्णयत्नः कृतः । परं दैवकृतान्ताभ्यां विमोहितो बहुशो हितं प्रोक्तोऽपि कौरवेश्वरो मद्वाक्यं नांगीचकार । किंबहुना । राधेयमनुवर्तिनः कुरुराजस्य निर्बंधात् सर्वेऽपि पार्थिवा निहताः । केवलं पंचैव पाण्डवा अवशिष्टाः । एतदाकर्ण्य कोपाज्ज्वलितानलसंनिभो मुनिस्तमूचे । कृष्ण ! पार्थहितमनुसृत्य वक्रमनसा त्वयैव ते विनिपातिताः । नूनं शक्तेनाऽपि त्वया घोरक्षयोऽयमुपेक्षितस्तस्मात्ते शापं ददानि । निशम्यैवमुत्तंकवचनं शौरिर्बभाषे । उत्तंक ! तपोनिधिं त्वाम् सम्यगवगच्छामि । किन्तु कोपेन तपोव्ययं कर्तुं त्वं नार्हसि । मुने ! तमो हि घोरं च दुःसहं । शरीरिणां मृत्युः क्रोधः । त्वमद्यापि नष्टमोहो नासि ?

किं च सर्वव्यापिनमीश्वरमपि न जानासीत्युक्ते पुण्डरीकाक्षेण शान्तकोपो मुनिरब्रवीत् । पुरुषोत्तम ! त्वामहं जाने । परंतु ते तद् दिव्यं वपुरहं सांप्रतं द्रष्टुमिच्छामीति मुनिवरेण प्रार्थितो भगवान् विश्वाविष्कारलीलया शक्तिप्रकाशपरिपूरितसंविदग्रे श्री रेखास्फुरद्द्रुहिणरुद्रमहेन्द्रचन्द्रम् धामत्रयोत्तरमनश्वरमैश्वरं च तद्रूपं प्रदर्शयामास । एवमालोक्य निरस्तमोहो मुनिर्नानास्तोत्रैर्वैकुण्ठं तुष्टाव । ततो भक्त्या नमस्कृतो विष्णुस्तद् गिरा तदेव सौम्यं वपुर्धृत्वा प्रोवाच । मुने ! स्मरणात् सर्वतस्ते सन्निधिं विधास्यामीत्यभिधाय तं समामंत्र्य च गरुडकेतनःसत्वरं प्रायात् । अथैकदा मरुधन्वसु जलार्थी स महामुनिर्जलप्रदं धनुष्पाणिं चण्डालं च ददर्श । ततोऽसकृत् तेन प्रार्थितोऽपि मुनिर्यदा जलं न जग्राह । तदा सोऽन्तर्दधे । अथ भगवान् विष्णुः स्वयमभ्येत्य तं प्रोवाच । मुने ! मद्वचसा शक्रस् तुभ्यं सुधां दातुं समाययौ । जलदाता स नासीच्चाण्डालः । तव मिथ्या शंकाऽभवत् । यन्मोहात्स प्रत्याख्यातस्तत् त्वया युक्तं न कृतम् । अधुना मद्वरादियं मरुमही सामृतैर्जलनिर्झरैःसंपूरिता भवत्विति निगद्य हरिर्ययौ । सोऽयमुत्तंको यः पुरा गुरुसेवया परमज्ञानमवाप्य गुरुदक्षिणार्थी पौष्यमंदिरं प्रययौ । सम्प्रति श्रीमहाविष्णोर्दुर्लभदर्शनलाभं समासाद्य जन्मबन्धविनिर्मुक्तोऽपारं भवसागरं ततार ।

अथ राजा मंत्रिमण्डलं समाहूय च यज्ञकार्यं चिन्तयामास । सोऽथ सानुजः श्रीकण्ठदयितं शैलं गत्वा तपसा श्री देवदेवं पिनाकिनं च परितोषयामास । अथोपहारेण विधिना पाण्डवः शुभशंसिनि मुहूर्ते मणिभद्रादिसमेतं श्री गुह्यकाधीशं संपूज्य धौम्येन च पुरोधसा वन्हौ संतर्पिते श्री मरुत्तनिहितं निधिं लेभे । तत्र विविधानि पृथुप्रमाणरूपाणि कांचनभाण्डसहस्राणि रत्नभारशतादीनिचासन् । एवं ते तान्यपरिमितधनानि गजहयोष्ट्रशकटानां दशलक्षाणि हस्तिनापुरमनयन् । किम्बहुना । तदा पुरुषगोमहिषखराजादीना भूरिकांचनं च वहतां संख्याऽपि न बभूव । एवमक्षय्यं कोशमादाय स्वपुरं प्राप्ते नृपे वृष्णिवृन्दसमेतो मधुसूदनोऽपि तत्र समाययौ । एतस्मिन्नेव समये सौभद्रमहिषी द्रौण्यस्त्रनिर्दग्धं गतजीवितं सुतमसूत । पूर्वं तु सर्वत्रोत्सवध्वनिरेवाऽभवत् । परंतु तं व्यसुं दृष्ट्वा श्रुत्वा च मंगलाचारस्तत्रत्यः करुणाक्रन्दनेन सत्वरं तिरोहितो बभूव । अत्रान्तरे बालप्रबालकलिकाकोमलावयवे शिशौ निर्जीविते जाते जननीजनः शोकान्मुमोह । ततः कुंती सुभद्रा च द्रुतमेव करुणानिधिं समेत्य वाष्पसंदिग्धया गिरा रुक्मिणीरमणमवादिष्टाम् । शरण्य ! तेऽद्य स्वस्रेययशोमूर्तिबालकाभिमन्योर्गतजीवितस्तनयोऽयं जातः । निशम्यैतदद्भुतभावनो भगवान् कृष्णः कलशभूषितं रत्नदीप्तांशुकपिशं वन्हिमन्त्रवैद्यशास्त्राम्बराचितं

च सूतिकासदनं विवेश । अथोत्तरा शीतवारिभिरुक्षिता संज्ञामवाप्य तं शिशुमंके निधाय च हरेः पुरो विललाप । ततो दयासागरो जनार्दनः पीयूषवर्षिण्या दृशा शनकैस्तं शिशुं विलोक्य प्रोवाच । यदि धर्मसत्यद्विजेभ्योऽन्यत् प्रियं मम नास्ति । तर्हि तु सत्येन तेन बालोऽयमस्त्रमुक्तः सपदि जीवतु । माधवेनेत्यभिहिते सूर्यांशुभिः स्पृष्टोऽम्बुजकोरक इव स शिशुर्लब्धजीवो बभूव । ततः सहसा विपुले नगरोत्सवे प्रवृत्ते नभश्चराणामपि साधुसाध्विति निःस्वनोऽभवत् ।एवं परिक्षीणे कुरुकुले यस्मादयमर्भको जातस्तस्मात् परीक्षिन्नाम्ना यं लोके प्रथितो भवत्विति केशवो जगाद । अथ व्यासानुमतो राजा महानिधिमवाप्य विधानेन कृष्णशारं तुरंगमं स्वयं श्री गाण्डीवधन्वना रक्षितं समुत्ससर्ज । अथ चैत्रशुक्लान्ते भूपो हेममालाधरो दण्डी मुंडः कृष्णाजिनावृतश्च बभूव । ततस्त्रिगर्त विषयं प्राप्ते तुरंगमे राजपुत्रैः सह किरीटिनस्तुमुलयुद्धमभूत् । ततोऽर्जुनो "न हन्तव्या नृपा इति" राजाज्ञां स्मृत्वा तान्नाऽवधीत् । केवलं तु विजिग्ये । ततो धनंजयो युधि भगदत्तात्मजं वज्रदत्तं त्रिभिर्दिनैर्जित्वा क्रूरयोधिभिः सैन्धवैः सहापि युद्धमकरोत् । अत्रान्तरे दुःशला जयद्रथपौत्रसमेताऽर्जुनमासाद्य वाष्पगद्गदगिरा संबभाषे । भ्रातः ! समायाते त्वयि त्वन्नाम निशम्यैव मम पुत्रो जायद्रथिः स्फुटिताशयः पंचतां यातः । वीर ! तत्सुतोऽयं मम पौत्रस्तवापि स्वस्रेयतनयोऽस्ति । सोऽयं सर्वभावेन त्वया रक्षय इत्युक्त्वा धृतराष्ट्रजा रुरोद । निशम्यैवं भागिनीवचनं वाष्पार्द्रलोचनोऽर्जुनस्तां समाश्वास्य निजां क्षत्रियजातिंनिन्दन् हयमनुससार । ततोऽश्वगोप्तारं श्वेताश्वं मणिपूरपुरं समायातं च समाकर्ण्य तत्पुत्रो बभ्रुवाहनः प्रत्युद्ययौ । एवं पूजामादाय विनयावनतं पुरः स्थितं च सुतं दृष्ट्वा पांडवो युद्धार्थी तं नाभ्यनन्दत् । किंबहुना । मां सायुधं ससैन्यं चाऽवलोक्य साम्ना कथं प्रत्युद्यतोऽसि । अक्षात्रियं भीरुं च त्वान्धिक् । इति धनंजयस्तं प्रोवाच । अत्रान्तरे महीं भित्वा समुत्थिता नागाङ्गना भर्तुरग्रे बभ्रुवाहनमुवाद । वत्स ! सुभटप्रियोऽयं तव पिता युद्धेन संतुष्यति । यतोऽभिमानवतां शौर्यश्रीर्वीरसंतानफलाऽभिहितेति तयोक्तः स बद्धपरिकरो धन्वी हेमहरिध्वजं रथं च समारुह्य पित्रा सह योद्धुमारभत । ततस्तच्छरशतैर्विद्धोऽर्जुनः श्रान्तिमवाप्य तस्य महापराक्रमं रणे भूयोभूयः प्रशशंस । तस्मिन्नवसरेऽर्जुनो यान् यान् बाणान् प्राक्षिपत् । चित्रांगदासुतस्तांस्तान् प्राप्तानेव चिच्छेद । अथार्जुनः पुत्ररथमुन्ममाथ । विलोक्यैवं बभ्रुवाहनो धरातलस्थोऽपि वज्रेण श्वेताश्वं जघान । एवमवध्येऽर्जुने पुत्रेण निहते गगने हाहेति त्रिदिवौकसान्नादो बभूव । ततः पार्थसूनुः शक्रकेतुमिव क्षितौ पतितं तातं दृष्ट्वाऽऽत्मानं निन्दन् शरासनं परित्यज्य च मुमोह । अत्रान्तरे समायाता

चित्रांगदा पुत्रेण निहतं पतिं विलोक्य शोकसंतप्ता भृशं विललाप । अहोवत ! चिराज्जायाया अपि मन्दिरमवाप्य आर्यपुत्र ! बलीयसः पुत्रात् त्वयेदृशमातिथ्यं प्राप्तम् ? अहोनु ! हतभाग्याऽहमद्य चिरविप्रोषितं नयनानंदं च पतिं त्वां समभ्येत्य क्षितौ निहतं पश्यामि । एवमभिधाय वाष्पगद्गदा सोलूपी धरातले न्यपतत् । ततो लब्धसंज्ञो बभ्रुवाहनः पितरौ धराशायिनौ विलोक्य किल्बिषकूणितो देहत्यागनिश्चयं चक्रे । ततो नागसुता मनसा संजीवनं मणिं सस्मार । स च तया सत्या ध्यातो नागलोकात् सत्वरं समाययौ । सोऽथ तेन हृदये स्पृष्टः श्री फल्गुणो जीवितं समवाप्य समुत्तस्थौ । चित्रांगदाऽपि सहसा शोकं परित्यज्य ह्रियावनता बभूव । ततो भुजगात्मजा सुप्तोत्थितमिव धैर्यजलधिं पार्थं जगाद । प्रियतम ! पुरा वसुभिर्भीष्मवधादेष ते शापो दत्तोऽन्यथा तु निर्जितधूर्जटिं त्वां रणे जेतुं कः शक्तः ? ततो मयि वात्सल्यात्ते वसवो मत्पित्रा शापिता महाप्रभरत्नमेतत् त्वच्छापनिर्वाणमित्यूचुः । निशम्यैतद्विस्मितपार्थो नागीं चित्रांगदां परिसान्त्व्य प्रीत्या तनयार्पितां पूजां जग्राह । अथ पाण्डवो दयितपुत्रं समामंत्र्य हयानुसारी समुद्रमेखलाभिलां बभ्राम । सोऽथ मगधेशं जरासंधात्मजं जित्वा वंगपुण्ड्रकिरातगांधारदाक्षिणात्यान् राजपुत्रान् युष्माभिः सर्वैरेव युधिष्ठिराश्वमेधेऽवश्यमागंतव्यमिति समादिदेश । ततः प्रतिनिवृत्तेन तुरगेण सहार्जुनो दिग्विजयं लब्ध्वा पुरवासिभिश्च संपूजितो हस्तिनापुरं विवेश ।

ततःकनकवर्षिणो राज्ञो मुनिजनाकीर्णे यज्ञे विधिवत् प्रवृत्तेऽखिलराजसु च प्राप्तेषु जनन्या सह श्रीवभ्रुवाहनभूपालोऽपि तत्र समाययौ । ततः पाण्डवैः सम्पूजितेषु तेषु महामान्येषु निःशेषकल्मषप्लोषदिव्यदीक्षाकृतक्षणः श्रीसत्यवतीसुतः स्वयं मखक्रियामहीनां विदधे । तत्रेष्टकाचयनं पुरस्कृत्य यूपभाण्डघनस्थालीपर्यंकगृहतोरणादिकं च सर्वं हैममेवाऽभवत् । यज्ञकर्मान्तरेषु देवर्षिसिद्धगन्धर्वकिन्नरा मंगलं जगुरप्सरोगणाश्च ननृतुः । ततः पशुसंघे शमिते ब्राह्मणाः पार्षतीमुपसंरोध्य यथाशास्त्रं तुरगमालभन्त । अथ याजकास्ते तत्र वाजिनो वपामुद्धृत्य श्रपयित्वा च शुभधूमं पाण्डवेभ्यो निवेदयामासुः । ततः सम्राट् पूर्णविधिना व्यासाय चतुः समुद्ररशनां पृथिवीं दक्षिणां ददौ । अथ तद्वचसा सार्वभौमो युधिष्ठिरो ब्राह्मणेभ्यो हेमकोटीनां कोटिं दत्वा विनिमयेन तदर्पितां पृथ्वीं पुनर्जग्राह । ततो नरेन्द्रेण मानार्हेषु राजसु पूजयित्वा विसृष्टेषु कोऽप्यपूर्वो ब्रह्मसंघमहोत्सवोऽभवत् । तत्र मधुक्षीरसर्पिषां वाहिन्योऽवहन् । भक्ष्या मोदकराशयश्च कुलशैलाभा बभुः । एवं भूभुजा द्विजेभ्यो हेमरत्नेषु दीयमानेषु दशापि दिशो महेन्द्रायुधैरिव व्याप्ताश्चकाशिरे । तस्मिन्नवसरे तत्र सविदुरो धृतराष्ट्रः ससंजयाः सुबलात्मजाश्च दैवतवत्पूज्यमानाः सुखेन तस्थुः ।

अत्रान्तरे हेमाविचित्रपार्श्वो नकुलो विलान्निर्गत्य द्रुतगत्या श्रीयज्ञभूमिमाजगाम । सोऽथ मनुष्यगिरा महत्कौतुकं जनयन्प्राह । अहोनु ! महामखोऽयं सक्तुप्रस्थेनाऽपि तुल्यो नास्ति । नूनं कृशोऽपि दानकणः शुद्धिसम्पन्नो नृणां प्रथते । किम्बहुना । बहुद्रविणाडम्बरो यज्ञमहोत्सवोऽयं मुधैवेतिब्रुवाणः सविस्मयैर्विप्रैःपृष्टोऽसौ प्रोवाच । द्विजाः ! सक्तुप्रस्थस्य माहात्म्यं श्रूयताम् । पुरा कुरुक्षेत्रे शिलोञ्छवृत्तिर्विशुद्धसत्वद्रविणः कृशो बहुकुटुम्बकश्च द्विजो बभूव । सोऽथ कदाचिद् दुर्भिक्षे क्षीणवृत्तिः कृच्छ्रात् क्षेत्रशतं भ्रान्त्वा चिरेण सक्तुप्रस्थं लेभे । ततः स वैश्वदेवविधिना गृहेऽत्यावश्यकं कर्म कृत्वा कलत्रसहितो भोक्तुं प्रस्थितोऽकस्मादायान्तमर्थिनमपश्यत् । सोऽथ क्षुत्परीतो विप्रः क्षुधाक्रान्तं तमतिथिं विलोक्य संतोषविशदाशयो भूत्वा च स्वमशनं तस्मै प्रादात् । ततस्तद्भुक्त्वाऽपि यदार्थिनः क्षुन्निवृत्तिर्नाभवत् । तदा तद्भार्या तत्सुतस्तथा तत्स्नुषाऽपि तस्मै स्वभोजनपत्रावलिं प्रायच्छत् । सोऽथ प्राघुणकः सर्वविभागभोजनेन तृप्तिमवाप्य प्रोवाच । मुनिराज ! धर्मोऽहं युष्माकं सत्वेन संतुष्टोऽस्मि । साम्प्रतं वो महासिद्धिरस्त्वित्युक्त्वाऽन्तर्हितोऽभवत् । ततस्ते सर्वेऽपि सशरीराः श्लाघ्यवृत्तिपुण्यप्रभावेण तरणिप्रभाणि विमानानि समारुह्य दिवं प्रापुः । अथाऽहं विलाश्रयः सक्तुगन्धेन समाहूतो यत्र सोऽतिथिर्भुक्तवान् तामुच्छिष्टभुवं संप्राप्तः । ततस्तत्र लुठनेन तत् पात्रसलिलस्पृष्टमेकमिदं मम पार्श्वं पुण्यैरिवाप्लुतं हेमरुचिरं जातम् । अतः परं कथं मे द्वितीयपार्श्वं हैमं भवेदिति चिन्तापरोऽहं चिरमतिष्ठम् । परमद्य नाम श्रुत्वा वसुधाधिपमवाप्तवानस्मि । किम्बहुना । द्विजलक्षसहस्राणामपि भोजनभूमिमिमां संप्राप्य भ्रान्तस्यापि मे तनौ कान्तलवोऽपि नाऽभवत् । तस्मात् क्रतुरयं सक्तुप्रस्थस्याऽपि समतां नार्हतीत्युक्त्वा चित्रकान्तिर्नकुलोऽदर्शनं प्रायात् । राजन् ! एवं यज्ञसहस्रेभ्योऽपि भावशुद्धता श्रेयसी कथिता । मनोनैर्मल्यमेवपरब्रह्माभिधीयते । पुरा द्वादशाब्दिकेऽगस्त्यसत्रे विप्राः परस्परं भाविनीं घोरामनावृष्टिं शशंसुः । निशम्यैवं महामतिः कलशोद्भवो द्रव्ययज्ञं परित्यज्य स्तब्धमनसा ध्यानयज्ञं चकार । संपूर्णेऽवधौ स एव वसुसम्पन्नः क्रतुर्बभूव । येनेन्द्रो वर्षित्वा सस्यशालिनीं धरां विदधे । यद्यपि सत्व विशुद्धस्य युधिष्ठिरस्य सक्रतुर्विधियुतोऽभवत् । तथापि भग्नमनोरथो नकुलस्तत्र विमाननां चक्रे । पुरा जमदग्निं जिज्ञासुः स्वयं क्रोधः श्वविग्रहं धृत्वा हि पिठिरधृतं पयः श्राद्धकाले जिह्वया पस्पर्श । ज्ञानलोचनोमुनिस्तं क्रोधोऽयमितिविज्ञाय न शशाप । ततो भीतः क्रोधोऽतिशयेन कम्पाकुलो बभूव । ततस्ते पितरो येषां च श्राद्धे पयोधृतमासीत् । कोपं कृत्वा तं शेपुर्येन स क्रोधो नकुलतां जगाम । श्रीमति यौधिष्ठिरे क्रतावव

मानकथां कृत्वा शापत्रयमवाप्स्यसीति तैरेवाऽवधिः कृतः। एवं सकलनरेन्द्रवन्द्यस्य भूपस्य यज्ञसंभारमूलश्चरिततरु र्द्विजजनपरिपुष्टः श्रीसत्वपुष्पप्रकारः शुभफलानिचयाढ्यः सत्यशाखश्च विरेजे।

इति श्रीगद्यभारते आश्वमेधिकं पर्व समाप्तम्



॥ ओन्नमः शिवाय ॥

# अथाश्रमवासिकं पर्व समारभ्यते ॥

:-०-:

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥

अथ युधिष्ठिरे एकच्छत्रां महीं प्रशासति न क्वाऽपि दुःखितो याचकश्चाऽप्यदृश्यत । एवं धर्मवीरस्य तस्य यशसा जगत्त्रये व्याप्ते श्रीराघवादिकथाबंधेष्वपि जनो मंदादरो बभूव। सविदुरो धृतराष्ट्रस्तथा श्रीमती पतिव्रतागान्धारी प्रतिमां विना तस्य सततं दैवतवत्पूज्या बभूवुः । किम्बहुना । षड्रसवैचित्र्यवेशवारविधायिनस्तस्य धृतराष्ट्रस्य भोजने स स्वयमेव सूदानैक्षत । अथ पाण्डवाः कुरुवृद्धस्य तस्य सर्वदैव मानमर्यादा रक्षन्ति स्म । अथैकदाऽम्बिकासुतः सर्वमेव राजार्हं भोजनं भुंक्त इति गूढं विज्ञाय स तु फलभोजनोऽभवत् । एवं व्रतवतो जापिनः क्षितिशायिनः सपत्नीकस्य च तस्य वैराग्यं युधिष्ठिरो न बुबुधे । एवं मिथो निवसतां प्रणयशालिनां च तेषां प्रवाहिनि काले पंचदश समा व्यतीयुः । अथैकदा भीमः कौरवदुर्णयान् संस्मृत्य तद्वधकथां बहुशब्दं च चकार । तच्छ्रुत्वा जितक्रोधो धृतराष्ट्रः सर्वमश्रुतवद्विधाय पत्न्या संमन्त्र्य च सन्यासलालसो बभूव । ततो निर्वेदातिशयाच्छमकामस्य तस्य मनो वैराग्याभरणमभूत् । वियोगदग्धानामवमानविषाशिनां च सर्वत्यागोऽमृतनिर्झर इव सुखायैव भवति । एवं निश्चित्य वनवाससमुत्सुकः स युधिष्ठिरं समुपेत्य सुधोपमं प्रियवचनं जगाद । वर्णाश्रमगुरो-पार्थ ! वृद्धोचितां दशां लब्धुं मामनुजानीहि । एषोऽहं तपोवनं गच्छामि । वत्स ! इयं भवसुखास्वादरतिः संसारासक्तचेतसां नृणामजीर्णतृष्णेव क्रमशो विवर्द्धते । धर्मनंदन ! पुण्यगंधेन वपुषा मां स्पृश । ते स्वस्त्यस्तु । सदा पुत्रवत् प्रजाः पाहि । नित्यं कोशदुर्गबलादाने श्रेष्ठोपायान् कुर्वीथाः । गूढमंत्रो भव । यतो नृपश्रियो मंत्राधीना एव भवंतीति समादिश्य कम्पमानतनुः कौरवेश्वरो गमनोत्सुको बभूव । एवं धृतराष्ट्र

वचनं समाकर्ण्य रचितांजली राजा गद्-गद् गिरा प्रोवाच । तात ! मामुत्सृज्य कथं नाम काननं गंतुमिच्छसि ? देव ! नाऽहमिह त्वत्पादसेवा संतोषं त्यक्तुमुत्सहे । यतो वीतरागस्य ते गृहेष्वेव तपोवनमस्ति । एवं राज्ञा पुनः पुनः प्रार्थितोऽपि कुरुराजो यदा न बुबुधे । तदा सत्यवतीसूनुस्तत्र स्वयमुपाययौ । सोऽथ ज्ञानलोचनोमुनिः भूपमुपदिदेश । राजन् ! मोहं त्यक्त्वाऽनुजानीहि । एषोऽधुना तपोवनं यातु । धर्मराज ! कुलश्रुतबुद्धिविवेकत्रयसामन्ते वैराग्यमेव परमफलमस्तीति तत्वज्ञा सदा व्याहरंति । केशेषु जराशुभ्रेषु विषयादरे प्रशान्ते च शरीरिणां तपोवनात्परं भूषणं नाऽहं मन्ये । एवमुपदिश्याऽन्तर्हिते व्यासे विषण्णेन राज्ञा कृच्छ्रादिव तथेत्युक्तः कौरवेश्वरो जहर्ष । सोऽथ भीष्ममुख्यानां विधिवच्छ्राद्धं कृत्वा ब्राह्मणेभ्यो महार्हं विपुलं च दानं प्रादात् । एवमालोक्य चत्वारः पाण्डुनंदनास्तु विघ्नं नो चक्रिरे । परंतु क्रोधताम्राक्षो भीमसेन एव धनंजयमभाषत । भ्रातः ! पुरा यैरस्मासु बहुच्छलं घोरं च किल्विषं कृतं तेषां श्राद्धे वित्तव्ययमहं कथं सहे ? पापो दुर्योधनोऽनुजैः सह नरकं यातु । वयं तु शांतनुनंदने स्वयं श्राद्धं करिष्यामः । निशम्यैवं भीमवचनं धनंजयः प्रत्यवदत् । भ्रातः ! पुनरेवं त्वया कदापि नैव वाच्यम् । अत्रान्तरे गान्धारीसहितोऽम्बिकासुतो नागरिकान् समामंत्र्य संजयविदुरानुगश्च प्रतस्थे । ततो देवरानुगा कुंती साश्रुनयनैः पुत्रैः स्नुषाभिश्च भृशमभ्यर्थिताऽपि तपोवनरुचिन्न तत्याज । अथ धृतराष्ट्रो विदुरादिभिः सह कुन्तीं चापि नीत्वा राजर्षिजुष्टं तपोवनं विवेश । सोऽथ राजर्षिवर्यस्य शतयूपस्य संगतिमवाप्य जटावल्कलधारी च भूत्वा सुचिरं तपश्चक्रे । एवं तपः परायणं तं दृष्ट्वा मुनयोऽपि तं प्रशशंसुः ।

अथैकदा नारदाद्या देवर्षयः कृतकृत्यं कौरवेश्वरं दृष्ट्वा चकिता बभूवुः । ततो गतेषु तेषु भरतस्त्रीसमेतास्ते महारथाः पाण्डवा अपि परित्यक्तछत्रचामराः पादचारिणश्च चतुरंगं महाबलं काननोपान्ते निधाय तत्र समाययुः। ततस्ते संजयधृतराष्ट्राश्रममासाद्यमुनीन् पूजयामासुः । अथ ते स्नायुशेषाँस्तान्विलोक्य विषण्णा मूर्छां प्रययुः। ततो मातृप्रबोधितास्ते समुत्थाय संजयेन निवेदितं धृतराष्ट्रमुपसृत्य नम्राननास्तस्थुः । अथ युधिष्ठिरः कुरुवृद्धं तपोवृद्धिं पृष्ट्वा महात्मा विदुरः क्वाऽस्तीत्यपृच्छत् ? एतदाकर्ण्य राजाऽब्रवीत् । पुत्र ! वायुभक्षो दिगम्बरो विदुरः क्वाऽस्तीति न ज्ञायत इति धृतराष्ट्रेणोक्ते स्वेच्छाचारी बिल्वमात्रमुखो धूलिदिग्धांगश्च विदुरस्तत्र समाययौ । सोऽथ तत्र जनसमुदायं दृष्ट्वा सहसा पलायांचक्रे । ततः साश्रुनेत्रो युधिष्ठिरस्तमन्वधावत् । ततः क्वचिद् दृश्यः क्वचिदादृश्यो युधिष्ठिरेण संप्राप्तो विदुरस्तमनादरात्प्रोवाच । वीतरागाणां तृणे राज्ञि च

तुल्यताऽस्ति । सोऽथ ज्ञानदेहो वृक्षमूलमुपाश्रित्य युधिष्ठिरोऽस्मीति प्रोक्तस्तं वीक्ष्य मौनी निर्निमेषेक्षणः सहसा नेत्रप्राणेन्द्रियैस्तमेव विवेश । एवं निर्मोकवद् देहं त्यक्त्वा विदुरे प्रविष्टे राजा राजसं भावं परित्यज्य ज्ञाननिर्भरो बभूव । अथ ज्ञानसिद्धा व्योमचराः क्षत्तुः कलेवरं दग्धुमुद्यतं भूपं दृष्ट्वा सहसा तं न्यवारयन् । ततो राजा धृतराष्ट्रं समेत्य मातुरग्रे च सर्वां दुःखकथां निवेदयामास। तच्छ्रुत्वा सर्वे तत्रत्याश्चिन्तार्णवे निमग्ना बभूवुः। ततो धराशायी राजा तां क्षपां क्षपयित्वा प्रातरेव यथाकामं ब्राह्मणेभ्यो धनं प्रादात् । अथ राजर्षिभिः सहासीनं कुरुपुंगवं सत्यवतीसुतं च प्रणम्य किं कर्त्तव्यविमूढस्तूष्णीमतिष्ठत् । ततो द्वैपायनो युधिष्ठिरं संभाव्य प्रोवाच । राजन् ! मा विषीद । स यतिधर्मेण परमां सिद्धिमवाप । ततः क्षत्रवृद्धेन प्रार्थितः कुन्ती गान्धारीभ्यां च मुहुर्मुहुर्विज्ञापितो व्यासदेवः स्वर्गनदीजले कौरवैः सह सर्वानपि परलोकगतान् भूपान् कुरुस्त्रीणामदर्शयत् । अत्रान्तरे ताः साध्व्योऽपि स्वविग्रहान् परित्यज्य विमानैस्ताननुययुः । अथ धर्मात्मजः सप्तर्षिसेविते तस्मिन्वने मासं स्थित्वा कुरुवृद्धेन प्रेरितो राजधानीं प्रायात्। सोऽथ मुहुर्मुहुर् निःश्वसन्नथाश्व गजानीकैः सह महता कृच्छ्रेण अकाम इव पुरीं प्रविवेश । अथ न्यायेन पृथिवीं शासतो धर्मराजस्य बहुतिथे काले याति सुरमुनिर्नारदः समुपाययौ । ततो महीभुजा पूजितो धृतराष्ट्रकथां च पृष्टः सोऽब्रवीत् । राजन् ! स राजर्षि र्वृक्षमूले निवसन् पूर्वं तु वायुभक्षोऽभवत् । ततः परित्यक्तभोजनः कंदुकाकारवदनो दुर्लक्ष्यश्च बभूव । एवं वर्षमेकं कठिनं तपस्तप्त्वा वह्नीनपि परित्यज्य च मुनिरिव मुमुक्षुरभवत् । ततो महामतिः स ज्वलितं वनं दृष्ट्वा कुंतीगान्धारीभ्यां सहितः परं समाधिं विदधे । किम्बहुना । अव्याप्ताः स्वच्छा गलितवृत्तयः स्फुटब्रह्माण्डविवराश्च ते परमपदमासेदुः । राजन् ! एवं तेषां ज्ञानांकुरः सर्वसन्न्यासरूपं पल्लवं स मवाप्य स्वान्तः प्रकाशकुसुमैः प्रफुल्लितश्च ज्ञानपादपोऽफलत् । एवं दावाग्निना ते तु बन्धुवद् दग्धाः । किन्तु ब्रतक्षामः संजयस्तुहिनाचलं जगाम । एवं मुनिवचनमाकर्ण्य सानुजः सव्यासश्च युधिष्ठिरः शोककृशानुना व्याप्तः कुंतीं ससुतं कुरूद्वहं च पुनः पुनरशोचत् । ततो देवर्षौ प्रयाते राजा जलक्रियां कृत्वा तानेवोद्दिश्य ब्राह्मणेभ्यो विपुलं धनं प्रादात् । सोऽथ धैर्यं समालंब्य देहजं शोकमुत्सार्य संसारासारतां ध्यात्वा च विवेकशरणो बभूव । संसारेऽस्मिन् विवेकी भोगान् क्षणनश्वरान् ज्ञात्वा न मुह्यति । ज्ञात्वैवं महाजना ज्ञानामृतं पीत्वाऽजरा अमराश्च भवंति । संसारेऽस्मिन् हरिभक्तः सप्तपूर्वजान् सप्तावरजांश्चतारयति ।

इति श्रीगद्यभारते आश्रमवासिकं पर्व समाप्तम् ॥

॥ ओन्नमःशिवाय ॥

# अथ गद्यभारते मौसलंपर्व प्रारभ्यते

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥

अथ भूपमणौ धर्मराजे पृथिवीं प्रशासति षड्विंशेऽब्दे महाभागा मुनयो द्वारकां जग्मुः। ततो मदोद्धता यादवास्तान् कौशिकमुखान् दृष्ट्वा साम्बं वधूवेशं कृत्वा च पप्रच्छुः । मुनीश्वराः ! अपि पुत्रः सुता वास्या भविष्यति ? तच्छ्रुत्वा तेऽवदन्। रे कुटिलमतयः ! अस्या ब्रह्मदण्डाख्यं मुसलं कुलान्ताय भविष्यतीत्याभिधायाऽदर्शनं ययुः । ततः साम्बो वज्रसंहतं लौहं मुसलमसूत । सोऽथ भयात् पिष्ट्वा तूर्णं सागरे तत्याज । अथ ज्ञातवृत्तो यदुपातिरुपस्थितं वृष्णिक्षयं विज्ञाय तीर्थयात्रार्थं प्रतस्थे । अत्रान्तरे चक्रं रथो ध्वजश्च सहसाऽन्तरधीयत । ततः कबंधावृतमंडले सूर्ये निवर्तिताशेष दिक्तटे वायौ च वाते भूकंपादयो नानोत्पाता द्वारावत्यां भवितुमारब्धाः । राजमार्गो गृध्रगोमायुशब्देन पूरितोऽभवत् । पशूनां विपरीता प्रसूतिरासीत् । एवमालोक्य यादववृष्णयो यत्र प्रभासे श्रीकृष्णचन्द्रोऽगमत् । तत्रैव तेऽपि गत्वा विपुलोत्सवं चक्रिरे । केचिद् विचित्रोद्यानेषु सुखं विजह्रुः । अन्ये कालचक्षुषाऽऽकलितागीतनृत्यवाद्यरसासक्ताश्च बभूवुः । अत्रान्तरे आपानकेलिसंसक्ते वृष्णिकुले शैनेयकृतवर्मणोर्युद्धसंबंधिविवादोऽभवत् । तत्र सात्यकि र्हार्दिक्यमाह । त्वं सुप्तं हतवानतः सौप्तिकोऽसि । तच्छ्रुत्वा सोऽब्रवीत् । त्वयाऽपि तु प्रायगतो भूरिश्रवा हतः । राजन् ! एवं मिथो विवदमानयोस् तयोर् दंडादण्डि केशाकेशि शस्त्राशस्त्रि च युद्धमभूत् । किम्बहुना । तद्वज्रमुसलात् प्रजातो यो बल्लरीचयः स तृण-कल्पोऽपि तदा ब्रह्मदण्डोपमो बभूव । पूर्वं या पानभूमिस्तेषां ललनानयनोत्सवोऽभवत् । सैव पश्चान् मृत्योर्घोरसंहाराहारमण्डपोऽभूत् । ततो हरेः पश्यतः साम्बगदप्रद्युम्नानिरुद्ध शैनेयकृतवर्मादिषु हतेषु घोरो वृष्णिक्षयो बभूव । तस्मिन् समये क्षीणशेषा द्वारका छिन्नहाराश्रुनिर्भरैरिवरुरोद । ततो दुःखाकुलः शौरि र्हलधरं द्रष्टुमुत्कण्ठितोऽभवत् । ततः कृष्णो दस्युभ्यो योषितां रक्षा भवेदिति सव्यसाचिने निवेदयितुं दारुकं प्राहिणोत् । ततो जना-

र्दनो जनकमामंत्र्य रौहिणेयमुपागमत् । अत्रान्तरे तन्मुखान् निःसृत्य सहस्रशीर्षा श्वेतभुजगोऽर्णवं प्रविष्टः । वरुणदेवस्तं च पुनः पुनः प्राणमत् । एवमालोक्य सर्वज्ञो मधुसूदनो न शुशोच । अभावसद्भावे भवेऽस्मिन् भावानां हि स्थिरता क्वास्ति ? एवमनंतधाम्नि मिलिते श्रीबलभद्रे योगीश्वरो देवकीनंदनोऽपि गहनं प्रविश्य निबद्धप्राणधारणः सुष्वाप । अत्रान्तरे स्वज्योतिषि संसक्तं तं मृगशंकया लुब्धको निशिताग्रेण शरेण चरणोदरे जघान । एवं कृष्णशारधिया व्याधेन वाणहतः कृष्णो नारायणाख्यं सनातनं परं धाम विवेश । प्रकारेणानेन गोविन्दे विष्णुं प्रविष्टे जगत्सर्वं क्षुभितं बभूव । अत्रान्तरे दारुकेन यादवक्षये कथिते पाण्डवाः परमशोकत्रासदैन्यान्यन्वभूवन् । ततः शोकविह्वलोऽर्जुनो युधिष्ठिरगिरा दारुकेनैव सहितो द्वारकां जगाम । सोऽथ पद्मरहितां पद्मिनीव किं वा वृष्णिसिंहै र्विरहितां हैमवतीं गुहामिव तां पुरीं विलोक्य शोकार्तं वसुदेवं द्रष्टुं विवेश । सोऽथ तत्र षोडशस्त्रीसहस्राणि कमलापतिकलत्रं भयविह्वलं विलोक्य सहसैव मुमोह । ततो लब्धसंज्ञः पार्थो भूशायिनं मुहुर्मुहु प्रलापिनं च वसुदेवं वीक्ष्य शोकविवशो वज्रभिन्न इव न्यपतत् । हा क्व रामः ? क्व गोविन्दः ? क्व प्रद्युम्नः ? क्व च सात्यकिः नूनं विधिचेष्टितं दुरन्तमिति पार्थोऽब्रवीत् । अहो ! यत्र मणिकंकणझांकारिनृत्यगीतघनध्वनिरविश्रान्त मभूत् । तत्रैव वृष्णिनारीणां करुणाक्रन्दनं शृण्वन् बीभत्सुर्निशां निनाय । ततः प्रभाते प्रियसुतः श्रीवसुदेवो देवकीमुख्यै र्वधूजनैरनुयातः प्रियां तनुं तत्याज । ततः शोकग्रस्तोऽर्जुनः सर्वेषां सात्वतमुख्यानां शरीरं संस्कृत्य सलिलक्रियां चकार । अथाऽन्येद्युः श्रीकृष्णपौत्रं वज्रं पुरस्कृत्य दारुकानुमत्या पार्थो वृष्णिकान्तावृन्दसहितः प्रतस्थे । अत्रान्तरे स्फारतरंगभुजमण्डलैः शंकाट्टहासविकटो मकराकरो द्वारवतीं जहार । एवं रत्नलोभादिव जलधिना क्षिप्रं श्रीवृष्णिपुरे हृते दुःखितोऽर्जुनः सर्वं पुरुषानुगतमित्यूचे । ततोऽर्जुनो वृष्णिसिंहानां कलत्रमादायेन्द्रप्रस्थं व्रजन् मार्गे दुर्गमां विकटाटवीं प्राप । तत्र बलोद्धता दस्युगोपालपशुजीविनोऽदृष्टपूर्वाः स्वर्योषितसुभगास् तडित्तरलरत्नांशुपुंजपिंजरिताम्बरांश्च सात्वतांगना विलोक्य लोभवशगा बलाद्धर्तुमभ्युद्ययुः । एवमुग्रलगुडायुधाँस् तान् गोपानापतितान् दृष्ट्वा स व्यसाची क्रुधा गाण्डीवमधिज्यमकरोत् । अथ क्षपितद्विषोऽपि तस्य कालशक्तिहतस्य ज्याविकर्षणे काचिच्छक्तिर्नाभवत् । किम्बहुना । वृद्धदरिद्रस्य तरुणी रूपवती वधूरिव सा चापयष्टिस्तस्याति कष्टप्रदा बभूव । ततस्ते सशरा दिव्यास्त्रगणास्तं सर्वे निर्धनमित्रं धूर्ता इव क्वापि त्यक्त्वा जग्मुः । एवमालोक्य निर्विवेका वनेचरा पश्यतः पार्थस्य

ता वृष्णिपौरांगना विजह्रुः । तस्मिन्नवसरे तेषां प्रधाननारीषु प्रगल्भता नासीत् । यतोऽनर्हस्य नीचस्य महार्हेष्वोजस्विता कथम् ? ततस्तैः प्रसह्य हृते स्त्रैणे भग्नमानो धनंजयो निजदोर्दण्डे सासूया दृशः पातयन् प्रतस्थे । अहो ! संसारेऽस्मिन्ननित्यता देवी बलवती विद्यते । यां सर्वे भावाः प्रत्यहं प्रणमंति । खाण्डवे येनाखण्डल प्रभृतयः खंडिताः । कैराते च समरे येन त्रिपुराराति: संतोषितस्तं कृष्णमित्रं रणे गोपाला जित्वा यदुनाथकलत्राणि जह्रुस्तां कालचेष्टां पुन पुनर्धिक् । ततो वज्रसहितः फल्गुणो रेवतीरुक्मिणीसत्यभामाजाम्बवतीमित्रविन्दाप्रभृतियदुयोषितो नीत्वाऽऽत्मानं मुहुर्मुहु र्निन्दन्निन्द्रप्रस्थं प्राविशत् । अथ धनंजये याते तत्रैव तं पौत्रं वज्रं राज्ये निधाय सत्यभामानुगा देव्यः शुचा पावकं विविशुः । अत्रान्तरे यदृच्छया समायातं व्यासं विलोक्य किरीटी प्रणामपूर्वकं सर्ववृत्तं व्यजिज्ञपत् । तच्छ्रुत्वा सोऽब्रवीत् । वत्स ! समाश्वासिहि समाश्वासिहि । लोकेऽस्मिन् सर्वे निचयाः क्षयान्ताः समुच्छ्रयाः पतनांताः संयोगा विप्रयोगान्ता जीवितं च मरणान्तं निगद्यते । अर्थान् पादरजोपमान् गणय । यौवनं गिरिनदीवेगोपमं जानीहि । आयुष्यं जललोलविन्दुचपलं बुध्यस्व । जीवितं च फेनोपमं विद्धि । रोगभयं भोगे च्युतिभयं कुले नृपालाद्भयं वित्ते दैन्यभयं माने रिपुभयं बले जराभयं रूपे वादभयं शास्त्रे खलभयं गुणे कृतान्तभयं च काये गणय । किम्बहुना । जगति सर्वं वस्तु भयान्वितमस्ति । केवलं वैराग्यमेवाभयं विद्यते । मतिशक्तिविभूतिगुणभोगप्रभावाः कालकलया सर्वथा स्मृतिशेषतान्नीयते । धीर ! यदि भवस्थितिरवसानविरसा न स्यात् । तदा तु सर्वपरित्यागे मुनयो ध्रुवं मतिं न कुर्युरित्युक्तो मुनिना पार्थो मनसा हरिं ध्यायन् हस्तिनापुरं प्रययौ ।

इति श्रीगद्यभारते मौसलंपर्व समाप्तम् ।



।। ओंनमः शिवाय ।।

# अथ गद्यभारते महाप्रस्थानिकंपर्व प्रारभ्यते

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ।।

अथ धर्मसूनुरर्जुनाद् वृष्णिक्षयं श्रुत्वा निःश्वस्य च नमो बलवते कालायेत्यभाषत । ततो गुणाढ्याय युयुत्सवे दौर्योधनं राज्यं दत्वा निजराज्येऽभिमन्युजं परीक्षितं स्थापयामास । सोऽथ सुभद्रां तत्पालने समादिदेश । ततः प्रकृतिभ्यो द्विजेभ्य श्च तं विनिक्षिप्य बंधूनां यथाविधि श्राद्धं चकार । अथ पुण्यां नैष्ठिकीं विधिं समाप्य सलिलेऽग्नीनुत्ससर्ज । ततो दुःखितपौरान् समाश्वास्य भगवतीं वसुन्धरां समामंत्र्य च सानुजो द्रौपदीसखो युधिष्ठिरोऽरण्यं प्रतस्थे । अत्रान्तरे भगवान् हुताशनः स्वयं समेत्य पार्थाद् गाण्डीवं तावच्चाप्यौ महेषुधी च जग्राह । तस्मिन्नवसरे यत्नतो वार्यमाणोऽप्येकः श्वाताननुययौ । ततस्ते शनकैर्दक्षिणपश्चिमान्दिशं प्राप्य तत्र श्री द्वारावतीं जलधिमग्नां विलोक्य भूप्रदक्षिणं कृत्वाचोदीचीं दिशं प्रययुः । ततस्ते हिमाचलमतिक्रम्य वालुकार्णवं संप्राप्य महोन्नतशृंगालिंगितनंदनं च सुमेरुं ददृशुः । अथ तस्मिन् दुस्तरेऽध्वनि शिरीषपेलवतनुर्द्रुपदात्मजा सहसा पपात । एवमालोक्य भीमसेनो युधिष्ठिरं प्राह । राजन् ! इयं पांचालराजसुता भुवि निपतिता । चिन्तयन्नपि नाहमस्याः किमपि कल्मषं पश्यामि । पुनः कथमेषा तपोयोगं त्यक्त्वा पंचत्वमगमत् ? निशम्यैवमनाधृत्तमुखो युधिष्ठिरोऽवदत् । वत्स ! सर्वदैवास्याः पार्थेऽधिकपक्षपातोऽभवत् । अत्रान्तरे सहदेवो भुवि न्यपतत् । ततो भीमेन पृष्टो नृपोऽब्रवीत् । एष प्रज्ञाभिमानेनाऽखिलं जगज्जडवदमन्यतेति धर्मसुतेनोक्ते नकुलः क्षितावपप्तत् । अथ भीमेन पृष्टो राजाऽब्रवीत् । एष रूपमानी स्मरेण सहापि पस्पर्द्धे । तस्मिन्नेवावसरे धनंजयो निपपात । ततो भीमेन पृष्टो राजा जगाद । एष शूरमानी समराङ्गणे शिथिलं चचारेत्यभिधायाग्रे जगाम । अथ निपतितो भीमो राजन् ! पतितोऽस्मीति तमुवाच । तच्छ्रुत्वा सोऽब्रवीत् । भीम ! बह्वशने तेऽति दर्पोऽभवत् । ततो ब्रजन् राजा शुनानुगतस्तत्रैक एवाऽभूत् । अत्रा-

न्तरे रथारूढो देवराजस्तत्रागत्य प्रोवाच। राजन्! मत्पुरमेहीति शक्रेणोक्ते स जगाद। देवराज! शुना विरहितोऽहं सशरीरः स्वर्गं न कामये। निशम्यैवं सुरपतिरब्रवीत्। राजन्! त्वमपि चिन्तय शुनां गतिः क्वास्ति? पूर्वं तु श्वा मांसाहारी ततोऽमेध्यमपि भक्षयति। श्वा धिष्ण्यमारोहत्विति त्वदन्यः कोऽनुभाषते? तच्छ्रुत्वा राजोवाच। महाभाग! कथमहं भक्तत्यागं सहे? यः स्वामी सेवकं पतिः पत्नीं गुरुश्च शिष्यं विनैव कारणं त्यजति। स कदापि सुखन्न लभते। देवराज! कुक्कुर सदृशः स्वामिभक्तो जगति दुर्लभः। यो दिवा स्वपिति। रात्रौ च जागर्ति। पुनः पुनस्तिरस्कृतोऽपि स्वामिगृहं न जहाति। ग्रासचतुष्टयेनाऽपि संतुष्यति। किम्बहुना। गृहरक्षां कुर्वन् चौरादिभिराहतो जीवितं तु विसर्जति परं स्वामिकार्यं न नाशयति। भक्तविद्वेषिणो नृशंसस्य स्वर्गे गतिः कथंभवितुमर्हति? सुरेश्वर! यदि मम किंचिदपि सुकृत मस्ति। तदा तु सदेहोऽयं श्वा स्वर्गं यातु। अहमेनं कदापि त्यक्तु न्नोत्सहे। महात्मानः स्त्रीवधसदृशं ब्रह्मस्वहरणतुल्यं च भक्तत्यागं गणयंतीति धर्मराजेनोक्ते धर्मः श्वविग्रहं त्यक्त्वा तमूचे। पुत्र! तवाऽमुना सद्वृत्तेन तुष्टोऽस्मि। पुरा द्वैतवनेऽपि मया पाथसो हेतोस्त्वं दृष्टोऽसि। भूपाल! ते स्वस्त्यस्तु। साम्प्रतं त्वं सशरीरो दिवं व्रज। निशम्यैवं धर्मराजादेशं युधिष्ठिरो विपुलप्रभं विमानं समारुह्य पुण्यसोपानं सुरमंदिरं विवेश। सोऽथ तत्र देवर्षिनारदादिभिश्च सार्धं देववृन्दैः संपूज्यमानो राजर्षितारकामध्येंऽशुमानिव रराज। ततः स देवराजमब्रवीत्। महानुभाव! यत्र मे श्यामासहिता भ्रातरस्तिष्ठंति। तत्रैव ममापि वासो भवतु। तच्छ्रुत्वा सहस्राक्षः प्रत्यवदत्। राजन्! त्वं मानुषं भावं मा गमः। किम्बहुना। राजर्षिभिरनासाद्यामुत्तमां गतिं संप्राप्तोऽसि। निशम्यैवं धर्मसूनुर्वज्रिणाऽसकृदभिहितोऽपि भ्रातॄनेवाप्तुमिच्छामीति मुहुर्मुहुरभाषत। ततो महेन्द्रस्तं नन्दनवनमण्डितं सुरपुरं निनाय।

इति श्रीगद्यभारते महाप्रस्थानिकंपर्व समाप्तम्।



॥ ओंनमःशिवाय ॥

# अथ स्वर्गपर्व समारभ्यते ।

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥

ततो राजा युधिष्ठिरस्तत्र सानुजं आजिष्णुमुकुटाङ्गदं शक्रसंकाशं च कुरुराजं वीक्ष्य कोपं कृत्वा श्री देवराजमुवाच । महाभाग ! स्वस्ति देवेभ्यः । स्वर्गायाऽप्ययमं जलिरस्तु । यत्र पृथिवीक्षयकारणं पापो दुर्योधनो हैमसिंहासनस्थोऽस्ति । एष व्रजामि । ते नमोऽस्तु । यत्र मे शूरा भ्रातरो निवसंति । तत्रैव ममाधुना वासो भवत्विति ब्रुवाणस्य राज्ञो देवा मनोजवं दूतमाहूय भ्रातॄन्प्रति प्रयाहीति प्राहुः । ततो राजा सपदि देवदूतादिष्टेन वर्त्मना व्रजन् नाना नरकेषु रौरवकुंभीपाकादिषु पच्यमानान् पुरुषान् ददर्श । ततस्ते धृतिदारुण माक्रन्दं कुर्वन्तोऽब्रुवन् । राजन् ! क्षणमत्र तिष्ठ । इतश्च मा निवर्तस्व । शीतलैस्त्वत्पुण्य वातैः स्पृष्टानामास्माकं तमो न बाधते । वयमत्र तव भीमप्रभृतयो भ्रातरः सीदामः । अत्रैव तव प्रियतमा कृष्णा कष्टमनुभवति । तच्छ्रुत्वा वज्रताडित इव राजा विधिदुर्ललितं निंदन् निर्द्वन्दस्तत्रैव तस्थौ । ततः सोऽवदत् । देवदूत ! वत ! देवबुद्धिरपि विवेक शून्याद्य मयानुभूता । यैरेते स्वधर्मनिष्ठा अपि क्लेशेऽस्मिन्समुपेक्षिताः । अयं मोहो वा प्रसादो विवेको वाऽविवेको भ्रमो वा स्वप्नः ? त्वं सर्वं सत्यं सत्यं वद । नाऽहं जानामि । कस्येदं दुर्विचेष्टितम् ? अहं त्वत्रैव स्थास्यामि । त्वमितो गच्छ । स्वर्गेण मे किमपि प्रयोजनं नास्ति । यत्र दुर्वृत्ताः पूज्यन्ते साधवश्च विशस्यन्ते नाऽसौ स्वर्गः । निशम्यैवं भूपवचनं देवदूतः सुराधिपं गत्वा तत्सर्वं व्यजिज्ञपत् । एतदाकर्ण्य देवराजः सत्वरं तूष्णीं तत्र समागच्छत् । अत्रान्तरे वरुणधर्मराजाद्या देवगणा अपि सहसा समाययुः । तत स्तत्र नाऽशुभं किंचिददृश्यत । पुण्यो वातश्च ववौ । अथ शक्रो विषण्णं धर्मनंदनं जगाद । राजन् ! सर्वमेतदसत्यम् । मयेह माया प्रदर्शिता । मिश्रकर्माणो भूपा अवश्यमेतां पश्यंति । द्रोणवधसमये यस्तव मिथ्याभाषणदोषलेशस्पर्शोऽभवत् । तस्यैव विपाकोऽयम् । राजन्नाकर्णय । यत् पुरुषो मनसाऽभिगच्छति तद्वाचावदति तत्कर्मणाकरोतीति सत्यमव-

गच्छ । अन्यायेन परधनहरणेच्छा, ब्रह्मबधादिनिषिद्धाकांक्षा, देहएवात्मेत्यतद्ग्रहश्चेत्येवं त्रिःप्रकारमशुभफलं मानसं कर्म, एतत्त्रयविपरीतं च शुभफलं मानसं कर्मेतिज्ञेयम् । एवमन्यायेन परस्वहरणमशास्त्रीयहिंसा परदारगमनमित्येवमशुफफलं शारीरं कर्म, एतद्विपरीतं त्रयं शुभफलम् । अप्रियाभिधानं, असत्यभाषणं, परोक्षेपरदूषणकथनं सत्यस्याऽपि राजदेशपौरवार्तादेर्निष्प्रयोजनं वर्णनमित्येवं चतुर्विधमशुभं वाचिकं तद्विरीतं प्रियसत्यपरं गुणाभिधानं श्रुतिपुराणादौ च राजादिचरितकथनं शुभफलप्रदं भवति । राजन् ! यादृशेन भावेन यद्यत्कर्म निषेवते तादृशेन शरीरेण तत्तत्फलम् समुपाश्नुते । संप्रति स्वपदमाश्रितान् निजानुजांश्च पश्य । एषा तव प्रियतमा पांचाली स्वर्गश्रियमनुभवति । तवैते पुत्राश्च देवत्वमवाप्य प्रसीदंति । निशम्यैवं देवराजवचनं वीतशोको युधिष्ठिरो धर्मराजागिरा स्वर्गगंगांभसि स्नात्वा मानुषं भावं समुत्सृज्य च पुनीतां देवसभां ययौ । तत्राप्सरोनृत्यललितान् गायन्गंधर्वकिम्पुरुषान् स्वपदमारूढान् निजानुजान् ददर्श । ततो रविमण्डलेऽभिमन्युसमेतं कर्णं शक्रप्रेरितो राजाऽद्राक्षीत् । अथ चन्द्र मण्डले तं सोमसुतं गंधर्वराजं धृतराष्ट्रं च विलोकयामास । ततो वसुं भीष्मं बृहस्पतिं गुरु द्रोणं शंखचक्रगदाधरं नारायणं श्रीकृष्णंचाऽप्यपश्यत् । एवं भुवि यदंशा ये जातास्तान् तदाश्रयांश्च विलोक्य युधिष्ठिरो नंदनवासिवन्द्यं सदानंदमाससाद । सोऽथ राजचन्द्रो धर्मनंदनः सगरदिलीपनहुषभगीरथधुंधुमाररामकार्तवीर्यप्रभृतिनृपतिभिराभिनंद्यमान स्तत्र रराज । एवं वैशंपायनमुनिकीर्तितां भारतकथां श्रुत्वा संपन्नसर्पसत्रो जनमेजयो निर्वृत्तोऽभवत् । ततो नैमिषारण्यवासिनः शौनकादिमुनिवृन्दाः पुराणज्ञसूतेनाभिहितां परमानंददायिनीं भारतकथां श्रुत्वा महानंदनिर्भरास्तस्थुः । श्रीरस्तु ।

इति श्री गद्यभारते स्वर्गपर्वं समाप्तम् ।



॥ ओंनमःशिवाय ॥

# श्रीहरिवंशपर्व समारभ्यते।

नारायणं नमस्कृत्य नरं चैव नरोत्तमम्।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥

अथ नैमिषारण्ये शौनकेन पृष्टो लौमहर्षणिर्भूमावत्रवतीर्णं हरिवंशमभ्यधात्। एवं भारतकथां समाकर्ण्य प्रहृष्टो जनमेजयोऽपि वैशंपायनं वैष्णवान्ववायं पर्यपृच्छत्। तच्छ्रुत्वा जगत्पतिं प्रणम्य महामुनिर्वंशवृत्तं वर्णयितुमारभत। राजन्! भगवानव्ययो विष्णुः पूर्वमप एव सृष्ट्वा नाराख्यासु तासु वीर्यमवासृजत्। येनाऽसौ लोके नारायण इति प्रसिद्धोऽभवत्। ततस्तदण्डं हैममभूत्। यस्मिन्प्रजापतिर्जातः। सोऽथ मनुमुख्यान् कर्दमादीन् प्रजापतीन् ससर्ज। अत्रान्तरे दक्षप्रजापतिरजायत। यस्य दौहित्रसंततिः सोमादीनां पृथक् पृथग्राज्यानि समकल्पयत्। अथैकदाऽऽत्रेयोंऽगप्रजापतिसुतो वेनो मृत्युपुत्र्यां सुनीथायां जातः स्थितिविलोपकर्त्ता बभूव। सोऽथ बहुशोऽनुनीतोऽपि यदा वशी नाभवत्तदाऽतिबलं निगृह्य मुनयस्तं पातयामासुः। ततः क्रोधानलाकुलास्तेऽस्य सव्यमूरुं ममंथुः। येन कृष्णवर्णः खर्वाकृतिर्भयाकुलो नरः समुद्भूत्। सोऽथ निषीदेत्यत्रिणोक्तो निषादसंज्ञामवाप। ततो मुनयोऽस्य वेनस्य दक्षिणपाणिं ममंथुः। अथाऽस्य ताम्रांगुलिदलात् पितामहोपमः श्रीमान् पृथुललोचनः पुत्रो बभूव। एवं तत्प्रसादाद् दिवं याते वेने वैन्यभूपती रत्नाकरैरेत्य स्वयं रत्नैरभ्यर्चितः। प्रतापिनस्तस्य जले शैले चाऽप्यभग्नप्रणया गतिरभूत्। विलोक्यैवं सूतमागधवंदिनस्तं तुष्टुवुः। अथ तरस्विना तेन प्रजावृत्तये समादिष्टा भूमिर्गोर्भूत्वा भीता च यदा दुद्राव। तदा सोऽपि तामन्वद्रवत्। किंबहुना। सा ब्रह्मलोकान्तानशेषांल्लोकां जगाम। परंतु सर्वत्र तमेवात्तायुधं राजानमनुसरन्तं ददर्श। साऽथ परित्राणमपश्यंती कृतांजलिस्तमूचे। महीपाल! कोपं परित्यज्य शरणागतां योषितं च मां परिरक्ष। प्रजानाथ! धरित्रीं विना प्रजाः कथं तिष्ठंति? निशम्यैवं क्षितिवचो राजाऽपि क्रोधं हित्वा प्रोवाच। देवि! मम समारंभोऽयं त्वयि प्रजावृत्तिनिमित्त एव। बहूनां प्राणरक्षार्थमेकहिंसा न निन्द्यते। स्वयमहमात्मा

नं विस्तार्य प्रजा धारयिष्यामि । न चेल्लोकानां वृत्तिं वितर । मे पुत्री च भवेति क्षितिभुजादिष्टा जगती नतिमवलम्ब्य जगाद । राजन् ! त्वत्सुता सती प्रजावृत्तिमहं विधास्यामि। पूर्वं शिलाकूटविशंकटान् देशान् समी कुरु। यथा मया स्रुतं क्षीरं सर्वस्याऽपि सुलभं भवेत् । निशम्यैतत् पृथुर्धनुष्कोट्या पृथुशिलोच्चयान् पृथक् चक्रे । येन पृथ्वी सुस्पष्टाऽभवत् । ततो राजा स्वायभुवं मुनिं वत्सं कृत्वा करपुटोदरे सस्यानि दुदोह। एवमपि श्रूयते। यत् पुराऽपि मुनिभिर्भूस्तपो ब्रह्म च दुग्धा । तत्र वत्सः सोमो दोग्धा गुरुः कांचनं च पात्रमासीत् । ततः पितृगणैर्यमं वत्सं समादाय दोग्धारमन्तकं च कृत्वा रूप्यपात्रे च बसुधेयं सुधां दुग्धा । अत्रान्तरे नागैरलाबुपात्रे तक्षकं वत्सं धृतराष्ट्रं च दोग्धारं कृत्वा विषं दुग्धा । ततोऽसुरैरायसे पात्रे यदा वसुंधरा मायां दुग्धा । तदा प्रल्हादो वत्सो मधुदानवश्च दोग्धाऽभूत् । अथ यक्षैरपि धनेश्वरं वत्सं कृत्वाऽऽमपात्रेऽन्तर्धानकरं क्षीरं दुग्धा । ततो राक्षसैः सुमालिना वत्सकेन रुधिरं दुग्धा । गंधर्वकिन्नरैः पद्मपात्रे शुभान् गंधान् दुग्धा । पर्वतैः शैलभाजने मेरुं दोग्धारमादाय हिमालयं च वत्सं कृत्वा रत्नौषधिगणान्दुग्धा । ततो वृक्षैः पालाशपात्रे पुष्पं ततः फलं दुग्धा । तत्र सालो दोग्धृत्वं प्लक्षश्च वत्सतामगमत् । सर्वदा भूमिः सर्वदेति पृथुभूपतेः शासनादभूत् । तस्यादिराजस्य महिमा त्रिषुलोकेषु सर्वत्र गीयते । निशम्यैवं वैन्यचरितं विस्मितो जनमेजयो मुनिं मन्वंतरकथामपृच्छत् । तच्छ्रुत्वा सोऽब्रवीत् । पूर्वं स्वायंभुवो मनुरभूत् । तत्समये यामा नाम देवा स्तथा मरीच्यत्रिपुलस्त्याद्याश्च महर्षयो बभूवुः। द्वितीये स्वारोचिषेऽन्तरे तुषिता नाम देवा और्वस्तंबकाश्यपप्राणदत्तबृहस्पतिनिश्च्यवनाश्च श्रुतिज्ञा महर्षयोऽभूवन् । औत्तमाभिधस्तृतीयो मनुरभूत् । ऋभवो देवा वसिष्ठपुत्राश्च सप्तर्षयोऽभवन् । तुर्यस्तामसो नाम मनुरभूत् । यस्यान्तरे पृथुगार्ग्याद्यामुनय सभ्याश्च श्रीत्रिदिवौकसो बभूवुः । आसीत्पंचमो मनूरैवतः । वेदमुखाद्यास्तदन्तरे सप्तर्षयोऽभूतरजसश्च देवा बभूवुः । ततश्चाक्षुषो मनुः षष्ठोऽभवत् । यदन्तरे भृगुमुख्याः सप्तर्षयो लेखसंज्ञाश्च देवा अभूवन्। एवं बहुपुत्रेऽत्रेतेषु षट्सु जातेषु सांप्रतं श्रीमान् सप्तमो वैवस्वतो मनुर्विराजते । समयेऽस्य कश्यपात्रिकौशिकगौतमवसिष्ठभारद्वाजजमदग्नयः सप्तर्षयः साश्विरुद्रमरुद्वस्वादित्या देवता इक्ष्वाकुप्रमुखाश्च राजानो मनुपुत्राश्च बभूवुः । अथाष्टमः सावर्णिर्मनुर्भाविता । तस्यान्तरे श्रीरामव्यासकृपात्रेयद्रौणगालवकाश्यपाः सप्तर्षयो भावितारः। ततो मेरुसावर्णाश्चत्वारः परे मनवो भाविनः । तेषां नवनवाश्चान्ये ते ते सप्तर्षयः क्रमाद् भविष्यंति । तत्र रौच्यो नाम षष्ठो मनुर्भौत्याख्यश्च सप्तमो मनुर्भविता । राजन् ! एते चतुर्दश मनवोऽभिहिताः ।

चतुर्युगानां पूर्णानामेकसप्ततिः । प्रत्येकं मन्वंतराणामेष संख्याकृतोऽवधिरस्ति । एवं तेषु चतुर्दशसु मन्वंतरेषु यातेषु कल्पक्षये विष्णोरन्तः सर्वमिदं जगत्प्रलीयते । पुनश्च भवतीत्येवं चक्रवत् परिवर्तते । कल्पक्षयलक्षाणामनादिनिधना गतिरस्ति । सांप्रतस्य मनोस्तावदस्मिन् वैवस्वतेऽन्तरे हरिवंशप्रसंगेन संभवः श्रूयताम् । तत्रादौ कश्यपः । कश्यपादादित्यः । प्रजापतित्वष्टृपुत्री संज्ञाऽस्य प्रियाऽभवत् । अथ प्रभाकरोऽस्यां श्राद्धदेवं मनुं यमं यमुनांचाजीजनत् । ततः संज्ञा तीक्ष्णांशुप्रतापाद् भीता निजस्वरूपं छायायै दत्वा यदा जनकान्तिकं जगाम । तदा लज्जिता छायापि वडवा भूत्वोत्तरान् कुरूनगमत् । अथ संज्ञासवर्णायां छायायामज्ञातवृत्तस्य रवेः सावर्णाख्योऽपरो मनुःसुतोऽभवत् । ततश्छाया शनैश्चरमजीजनत् । अत्रान्तरे त्वष्टा रवितेजसा दैत्यान्धकारसंहारक्षमं सुदर्शनं चक्रमसृजत् । ततो विवस्वान् वडवायां पराङ्मुखायां तस्यां स्वतेजो धृत्वा नासत्यावुत्पादयामास । अथ मनुः प्रजापतिरभूत् । यमः पितृपतित्वमवाप । यमुना च सरिद्भूत्वा जगत्कल्याणमकरोत् । आश्विनौ देवभिषजावास्ताम् । शनैश्चरश्च ग्रहाणां सप्तमो बभूव । ततो मनोरिक्ष्वाकुशिविशर्यातिनाभागाद्याः सुता अभूवन् । अथ पुत्रार्थी मनुर्मित्रावरुणयोरिष्टिं चकार । तत्रास्य ललितद्युतिरिडाभिधाना पुत्री बभूव । साऽथ मनुं प्रणम्य मित्रावरुणौ तुष्टाव । ततः सा मनुपुत्रस्त्वं भविष्यसीति वरमवाप्य प्रतिनिवृत्ता शशिसूनुना बुधेनावलोकिता तत्संगमात्पुरूरवसमात्मजं लेभे । पश्चात् स्त्रीरूपं समुत्सृज्य सा प्रद्युम्नाख्यो नृपो बभूव । तस्य गयोत्कलविनताश्चाश्चेति त्रयः पुत्रा बभूवुः । इक्ष्वाकोस्तुमुपादस्तस्मात् ककुत्स्थोऽजायत । तद्वंशे कुवलाश्वभूपो बभूव । य उत्तंकवचसा बालुकान्तर्गतं धुन्धुं नाम महासुरं जघान । कुवलाश्वस्य त्रय्यारुणिर्जातः । तेन सत्यव्रतो नाम पौरकन्यापहारतः शप्तोऽन्त्यजातित्वमवाप । अत्रान्तरे वर्षं विना द्वादशवार्षिके कृच्छ्रे विश्वामित्रो जलधितटे ससुतां भार्यां तत्याज । साऽथ मध्यमसुतं गले बद्ध्वा विक्रेतुं प्रस्तुताऽभवत् । ततःसा वृत्तिदायिना सत्यव्रतेन कृपया वारिता । स विश्वामित्रसुतो गलबंधाद् गालव इति प्रथितो बभूव । स सत्यव्रतो मे पिता किन्न त्यागाद्वारित इति पुरोहिते वशिष्ठे मन्युमानभूत् । सोऽथ शापमोहितस्तस्य चरंती कामधेनुं निहत्य गाधिपुत्राणामात्मनश्चाशनं व्यधात् । ततो वशिष्ठः पितृ कोपकत्वाद् धेनुबधादप्रोक्षिताशनाच्च शापशंकुत्रयं तस्य समपातयत् । अथ विश्वामित्रस् त्रिशंकोस्तस्य याजको भूत्वा पितृपदं दत्तवान् । येन सदेहस्स स्वर्गलोकमगात् । तस्य पुत्रो हरिश्चन्द्रो बभूव । यो राजसूये रराज । ततः सगरोऽभवत् । यो मातुः सपत्नीदत्तेन गरेण सह जातस्तस्मात् सगर

इति संज्ञामवाप । तत्सुतैः कृतोऽयं सागर इति प्रसिद्धोऽस्ति । सोऽथ पितुः पूर्वापकारिणःप्रत्यन्त-देशाञ्जित्वा तान् निःस्वाध्यायवषट्कारान् विदधे । ततो बधरक्षणात् काम्बोजान् मुण्डशिरसश्च-कार । ततः शशकोर्धशिरोमुण्डान् पारतांश्च मुक्तकेशान् विदधे । पल्हवान् यवनाद्यांश्च श्मश्रुमात्रचिह्नान् कल्पयामास । तद्वंशे दिलीपोऽभूत् । दिलीपाद् भगीरथोऽभवत् । श्रीमती भागीरथी यस्य दुहितृभावमगात् । तत्कुले दशरथात्मजः श्रीरामचन्द्रस्त्रिभुवनविश्रुतोराजा-ऽभवत् । तत्सुतात् कुशाद्बहवो राजर्षिवंशा बभूवुः । एवमयमिक्ष्वाकुवंशो वर्णितः । इक्ष्वाकुभ्राता मरिष्यन्नाम बभूव । तत्तनयाः शकसंज्ञका बभूवुः । नाभागस्याम्बरीषः । वृष्णेश्च पुत्रा वार्ष्णेया अभूवन् । शिबेः पुत्रा रणधृष्टा अभूवन् । शर्यातिकन्या सुकन्या तु च्यवनेनोढा । पुत्रश्चानर्तभूपतिरभूत् । तस्य तनया रेवती दिव्यगुणसम्पन्नाऽभवत् । अथैकदा पुत्रीसहितो राजा गान्धर्ववेदं श्रोतुं ब्रह्मलोकमगात् । तत्र क्षणलेशवद् बहुयुगे-काले व्यतीते स्वपुरीं द्वारकामेत्य तां वृष्णिभिर्वृतामपश्यत् । सोऽथ बालामेव रेवतीं बलभद्राय दत्वा तपसे मेरुकन्दरं प्रायात् । इक्ष्वाकोरनुजः षष्ठो रिष्टाख्योऽभवत् । तस्य पुत्रौ वैश्यावपि[1] तपोयोगाद् ब्राह्मणतां यातौ । सप्तमस्तत् सुतः करूषोऽभवत् । तत्सुताः कारूषा इति संज्ञामवापुः । अष्टमः पृथुकामिधो गुरुगोबधाच्छूद्रो बभूव । एतेऽष्टौ मनु-सुता इक्ष्वाकुभ्रातरो बभूवुः । भुवि श्राद्धदेवस्य मनोर्वंशधरा एते कथिताः ।

अथ महीभुजा श्राद्धप्रसंगेन पितृकल्पं पृष्टो मुनिर् भीष्मः प्रश्नांते यद् युधिष्ठिरं प्राह । तद् वर्णयामास । श्राद्धे त्रिपौरुषैस्त्रिभिः पिण्डैः पूजितपितरो जंतूनाना गतिष्वपि दैवतत्वेन पुष्णंति । मया शंतनोः श्राद्धकाले पिण्डं दातुं समुद्यते कंकणोदारः कर उत्तस्थौ । तं विलोक्य मया कुशेष्वेव पिण्डे धृते संतुष्टो जनको मह्यं स्वच्छन्दमरणरूपं वरं प्रादात् । तस्मिन्नेवावसरे श्राद्धविषये पृष्टो मार्कण्डेयोऽब्रवीत् । पुरा मेरुशिखरे तपस्यता मया पृष्टः सनत्कुमारो भगवान् प्राह । पुरा ब्रह्मा सुरानात्मयाजिनो दृष्ट्वा कथं नैते मां यजन्त इति विचिन्त्य शापात्तानमोहयत् । ततस्ते नष्टसंविदः कमलयोनिं प्रसाद्य तच्छासनान् निजपुत्रान् प्रायश्चित्तं पप्रच्छुः । ततः क्रियाज्ञानोपदेशतः प्रायश्चित्तैः पूतास्ते गुरु-त्वात् स्वसुतैः पुत्रकाः ! गम्यतामित्युक्ताः । त एते पितरो तनया अपि देवपूज्याः । ततो देवा ऊचुः । येषां श्राद्धं विना सर्वाअपि क्रिया निष्फलाः संति । किंबहुना । तद्वि-हीनेषु यागेषु राक्षसाः फलमश्नंति । तस्माद्देवाः पितृगणाश्चाऽप्यन्योन्यं पितरः । सोमः श्राद्धेनाप्यायते । स चाऽखिलाः प्रजाः पुष्णाति । श्राद्धेन प्रीताः पितरो नृणां पितृपिता-

१ पुरा वैश्यावपि तपोऽनुष्ठानाद् ब्राह्मणत्वमलभताम् । अतो धन्या तयोस्तपश्चर्या ।

महप्रपितामहान् तिर्यग्योनिगतानपि सर्वत्राप्याययंति । तत्र चत्वारस्तद्गणा मूर्ता त्रयश्च मूर्तिहीनाः सुधाभुजो योगजुषो वैराजा इति विश्रुता अभूवन् । तेषां मानसी कन्या मेना हिमगिरिप्रियाऽभवत् । यत्सुतो मेनाकः क्रौंचमहागिरेरपि पिताऽस्ति । मेनायास्तिस्रः कन्या बभूवुः । या दुश्चरं तपश्चेरुः । तासां ज्येष्ठा पार्वती भवबल्लभाऽभवत् । मा इति तपसो मात्रा निवारिता सा जगत्युमेति विख्याता बभूव । द्वितीयैकपर्णेति विश्रुता देवलमुनिबधूरभवत् । तृतीयैकपटला नाम जैगीषव्यमुनेर्भार्याऽऽसीत् । अथ मरीचिपुत्राणां पितॄणामपि मानसी पुत्री अच्छोदाख्या वरसरित्प्रागच्छोदसरः स्नुता पितरमपरिज्ञाय साभिलाषा सा विलोक्य तच्छापाद् भ्रष्टाऽपतत् । सा तत्प्रसादकृतावधिरष्टाविंशे द्वापरे मत्स्ययोनिजा समभवत् । अथ गच्छता कालेन सा गंधकाली पराशराद् व्यासनामकं सुतं प्रासूत । पुलस्त्यपुत्रा दिवि बर्हिषदः पितरो राजंते । तेषां मानसी कन्या पीवरी नाम योगिनी व्याससुताच्छुकादपत्यानि जनयिष्यति । एतेऽमूर्तास् त्रयः पितृगणा ब्रह्मदत्तभूपतिजननीं पुत्रीं कृत्वा कर्मसन्यासात् सोम देवान् मानवादीन् भावयंति । अन्ये मूर्तास्तु सोमपा नामः पितरः सुधाभुजः ख्याताः । तेषाम्मानसी कन्या गौ स्तां च ब्राह्मणा यजंते । अन्ये त्वंगिरसः पुत्राः श्राद्धवर्जिताः संति पितरः । तेषां यष्टारः क्षत्रियाः सहस्रयाजिनो दिलीपभूपतेर्माता यशोदाख्याचकन्यकाऽस्ति । कश्यपप्रजापतिपुत्रा आज्यपा नाम पितरः । तान् सदा वैश्या यजंते । तेषां च मानसी कन्या विरजा नामययातिभूप जननी । सुकाला नाम पितरो वशिष्ठमुनिसुताः । ते शूद्राणामेव पूज्याः । तत्पुत्री नर्मदा सरित् कुरुकुत्सप्रिया । यस्याश्च सुतस् त्रसदस्यु नृपः । एते चत्वारो मूर्ताः पितृगणाः । श्राद्धदेवो मनुर्येषां युगे युगे पूजां व्यधात् । स्वधाभुजां तेषां सोमवन्हिमनुपूजापुरस्सरे श्राद्धे राजतं किंवा राजतांकं शस्त्रं यातम् । त एते क्रोधहीनाः प्रसादिनः पितरश्च पूज्याः । येषां संकल्पकल्पलतिका भक्तिः महाफलाऽभिहिता । धर्मापचाराद् विभ्रष्टा अपि ब्राह्मणाः पितृपूजया यथा स्वपदमेष्यंति । तत्सर्वं क्रतौ द्रक्ष्यसि । किम्बहुना । स्वयमेव श्राद्धभावं विजानीहीत्यभिधाय सनत्कुमारो मे दिव्यचक्षु दत्वा च तिरोदधे । अथ गच्छता कालेन कुरुक्षेत्रे तान् सप्त विप्रानपश्यम् । वाग्दुष्टः क्रोधनः हिंस्रः पिशुनः खसृमः कविः पितृवर्ती चेति प्रसिद्धाः । पुरा प्रस्थिताः कौशिकदायादास्ते क्षुधार्ता गुरुगार्ग्यस्य गां पथि हन्तुमुद्यता अभूवन् । यदा कविखसृमाभ्यां निवार्यमाणा अपि ते न निवृत्तास्तदा पितृवर्ती कोपात्ताञ्जगाद् । सर्वथैतदकार्यं चोऽति गर्हितम् । यदि दुर्ग्रहस्तर्हि तु श्राद्धपूर्वोऽयमारंभः

क्रियताम् । एतदाकर्ण्य ते सर्वे तदुक्तं विधिं चक्रिरे । ततस्ते हिंसया काले शप्ता दशार्णेषु स्वकर्मस्था लुब्धकास्त्वजायंत । परं श्राद्धफलात्तेषां जन्मान्तरेष्वपि स्मृति र्नविलुप्ता । ते चैवम् । निर्वैरी, निर्वृतिः, क्षान्तः, निर्मन्युः वैधसः कृतिः मातृवर्तीचेति ते व्याधाः पितृसेवा परायणा बभूवुः । अथैकदा ते मातापितृभ्यां रहिताः पानीये धनूंषि त्यक्त्वा गतासवोऽभूवन् । ततः फुल्ललतापुंजकुंजे कालांजरे त्रासायासविविग्नास्ते जातिस्मरा मृगा जाताः । उन्मुखः नित्यचकितः स्तब्धवर्णः सुलोचनः घस्मरः पिण्डितः नादीचेति चेष्टोचिताभिधास्तेऽभूवन् । तेऽथ ब्रह्मचारिणः क्षान्ताः विहारिणश्च मरुभूमिमवाप्य प्राणान्पर्यत्यजन् । ततस्ते शरद्वीपे निर्ममः निःस्पृहः क्षान्तः निर्वैरः निष्प्रतिग्रहः निर्वृतः निभृतश्चेति चक्रवाका बभूवुः । ततस्ते योगपरायणाः प्रफुल्लकमलमालिते सरसि हंसाः संजाताः । अथैकदा ते पद्मवदनावृन्दसमेतं यदृच्छया च समागतं विभ्राजं नाम भूपतिं दृष्ट्वा सरसि विहरंतोऽतिचकिता बभूवुः । ततस्तेषु कनीयान् मोहवशो भूत्वा तद्राज्यस्पृहां चक्रे । ज्ञात्वैवं द्वावन्यावपि खगौ तत्स्पृहानुगतमानसावभूताम् । ततस्ते सारसयोनिमवाप्य व्यसवोऽभवन् । विभ्राजस्य भूपस्य सुतोऽणुहो नामासीत् । व्याससुतः शुकस्तस्मै पितॄणां दौहित्रीं स्वसुतां कृत्वीं प्रादात् । स योगभ्रष्टो हंसस्तस्याः पुत्रोऽभवत् । स ब्रह्मदत्त इति ख्यातः काम्पिल्यनगरे नृपो बभूव । तस्य पांचालपुण्डरीकाख्यौ नृपौ सचिवावास्ताम् । आसन् सर्वेऽप्येते जातिस्मराः । देवलमुनिसुता संनतिर्नाम ब्रह्मदत्तप्रियाति मानवती बभूव । स कदाचिद्वल्लीलास्यव्यालोलपवने वने तया तन्वंग्या सह विजहार । अथ सर्वप्राणिरुतज्ञोऽसौ तत्र प्रणयकोपतः पिपीलिकाया भर्तुश्च तां तां प्रसादनां शुश्राव । सोऽथ चलचारुकपोलफलको नृपो जहास । मे नाथः कस्मादकस्माद्धसतीति विलज्जिता सा पद्मवदना चन्द्रोदयेऽब्जिनीव लज्जावनतानना कोपारुणेक्षणा च बभूव ।

ततो महीभुजा पिपीलिकारुताश्चर्ये कथितेऽपि प्राणत्यागैकसंकल्पा सा तत्सर्वं नृप कथनमसत्यमेवाऽमन्यत । एवं दयितादीर्घकोपविविग्नो राजा निराहारव्रतो विष्णुं दध्यौ । ततो दयासिन्धुर्दर्शनं दत्वा तव कुशलं प्रातर्भवितेति समादिदेश । अथ प्रभाते हरिशासनात् ससचिवो नृपो रथमारुह्य पुरं प्रविवेश । अत्रान्तरे तैश्चतुर्भिर्जातिस्मरै र्द्विजैर्विसृष्टः पिता नृपं श्लोकं श्रावयितुं तत्राऽऽजगाम । सोऽथ विप्रः सचिवयुतं भूपालं समासाद्य किमप्युत्सुकमानसं तमिदमश्रावयत् । दशार्णेषु सप्त दाशाः कालांजने गिरौ मृगा नदीद्वीपे चक्रवाका मानसे सरसि हंसा वयं तेऽद्य कुरुक्षेत्रे वेदपारगा द्विजा जाताः । दूरमध्वानं गंतारो यूयं किमवसादिनः ? निशम्यैवं स्मृतयोगात्मा नृपो निः-

स्यन्दकरणः सचिवाभ्यां सहैव त्वरितं तद्धाम समाजगाम । राजन् ! श्राद्धप्रभावादेव महापातकं क्षययित्वा कौशिकदायादाः परमपदमवापुः । शांतनोः शासनादेतन्मया मार्कण्डेयाच्छ्रुतम् । ब्रह्मदत्ताद् विश्वक्सेनः । विश्वक्सेनाद् दण्डसेनः । दण्डसेनाद् भल्लाटः । भल्लाटाज्जनमेजयः । जनमेजयादुग्रायुधः । निरंकुशोऽयं शंतनौ त्रिदिवं प्रयाते सत्यवतीं बलाद्धर्तुं मनश्चकार । सोऽथ युधि मया हत इति श्राद्धफलं भीष्मो युधिष्ठिरं बभाषे । श्राद्धेन सोम आप्यायते । यद्वंशजा श्च बहुकुटुम्बा वृष्णयः संति ।

पुरा मुनिवरोऽत्रिर्दिव्यानि त्रीणि वर्षसहस्राणि तपश्चचार । अथ निर्निमेषस्य ब्रह्मचारिण स्तस्य शरीरं दुग्धोदधेरिव कान्तममृतमयं चाऽभूत् । ततस्तन्नेत्राभ्यां यद् दशधाऽमृतं सुस्राव । तद् दशस्वेव दिक्षु प्रभासम्पूरिताम्बरं समभूत् । ततस्तत्पीयूषं भास्वरं भुवि निपतितं सहसा सोमत्वमध्यगच्छत् । तत स्तूर्णं भुवनत्रये कम्पिते ब्रह्मा सहस्राश्वे वेदमये रथे तमादधे । अथ सदेवा मुनयस्तं रथस्थं तुष्टुवुर्येन सर्वं जित्सोऽभवत् । ततोऽसौ तेजोवृद्ध्यै वत्सराणां पूर्णं पद्मशतं तपश्चकार । यत्प्रभावाद् दिव्यौषधिसुधागणाः प्रादुर्बभूवुः । अथ ब्रह्मणाऽभिषिक्तोऽसौ ब्राह्मणाधिपो भूत्वा दक्षपुत्रीणामप्याधिपत्यमवाप्य च राजसूये रराज । ततः सुरसिद्धगंधर्वसंसेव्योऽसौ श्री विशृंखलतामवलम्ब्य तरसा बृहस्पतिभार्यां तारां जहार । सोऽथ त्रिदशैर्विबाध्य मानोऽपि यदा तां न तत्याज । तदा रुद्रं पुरस्कृत्य शक्रो गुरुपक्षं जग्राह । ततो भैरवे तारकामये समरे प्रवृत्ते तुहिनत्विषा देवयशश्छेदि ब्रह्मशिरोऽस्त्रं सृष्टं । यत् सुरचमूं स्वल्पाव शेषामकरोत् । अथ त्रस्तसुरैरेत्य याचितः कमलोद्भवः साम्नैव सव कलहंविनिवार्य बृहस्पतये जायां ददौ । तत ईर्ष्याविषोल्वणो गुरुस्तामधोमुखीं सगर्भां प्रोवाच । त्वयाऽयं गर्भो मद्योनौ न धार्यः । तच्छ्रुत्वा सा गुरुपत्नी इषीकास्तंभसंस्तरे गर्भं तत्याज । अथ जातमात्रोऽसौ बुधः स्वतेजसा देववृन्दान्यजयत् । ततो देवैः कस्यायमिति पृष्टा सा यदा नोवाच । तदा विरंचिना पृष्टा चन्द्रस्येति शनैरवदत् । सोऽयं शशिसुतो दिवि प्रतिकूलोदयमवाप्य शैत्यमुत्पादयति । अथैकदा दक्षिणाक्षीणमण्डलो निशापतिः परदारपरामर्शात्पश्चात्तापमवाप्य तूर्णं महामुनिमत्रिं शरणमगमत् । सोऽथ पुत्रवात्सल्यान्मंत्रैः क्षपितकिल्विषो यक्ष्मणा मुक्तः पुनरपि निजश्रिया विभूषितोऽभवत् । अथेडायां बुधस्य पुरूरवाः पुत्रोऽभूत् । स भुवनश्लाघ्यामुर्वशीं कान्तामकरोत् । तस्य तस्यां षट् तनया अभूवन् । तेषां ज्येष्ठ आयुर्नाम नृपोऽभवत् । आयुषो नहुषो बभूव । नहुषानुजो रजिरनुजान्नीत्वा देवासुररणे श्रीवज्रपाणेः पक्षं समर्थयामास । ततो विजयिना तेन यदा

पणार्जितं सुरेन्द्रत्वं प्रार्थितं तदा धूर्तेन शक्रेण त्वत् पुत्रोऽस्मीत्यभिहितः स देवराज्यं सहसा तत्याज । अथैकदा महौजसो रजिपुत्राः पितृबलार्जितं त्रिदशराज्यं जहुः । ततो हृतराज्यो हृतभागश्च शतक्रतुर्मखेषु बृहस्पतिं बदरीमात्रमपि पुरोडाशं ययाचे । अथ नष्टचेतसा तेन संप्रार्थितो बृहस्पती रजिपुत्राणां मतिमोहं चकार । ततस्ते रागिणो न्यायवर्त्मनो विभ्रष्टा मदातिरेकान्नष्टवीर्यपराक्रमा बभूवुः । ततो वज्री दुर्जयानपि तान्हत्वा सपदि स्वपदमवाप्तवान् । उक्तं च । दुर्वृत्तानां च संपदः शफरोत्फालचपलाहि भवंति । नहुषस्य ययातिः पुत्रोऽभवत् । यस्य महिषी देवयानी शर्मिष्ठाच तदनुगामिनी बभूव । स राजा दिव्यरथाश्रयेण षड्रात्रेणाऽप्यखिलं जगदजैषीत् । ततः कालेन स रथोत्तमस्तद्वंशे शापान्नष्टः । स जरासंधेन संप्राप्तः । ततोऽप्यसुरारिणा हृतः । ययातेः शुक्रकन्यायां यदुतुर्वसू लोकमान्यौ सुतावभूताम् । अथ वृषपर्वसुतायाः शर्मिष्ठाया द्रुह्यानुपूरुनामानस्त्रयोवंशविवर्धनाः सुता बभूवुः । अथ गच्छता कालेन जराग्रस्तोऽपि कामी राजा यौवनं ययाचे । ततो मृत्युसिंहनखश्रेणीं सुखपद्महिमाहतिं च जरां यदा कश्चिन्न जग्राह । तदा पितृभक्तो पुरुर्मालेव तामग्रहीत् । एवं यौवनमवाप्य ययातिर्यदुमुख्यानशपत् । येन तद्वंश्या राज्यच्युता अभूवन् । ततस्तरुणविग्रहो राजा कामानां पारं दिदृक्षुः स्वर्गांगनाभिः सह नंदने विजहार । एवं सुचिरं राजीवलोचनां सेवमानोऽपि राजा यदा कामानामन्तं न ययौ । तदा स्वराज्यं पूरवे दत्वा निजां जरां ततो जग्राह । ततो जातवैराग्योऽब्रवीत् । पुत्र ! वेल्लत्कल्लोलजालेन जलेन वाडव इव भोगाभ्यासेन भोगाभिलाषोऽयं विवर्द्धते । बत ! विस्फारसंसारसरोरुहरजश्छटा मधुपानिव मुग्धान् बध्नाति । कामवतामयंकामो जीर्यतामप्यजीर्णो नश्यतामप्यनश्वरोऽस्ति । यथा वृक्षं शनैः शनैर्घुणो निकृन्तति तथाऽयमपि देहिनो देहं निकृन्तन्नास्ते । अहो ! धैर्येणाऽप्यवधीरितो रागोऽयं वस्त्राच्छादितपावक इव ज्वलतीत्यभिधाय राज्यं पुत्राय समर्प्य च स्वयंसभार्यस्तपोवनं जगाम । अथाऽस्य विपुलेवंशे दुष्यन्तो नाम भुवनविदितो राजा बभूव । तत्पुत्रो भरतो भारतवंशप्रवर्तकोऽभवत् । राजन् ! यस्य विशुद्धवंशे त्वमपि जातोऽसि । एष पौरवो वंशः पूर्वमेव मयोदितः । तुर्वसो करंधमः । करंधमात्स्वर्णदाता मरुत्तोऽभवत् । तस्य विपुले वंशे सकेरलाः पाण्ड्य चौला अजायंत । द्रुह्यवंशे मरुत्पतिर्नाम राजाऽभूत् । यो दीर्घसंग्रामे यौवनाश्वेन हतः । तत्सुतो गान्धारस्तद्वंशजा गान्धारा जाताः । अनुवंशे धर्माद्याः प्रत्यन्तभूमिपा अभूवन् । यदुवंशे कृतवीर्यात्मजोऽर्जुनो महाप्रतापशाली राजा बभूव । तत्कुले हैहयानर्तभोजतालजंघाश्च नृपा अभूवन् । ततो वृषणभूपालाद्वृष्णयो मधोश्च माधवा बभूवुः । ततस्तदन्वयेऽ-

न्धको बभूव । बहुशाखे च तद्वंशेऽक्रूरः सहस्रदोऽभवत् । ततपितृव्यकुले शूरसेनोऽजायत । शूरसेनाद्वसुदेवोऽभूत् । यस्मिञ्जाते दिवि महान् दुंदुभिनादोऽभवत् । अस्य देवभागदेवश्रवसौ भ्रातरावभूताम् । श्रीमति कुलेऽस्मिन् वत्सश्यामकनवकाऽनाधृष्टयो बभूवुः । पृथुकीर्तिः, पृथा, श्रुतदेवी श्रुतश्रवा, राजाधिदेवी चेति पंचपुत्र्यः शूरसेनस्य बभूवुः । पृथुकीर्तिसुतो दंतवक्रो नृपो बभूव । पृथासुताः धर्मराजवृकोदरधनंजयाः । श्रुतश्रवायाः शिशुपालः । पुरा योऽसौ हिरण्यकशिपुरभूत् । शूरस्य पितृव्यवंशे शैनेयः सत्यकोऽभवत् । तत् सुतो युयुधानापरामिधः सात्यकिरभूत् । उद्धवशत्रुदेवाद्यास्तत्कुले बभूवुः । शत्रुदेवकुले नैषादिरेकलव्योऽभवत् । श्रीवसुदेवोऽपुत्राय वत्सवतेऽद्धिः कौशिकमौरसं सुतं प्रादात् । वसुदेवस्य रोहिणी देवक्यौ महिष्यावभूताम् । तत्र रोहिणी तनयो बलभद्रोऽग्रजः शुभसारणशुभ्रपिण्डारदमनदुर्मदाश्चाऽनुजाः सभद्राख्याच भगिनी बभूव । वसुदेवस्य देवक्यां दानवसूदनः श्रीकृष्णचन्द्रोऽभवत् । एवं श्री हरिरप्यपुत्राम गंडूषकाय चारुदोष्णादिकान् प्रादात् । अथ वसुदेवस्यान्यासु भार्यासु भोजः गदः विजयः उपासंगः वृषदेवः लोमपादः कपिलः वर्धमानकः आशावहः पौण्ड्रः निषादनाथश्चेति सुता बभूवुः । अत्रान्तरे कालायसाशनो गार्ग्यमुनिर्वने द्वादशसमा दीर्घं तपश्चचार । सोऽथ त्रिगर्तराजसुतया परीक्षार्थं ह्रियमाणाशयोऽपि सदनुष्ठानान्न विचचाल । अथैकदा मन्युतप्तोऽसौ रुद्रशासनाद् गोपकन्यायां सर्वमहीभुजां कालं कालयवनाख्यं सुतमसृजत् । यद्रथे वृषपूर्वार्धविग्रहा हयाः संयोजिता आसन् । अथ गच्छता कालेन निष्पुत्रेण यवनेन्द्रेण स पुत्रको गृहीतः । सोऽथ युद्धार्थी भुवि सुभटान् पप्रच्छ । ततोऽसौ नारदगिरा वृष्णियादवान् वीरान् ज्ञात्वा मथुराञ्जेतुमत्यौहिण्या समुपाद्रवत् । अथ कालयवनाक्रान्ता जरासंधेनचार्दिता यादवा मधुपुरीं विहाय जलनिधौ द्वारकामात्रासयामासुः । तत्र वंशस्कंधेषु चान्येषु संभूता यादवा महावृद्धिं प्रापुः । सात्वतस्य राजर्षेर्यज्वा देवावृधोऽभवत् । तस्य पुत्रो दानवीरो बभ्रुर्बभूव । तत्कुलेऽतिबलशालिनो भोजा बभूवुः । अन्धकात् कुक्कुरः । तस्मादाहुकोऽभवत् । योऽवतीर्य वृष्णिवंशेषु कृतयुगं प्रवर्तयामास । तस्य देवकोग्रसेनाख्यौ द्वौ पुत्रावभूताम् । तत्र देववत्प्रमुखाः पुत्रा देवक्याद्याश्च कन्यका बभूवुः । तासु सप्त वीरमातरो वसुदेवाय वितीर्णाः । उग्रसेनस्य न्यग्रोधप्रमुखाग्रजः कंसो बभूव । कंसा कंसवती तन्वी पाली कव्हाचेति कन्यका अभूवन् । अथ विदूरथकुले हृदकाभिधः सुतोऽभवत् । तस्य कृतवर्ममुखाः शतधन्वादयः सुता अभूवन् । क्रोष्टुवंशे प्रसेनः सत्राजित् सेनजित् प्रभृतयः पुत्रा बभूवुः । एवं यदुवंशे

बहवः कुलपावना यादवा दानधर्मपरायणा अभूवन् ।

अथैकदा प्रसेनोऽब्धितटे स्यमंतकाख्यं मणिमवाप्तवान् । कनकस्यन्दी स मणिर्व्याधि दुर्भिक्षनाशनार्थमपि समर्थोऽभवत् । शक्तोऽपि शौरिर्बलात्तं सत्राजित्सकाशान्नापाऽहरत् । अथ गच्छता कालेन मणिभूषितः प्रसेनोऽटव्यां सिंहेन युद्धे निहतः । ततो जाम्बवान् ऋक्ष-राजो जवेन यांतं तं मृगेन्द्रं निहत्य मणिमादाय च बिलमाविवेश । अथ लोका विजने वने प्रसेनं हतं दृष्ट्वा सर्वमिदं मणिलोभात् कृष्णेनैव कृतमिति शशंकिरे । ततो विशुद्धभावः कृष्णोऽपि तं मणिमन्वेष्टुं वनं जगाम । यतः को महानुभावो मिथ्याकलंकं सहेत ? ततो यदुनाथः सिंहेन विदारितं साश्वं प्रसेनमालोक्य तस्याऽविदूरे च विनिपातितं केसरिणमपि ददर्श । सोऽथ मणेरलाभे ऋक्षशंसिनीं पदवीं विज्ञाय गुहां प्रविश्य च तत्र सुकुमारक ! तवैवासौ मणिस्तदर्थं मारोदीरिति बालसान्त्वने धात्रीवाक्यं शुश्राव । ततो ज्ञातवृत्तान्तो-हरिर्जाम्बवन्तं दृष्ट्वा तेन सार्द्धं दिवसानेकविंशतिं युयुधे । अथ मुरारिर्दशग्रीवोग्रसंग्रामश-स्त्रोल्लिखितवक्षसं जाम्बवन्तं विजित्य तेनैव दत्तां बिम्बोष्ठीं जाम्बवतीं लेभे । ततोऽसौ-यौतुके स्यमंतकं समवाप्य कृतकृत्यो मध्वरिर्द्वारकामेत्य च प्रसेनानुजाय सत्राजिते मणिं प्रादात् । अथ प्रसन्नः सत्राजित् केशवाय सत्यभामाप्रमुखास्तिस्रो ललिताननाः कन्याः प्रददौ । अथैकदाऽक्रूरो मिथः साहाय्यसंविदा शतधन्वना सत्राजितं घातयित्वा मणिमपाहरत् । एवं पितरि हते दुःखिता सत्यभामा जतुवेश्मनि धृतराष्ट्रजैर्दग्धेषु पार्थेषु वारणावतवासिनं शार्ङ्गधन्वानं समासाद्य साश्रुः सर्ववृत्तं श्रावयामास । ततो गरुडध्वज-स्तूर्णं द्वारकां समभ्येत्य रामं पुरस्कृत्य च शतधन्वना युयुधे । तस्मिन्नवसरेऽक्रूरो मणि-प्रदस्याऽप्यस्य सहायतां न चक्रे । एतदुचितमेव । यद्धूर्तोः स्वार्थकाले व्यतीते हि कस्या ऽपि निजा न भवंति । ततः कंसारातिः शतयोजनगामिनीं वडवामाशु समारुह्य मिथिला-भिमुखं जवाद्विद्रुतं शतधन्वानं हत्वापि च तं मणिन्नाससाद । अथाऽपन्हुतो मणिरिति-विचिन्त्य मिथ्याऽस्मै क्रुद्धो लांगली द्वारकां न विशामीति कृतनिश्चयो मिथिलां ययौ । ततः कृष्णानुगैर्वृष्णिवीरैः प्रसादितो हलधरस् तत्त्वं विनिश्चित्य द्वारावतीं समाययौ ।

अथ मणिस्फीतोऽक्रूरो बहुदाक्षिण्यैर्यज्ञैः पुण्यं समवाप्य षष्ट्यब्दीं सुखं निनाय । ततो मणौ व्यक्तिं याते सकेशवाद्रामाद् भीतिमवाप्य निशीथेऽक्रूरो द्वारकातो बहिर्जगाम । एवं तस्मिन्निर्गतेऽक्रूरे पाकशासनो नाऽवर्षत् । पूर्वं तु कृष्णेन ज्ञातिभेदभयाच्चिरमुपे-क्षितः । परंतु दुर्भिक्षार्तैर्यादवैः प्रसाद्य स पुनरानीतः । ततो दानपतौ तस्मिन् प्राप्ते पर्जन्यो ववर्ष । अथ बहुतिथे काले याते साम्ना कृष्णेन याचितोऽक्रूरः प्रीतिरक्षणाय

स्वस्वसृसमेतं मणिं तस्मै प्रादात् । ततो विनयार्जवसंतुष्टो यदुपतिस्तस्मै तं प्रत्यदात् । यतो महात्मनां हि कोपः प्रणिपातप्रतीकारो हि भवति। किंतु खलाश्च वैरं नहि विस्मरंति।

एवमाकर्ण्य यदुवंशविस्मितो जनमेजयो वैशंपायनमपृच्छत् । ऋषिराज ! कल्पान्ते यत् कुक्षिकोटरे भुवनावली शेते स भूतभावनः कथं मानुषीगर्भं प्रपेदे ? निशम्यैवं भूपवचनं मुनिः प्रोवाच । राजन् ! जन्मजराव्याधिविनाशकस्य विष्णोरद्भुतं जन्म शृणु । श्रीयज्ञवराहेण येन वेदयज्ञमयं वपुः कृत्वा चतुरर्णवमेखला वसुमती समुद्धृता । येन केसरिणा शंखशुभ्राभिर्नखशुक्तिभिरायुषा सहैव हिरण्यकशिपोर्यशो निष्पीतम् । यः पूर्वं तु खर्वस्ततो ऽप्रमेयप्रांशुरभवत् । यश्च देवानां हर्षो दैत्यानां च विमोहो बभूव। येन दत्तात्रेयावतारेण धर्माचारस्य मज्जतः स्थित्यै वेदानां हस्तावलंबनं कृतम् । यो जामदग्न्यवपुर्धृत्वा कार्तवीर्यस्य कर्मठं दोः सहस्रं मृणालमण्डलीलावं लुलाव। अथ भुवनाभोगभूषणस्य रघुनंदनस्य यस्य पतितोत्पतितैर्दशास्यवदनैर्मुहुः कंदुकामंदविनोदानंदविभ्रमो बभूव । स एव शिशुपालादिभूपालकालः कृष्णो भूभारावताराय वृष्णिकुलेऽभवत् । यश्च युगक्षये सत्वधर्मलतोद्याननवसौरभमाधवः कल्कि र्भविष्यति। एवमाश्चर्यप्रभावस्य तस्य किल्बिषक्षालनक्षमं पुण्यंपीयूषपूर्णं चरितं श्रूयताम्। तस्य तत्त्वेन प्रभावं वक्तुं शेषोऽप्यशक्तः। पुरा वृत्रवधे वृत्ते तारकामये च संग्रामे प्रवृत्ते त्रिदशा विश्वक्सेनं जनार्दनं शरणं जग्मुः। विलोक्यैवं तेन विषमे दैत्यजे भयेऽभयं प्रदत्तम् । ततः संहताः सर्वे दानवाः समराङ्गनं विविशुः। अत्रान्तरे ऋक्षयुतं हैमं रथमारुह्य मायाविशारदो मयः समाययौ। ततः खरसहस्रयुक्तमायसंरथं समारुह्य तारकासुरोऽपि समागच्छत् । तत्र हयग्रीवरथो हयसहस्रयुतस्त्वष्टुश्च मत्तकुंजरयुक्तः स्यन्दनोऽभवत् । अन्ये च विरोचनाद्या वीरा अपि तत्रागत्य समरसम्मुखेऽतिष्ठन् । अत्रान्तरे विश्नुसमाश्वस्ता देवा अपि दिग्गजारूढं सहस्राक्षं पुरस्कृत्य रणक्षेत्रमुपाजग्मुः । तत्र महिषवाहनो यमः श्वेताश्वो वरुणः स्वर्णरथस्थः कुवेरः जलदारूढो वायु र्गरुडारूढो जनार्दनश्च संप्राप्तवान् । ततो रुद्रादित्यमरुद्विश्वसाध्याश्विवसुचारणाः क्षुब्धसैन्यसागरस्य कल्लोला इव संगताः समुद्ययुः । अत्रान्तरे घनघोषगंभीरः समरारंभदुंदुभीरराम । ततः समरे प्रवृत्ते सुरासुरकरोत्सृष्टशस्त्रास्त्रवृष्टिभिस्तुमुलयुद्धमभूत् । ततो दैत्या मायां प्रसारयामासुः । यया देवाः क्षिप्रं चित्रन्यस्ता इव बभूवुः । अथ यमो मायामपसार्य दण्डेन वरुणः पाशेन सहस्राक्षश्च वज्रेण दानवान्निजघान । ततो मयो मायया ऽग्निकोपं प्रवर्तयामास । महेन्द्रो वारुणास्त्रप्रयोगेण तं शमयामास । अथ वरुणाग्रगो रजनीपति र्हिमशिलासंघान् क्षिपन्नुद्ययौ ।

ततस्तुषारवारिपूरैर्भृशं पीडिता दानवा निश्चेष्टा भूत्वा काष्ठपाषाणतुल्यतां प्रापुः । मयोऽथ मायां निवार्य पार्वतीम्मायामत्यजत् । ततो द्रुमशैलनिरुद्धानां स्फुटितायुधवर्मणां देवानां चक्रपाणिं विना मोहो जजृंभे । अथ क्षणात्तदादिष्टावग्निमारुतौ दैत्यसेनां समं विविश्य द्रुमशिलोच्चयान् भस्मकूटावलीशेषानकुरुताम् । ततो दह्यमानदैत्यानां कृतांतहुंकारघोरः कहकहारवोऽभवत् । एवं दितिजमण्डले भंगे देववृन्देषु जयत्सु च त्रिजगद्ग्रासलालसः कालनेमिः समुत्तस्थौ । ततस्तस्य विश्वक्षयाक्षेपदीक्षासमयमण्डलैर्दीप्तायुधप्रभाचक्रैश्च ककुभामालोकोऽभवत् । सोऽथ क्षुब्धाब्धिध्वानया गिरा सहसैव दैत्यानजीवयत् ।

विलोक्यैवं महोत्साहा दैत्या देवैः सह पुनर्योद्धुमुद्यता बभूवुः । ततो महायुद्धं प्रावर्तत । तस्मिन्नवसरे तत् कराकृष्टमौलयोऽस्त्रशस्त्रवृष्टिदलिताः सुरगणाः क्षीणपुण्याः क्षिताविव विमानेभ्यो न्यपतन् । अथ निधनापन्ने धनदे, करुणास्पदे वरुणे वक्रमुखे शक्रे ग्रासशंकिते च शशांके दिनदीपा इव प्रभारहिता देवा बभूवुः । ततो दैत्या मिथः प्रोचुः । अहो मंदरश्मिना रविणा किम् ? वराको वन्हिः शैत्यमभजत् । निश्चले वायौ किमास्था ? हतौजसा यमेन च किम् ? एते रुद्रा मुद्रिकोपमा वसवस्तु व्यसवः किं करिष्यन्ति । ततः संप्राप्तविजयः कालनेमिरनेकधा वपुर्विभज्य स्वयं लोकपालपदेऽतिष्ठत् । तत्र जलं भूत्वा व्याप्तोऽभवत् । वायु भूत्वा स्वयमवात् । श्री सोमसूर्यतनु भूत्वा रात्र्यहानि चकार । स्वयमग्निमुखो भूत्वा च हव्यं जग्राह । ततो देवाधिदेवं शंखचक्रगदापद्मवनमालादिविभूषितं गरुडलांछनं विष्णुं दृष्ट्वा प्रोवाच । अहो बत ! येन दैत्यवधूदृशो निरंजनदशां नीताः सोऽस्माकं परमशत्रु र्लोचनगोचरोऽद्य जातः । अहमिमं हत्वा नृसिंहचरणाक्रान्तिरजोदिग्धसभामण्डपं दैत्यगणहर्षाश्रुवारिभिः क्षालयामीति ब्रुवाणं लीलास्मितसिताधरो विभुरभ्यधात् । शूरा नहि कत्थंते किन्तु पौरुषं दर्शयंति । तच्छ्रुत्वा क्रुद्धो दानवपतिर्देवोरसि सहसा शस्त्रवृष्टिमपातयत् । किम्बहुना । चण्डवेगया तद्गदया सुपर्णोऽप्यकम्पत । एवमालोक्य कोपसंरंभाद् विष्णुः सहस्रशीर्षा सहस्राक्षः सहस्रपाद भूत्वा क्रकचक्रूरं सुदर्शनमासाद्य च दानवाननकानने चिक्षेप । ततो रविप्रभं विष्णुभजनिर्मुक्तं तच् चक्रं पूर्वं शत्रुवक्त्रशतं छित्वाऽनंतरं कालनेमिशिर च्चकर्त । एवं सर्वतः पाणिपादेन विश्वरूपेण सर्वत्र पीडिताः सर्वे दानवाः स्मृतिशेषतां प्रययुः । अथ दुर्वृत्ते निवृत्ते धर्मकर्मणि च प्रवृत्ते विरंचिप्रमुखैर्देवै र्नारदादिमहर्षिभिश्च स्तूयमानो हरिः स्वपदे शक्रमधिष्ठाप्य ब्रह्मसद्म ययौ । ततो भगवानदभ्राभ्रोत्तरच्छदेऽम्बुधौ योगनिद्रां भेजे । अथ शेषशायिनं तं कृष्णं योगिनिद्रा मत्तालिमाला कमलाकरमिव सिषेवे ।

ततो वर्षसहस्रेषु यातेषु कृते कृते विनिवृत्तायां त्रेतायां द्वापरे च तनुतां गते सहस्राक्षपुरस्सरा देवा विरंचिमतमनुसृत्य जगत्कार्यार्थं तं तुष्टुवुः । देव ! योगनिद्रापदेशेन गर्भीकृत-जगत्त्रये त्वयि सुप्तसंविदा कर्तव्यं न जानीमः । प्रभो ! त्रैलोक्यकर्मणां मुद्रां निद्रां त्यज । जगदीश ! भास्वतो जन्मक्षेत्रेण दक्षिणनेत्रेण कमलानीव जगंति विकासय । सर्वेश ! पीयूषवर्षिणा चन्द्रोदयेन कुमुदानीव भूतानि संजीवय । देवाधिदेव ! जगतां कार्यगौरवाद्देवाः प्रतीक्षंते । एषा विज्ञप्तिः श्रूयताम् । निशम्यैवं देवर्षिवचनं निद्राविषदलोचनो भगवान् देवानब्रवीत् । लोकपालानां मंत्रशंसी समागयोऽयं किम् ? अपि नाम न दैत्येन्द्रैस्त्रिदश-भूमयः क्रान्ताः ? इयं वो फुल्लाब्जपुंजजयिनी वदनच्छाया पराभवं न शंसति । अयंच पद्मजन्मा पितामहः स्वयमायातः । एतज्जगद्धितार्थं नाल्पकार्यं भविष्यतीति वादिनि देवेशे चतुराननो बभाषे । सर्वात्मन् ! त्वमेव सर्वमात्मना कार्यं जानीषे । किन्तु भवतः प्रश्नाज्ञाः परेण न विलङ्घ्यते । अयं सहस्रशीर्षः शेषस्ते स्तुतिं जानाति । सरस्वती देवी वैषा ते महिम्नः पारमेति । नाथ ! यद्यपि सदाचारानुवर्तिनः सर्वभूपाला: प्रवृद्धाः । परंतु प्रभूतबलसंभारैर्महान् क्षितिभारो बाधते । प्रभो ! महीमज्जनशंकया महीयसीं चिन्तामनुभवामः । एवं प्रजापतिवचः श्रुत्वा भगवान् विष्णुस्तथेति व्याहृत्य च त्रिदशैः सार्धममरावतीमयासीत् । ततो रत्नमंदिरसुन्दरां कल्पपादपवतीं सभां प्रविश्य तत्र चन्द्रकान्तासने तस्थौ । विलोक्यैवं देवगणा अपि हेमरत्नासनान्यवापुः । अथ ब्रह्म वाक्याद्वेत्रपाणौ समीरणे प्रतीहारे निवातसुप्तदुग्धाब्धिनिःशब्दसदोऽभवत् । अत्रान्तरे पद्मपलाशाक्षी विविधरत्नांशुशबलस्तनी पृथ्वी देवी विष्णोरग्रे पादपीठे समुपविश्य स-विनयं प्रोवाच । देव ! त्वच्चरणारविंदमध्यविश्रांतिलालिताऽहं जगद्भारपरिश्रमं न कदा-चन जाने । क्वाऽहं ललना क्वचेमे कुलभूधराः ? किन्त्वेतत् त्वदवष्टंभसंभारस्य विजृं-भितं विद्यते । कृपानाथ ! पुरा त्वयादिवराहेणैव सलिले मज्जन्ती नलिनीदललीलया दंष्ट्राग्रेणाऽहमुद्धृताऽऽसम् । पूर्वं जगत्येकार्णवे त्वया मधुकैटभौ निर्मथ्य तन्मेदसा घनीभूता-ऽहं मेदिनी कृता । ततो भार्गवेण कोपादसकृत् क्षत्रसंक्षये कृते महता कालेन मनु-वंशे नरेश्वराः पुनरुद्भूताः । किम्बहुना । तेषां गजबाजिसमाकुले सुभटसंघाते वृद्ध्या च निर्विवरीभूते भारेण निपीडिताऽस्मि । सम्प्रति तत् क्षयोपायेऽपि क्षणमवधानलवः क्रियताम् । त्रिदशेशानां शरण्यं त्वामहमद्य शरणंगताऽस्मि । यथा सुवर्णस्य गुरु रग्निर्गवां गुरुः सूर्यस्तारकाणां च गुरुः सोमस्तथा मम तु गुरुर्भवानस्ति । निशम्यैवं धरा-वाक्यं विष्णुना तिर्यगीक्षितस्तत्समीहिततत्त्वज्ञः पितामहो देवगणान्प्राह । महाशयाः !

भूभूतये भवद्भिरंशावतारः क्रियताम् । विष्णुरेषः क्षितौ साक्षादवतारेऽपि कृतक्षणो-ऽस्ति । पुराऽहं जलधितटे कश्यपेन सह स्थिताऽभवम् । तत्र सगंगो जलनिधिर्मां प्लावयामास । ततोऽहं क्रुधा तमशपम् । भो राजवेश ! शांतो भवेत्युक्तमात्रः शांतिमवाप । स एव मच्छापाच्छांतनु र्नृपोऽभवत् । सा च गंगाऽपि वसुजननी तमनुगता प्रिया बभूव । तद्वंशे धृतराष्ट्रपाण्डुविदुरा भवंतु । धर्माऽनिलेन्द्राश्विभागाः पांडुपुत्राः संतु । सानुजो धृतराष्ट्रसूनुः कलेरंशः समुत्पद्यताम् । रुद्रचन्द्र गंधर्वराक्षसपिशाचाश्चापि भवंतु । ततस्तेषां परस्परं वैरारणिसमुद्भवे घोरे रणानिले घनंक्षितिपकाननं क्षयं यातु । प्रजापतिरित्यु-क्त्वा तान् वसुंधरासहितान् विससर्ज । ततस्तत् समादिष्टास्त्रिदशाः स्वांशैः क्ष्मामवात-रन् । अत्रान्तरे हर्यंशश्चन्दोनिधिः कलिकेलिकुतूहली वीणां वहन्नारदोऽपि च तत्रा-गत्य प्रणतिपुरस्सरमुवाद । भगवन् ! यद्यपि भुवि भवद्वाक्यात् त्रिदशेश्वरा भूपालवंशेष्व वतीर्णाः । परंत्वेषः श्रमस्तु विफल एव । परमेष्ठिनं त्वां विना देवगणाः किं करिष्यंति ? किम्बहुना । भवत्साहाय्यमलब्ध्वा ते तृणांचनेऽप्यसमर्थाः । पुरा भवता ये दानवा हतास्ते भुवि संभूताः । अतो भवानेवाऽवतीर्य तेषां मूलक्षये क्षमोऽस्ति । पुरा राघ-वानुजः शत्रुघ्नो लवणासुरं हत्वा मधुवनं छित्वा च तत्र मथुरापुरीमावासयामास । तस्यां यः कंसनामको नृपोऽजायत । स पूर्वजन्मनि कालनेमिर्महासुरोऽभवत् । अपरं च । त्वया ये हयग्रीवादयो दैत्या हतास्ते केशिधेनुकारिष्टप्रलंबाद्या भुवि स्थितास्संति । भगवन् ! तेषां वधाय स्वयमुद्यमः क्रियताम् । नारदेनेत्यभिहिते जगत्पतिस्तथेत्यूचे । ततो भग-वता जन्मधामोचित्तं पृष्टो ब्रह्माऽवदत् । प्रभो ! ते समुचितः पिता श्रूयताम् । पुरा कश्यपोऽदितिसुरभिभ्यां पत्नीभ्यां सह पुत्रार्थं वृहद्यज्ञमकरोत् । स महायशा यादवकुले वसुदेवो जातः । तस्य च त उभे दयिते देवकीरोहिण्यावभूताम् । सम्प्रति तस्य पुत्र-त्वमासाद्य त्वं गोपालक्रीडारसाकुलोऽत्यद्भुतानि कर्माणि दर्शयन् दानवाञ्जहि । जगद्वन्द्यः स धन्यः कस्य वा स्पृहास्पदं नास्ति । य स्तातेति जल्पतस्तवाऽव्यक्तवर्णं वचः श्रोष्य तीति पद्मोद्भवगिरा हरौ कृताभ्युपगमे च स्वेच्छाविहारीदेवर्षिनारदः प्रययौ ।

सोऽथ लोकसंचरणव्रतो महीमेत्य मथुरां विवेश । ततस्तं वीरवरं कंसं रत्नसिंहासनस्थं दृष्ट्वा-ऽतिविस्मितोऽभवत् । अथ राजपूजितोमुनिरुपविश्य बलगर्वितं कंसमुवाच । राजन् ! त्रिभुवनयात्रिणा मया सुरसभान्तरे तव वधोपाये यो मंत्रः श्रुतस्तं शृणु । स्वसुस्ते देवक्या योऽष्टमो गर्भो भविता । स एव सानुगस्य ते मृत्युस्तैर्विहित इत्युदीर्य मुनौ यातेऽन्तः कोपेऽपि बहिःस्थितः कंसो जहास । ततोऽवसरे विसर्जितायां सभायां सचिवानुवाद । अहोनु !

भेदशीलेन मुनिना नाकौकसां विषये यो मंत्रो नः कथितः । तदर्थं विचारयत । अहं तु देवानां नितरां प्रतिकूलोऽस्मि । अद्यप्रभृति केशिमुख्या देवोत्सादनार्थमवन्यां विचरंतु । लोके प्रलंबधेनुकारिष्टपूतनाकालियादयो देवद्वेषाद् यज्वनां पराभवं कुर्वन्तु । देवकीगर्भनिधने सदाऽवहितास्तिष्ठंतु । नागरिकाः सर्वे मम हितरतास्संतीति कथयित्वा कंसो बहिस्तु निर्विकारोऽभवत् । परंतस्तु विषदुः सहं चिंतासंतापमुवाह । तस्मिन्नेवावसरे जगद्रक्षाकृतक्षणः कृष्णः पातालमेत्य तान् कालनेमिजान् गर्भानपश्यत् । पुरा ते तपसोग्रेण कमलजाद्वरान् प्रापुः । परंतु ब्रह्मनिंदको हिरण्यकशिपुस्तानेवमशपत् । यन् मामनादृत्य युष्माभिर्विधिराराधितस्तस्माद् यूयं भुवि गर्भान्मृताः पितुः पूर्वं च वध्याः भविष्यथ । अथ तच्छापविवशान् सलिलान्तरनिश्चलान् सुप्तांश्चतानवलोक्य स्वरूपिणीं निद्रां भगवानूचे । देवि ! जीवानेतान् षट्सु देवकी गर्भेषु स्वयं क्षिप । तत्र स्वचिंतया तेषामंतकः स्वयं कंसो भविष्यति । सप्तमो देवकीगर्भो विनिमयेन त्याज्यः । तदन्तेऽष्टमो गर्भः स्वयमहं भविष्यामि । देवि ! गोत्रजे नंदगोपस्य यशोदाख्या स्ति कुटुम्बिनी । तद्गर्भे मज्जन्मसमये त्वमपि स्वयमवतर । मासेष्टमे नवम्यां तु कृष्णरात्र्यामावयोर्जन्मनि व्यत्यासो भविता । तत स्त्वं कंसपुरुषैः शिलायां भृशमाहता दिव्यवपुषा दिवं गमिष्यसि । तत्र त्वं शक्रभगिनी भूत्वा देववंद्या भविष्यसि । ततः सुंभ निसुंभादीन् राक्षसान्हत्वा विन्ध्ये पदं करिष्यसि । तत्र व्यक्ताऽव्यक्ता च पराशक्तिस्त्वं श्रीः, ह्रीः, माया, मतिः, पुष्टिः सिद्धिदायिनी पीयूषवर्षिणी सर्वपापक्षयकरीति नानानामभि र्विख्याता भविष्यसीति समादिश्य निद्रादेवीं तत्कार्यं मनसा ध्यात्वा च भगवान्हरिः स्वधाम जगाम । अथ कंसशासनात् क्रूरकिंकरैस्तेषु षट्सु देवकीगर्भेषु हतेषु सप्तमेऽपि संकर्षणाभिधे गर्भे समाकृष्य च नीतेऽष्टमं जगन्नाथं गर्भं श्रीदेवकी दध्रे । ततः संपूर्णेऽष्टमे मासि रात्र्यर्धेऽभिजित युते च देवकी प्राची प्रभाकरमिव श्रीविष्णुमसूत । ततो धर्मप्राणा देवा वेदध्वनिपूर्विकां पुष्पवृष्टिं चक्रुः । अच्युतजन्मना लोकेषु प्रसन्नेषु यशोदा तस्मिन्नेव क्षणे विषदद्युतिं कन्यामजीजनत् । अथ निद्रया रक्षजने मोहिते तत्प्रेरितो वसुदेवो गोकुलं गत्वा नंदगोपगृहे पुत्रं विन्यस्य तत्सुतां समादाय पुनरागत्य च देवकीगर्भशयने तां ररक्ष ।

ततः प्रबुद्धैस्तै रक्षकैः कन्येयं जातेति कंसाय निवेदयामासुः । अथ तच्छासनात् पृथुशिलातले पातिताऽग्निशिखेव दीप्तायुधानेकभुजा सा सहसाऽऽकाशमाविशंती प्रोवाच । कंस ! प्राप्तेऽवसरे कृष्णेन कृष्यमाणस्य तव शोणितं पास्यामीत्यवगच्छ । निशम्यैवं देवीवाक्यं विफलोद्योगलज्जितः कंसश्चकम्पे । सोऽथ श्रीदेवकीं समभ्यत्ये मूर्ध्ना प्रणिपत्य

प्रसाद्य च जगाद । मातः ! कालेनैव ते गर्भाः क्षपिता मम तु दोषस्तत्र न विद्यते। अथ शंकितो वसुदेवो नंदगोपगृहेष्वेव शीतांशुशुभ्रं संकर्षणं यशोदायां न्यासीकृत्य गूढे च कृष्णवृत्तान्ते तच्चिन्तानिरतो बभूव । ततस्तेन पुत्रहितैषिणा प्रेरितो नंदगोपो गोकुलैर्वृतो दैत्यकंटकपन्नगैर्घोरं वृन्दावनं परित्यज्य यमुनास्निग्धपादपे गोवर्द्धनवनोपांते वतिविन्ने च व्रजं चक्रे । तत्र कालिन्दीतीरवानीरलतादोलायितार्भके मरकतद्युतिः कृष्णः शीतांशुशुभ्रेण भ्रात्रा व्यवर्धत । अथैकदा यशोदा स्तन्यतृप्तं प्रसुप्तं नंदनंदनं शकटाधोभागे समुत्सृज्य यमुनां ययौ । सोऽथ प्रबुद्धः शनकैः पाणिपादं मुहुः क्षिपन् चरणावूर्ध्वं प्रसार्य च रुरोद । किम्बहुना । पादेनैकेन शकटं विपर्यस्तमधोव्यधात् । अत्रान्तरे प्रस्नुतस्तनी यशोदा समभ्येत्य शकटं भग्नं च वीक्ष्य सहसा चकम्पे । ततो बालकं स्वस्थमादाय विशंकिताऽपृच्छत् । अहो ! मत्तवृषाहतीर्विना केनेदं शकटं भग्नं ? एतदाकर्ण्य तत्रत्याः शिशवः कृष्णेनेति बभाषिरे । एतदाकर्ण्य यशोदाऽतिचकिता बभूव ।

अथैकदा कृष्णोत्सवे लोके सुप्ते निशि मायया प्रस्नुतस्तनी पूतना नाम राक्षसी समाययौ । साऽथ तस्य शिशो र्निधनकांक्षिणी तस्य वदने स्तनं ददौ । सोऽथ प्राणैः सह तस्याः स्तनमाकृष्य चकर्त । एवं व्याघ्रघोषायां हतायां तस्यां भयादुत्थितः सभार्यो नंदगोपो जलनिधौ मग्नोन्मग्न इव बभूव । ततस्त्रैलोक्याक्रमणक्षमोऽपि सोऽक्रूरैर्गतागतैः शनकैश्चरणन्यासं कुर्वन् बंधूना हर्षं बबंध । अथ गच्छता कालेन वने वर्धमानौ तौ रामकृष्णौ पंचाननकिशोरकाविव व्यराजेताम् । अथैकदा यशोदा महाजवं तं धर्तुं न शशाक । तदा धीरा सा दाम्नोदरे समाबबंध । ततोऽसौ दामोदर इति नाम्ना विख्यातोऽभवत् । सोऽथ केलिचतुरो दामबद्धमुलूखलं तरसा च समाकृष्य वने विचचार । विलोक्यैवं सर्वेऽपि तत्रत्या गोपाः परमविस्मयं प्रययुः। अथाऽसौ यमुनातीरे संहतावर्जुनद्रुमौ समवाप्य तन्मध्यगतो बलाच्चकर्ष । येन तद्बलोन्मूलितौ तौ महाद्रुमौ सहसाऽपपप्ताम् । विलोक्यैवं भयसमयसमाकुला बालका यशोदामुपसृत्य प्रोचुः । अयि प्रमादशीले ! त्वं तु सुखसुप्तं बालं गणयसि । परन्तु पूज्यौ तौ महाद्रुमौ तव पुत्रोपरि पतितौ स्तः । दैवान्महाभयान्मुक्तं दारकं गत्वा पश्येत्यभिधाय स्थितेषु गोपबालकेषु स्वेदस्नातेव यशोदा सहसा भयकम्पिताऽभवत् । साऽथ तयोर्महापादपयो र्मध्ये सुतमवलोक्य क्रमशः संत्रासप्रसादविस्मयानयासीत् । ततः सर्वे गोपवृद्धाः ससंभ्रमं समभ्येत्य प्रोचुः । केनाऽपि घोषदेवेन द्रुमाविमौ पातितौ । अत्र मेघनिर्घातोऽपि यदा नाऽभवत्। तदा कथं व्यभ्रे विद्युदागमः ? अपरं च। नेहात्र कश्चिन्मत्तद्विपः। पुनः कस्माद् द्रुमयोः

क्षयो बभूवेति वादिनि गोपालमण्डले नन्दः सासूयं यशोदामवलोकयन् सुतं जग्राह । एवं स्ववधूं निंदति सहानुगे प्रत्यायाते च नंदगोपे गृहेगृहे द्रुमभंगकथा विस्मयोऽभवत् । ततस्तौ किंचिदुन्मुक्तबाल्यौ नीलपीताम्बरौ काकपक्षांकौ संकर्षणाच्युतौ विचित्रां शोभां दधानौ वने चेरतुः। अथैकदा मयूरपक्षाभरणौ गोपदारकसमेतौ राम केशवौ वाणांककेलिकोदण्ड दण्डिकान्नीत्वा कालिन्दीसुन्दरं वृंदावनोपांतं ययतुः । तत्र सेव्यसंश्रये निर्भये गोकुले गोपकुले च निविष्टे कोऽप्यपूर्वो नवकाननसंभोगोत्सवोऽभवत् । ततो नवोद्गतपयोधरां बधूपमां श्यामां प्रावृषं दृष्ट्वा संकर्षणोऽब्रवीत् । कृष्ण ! यामुनैर्वारिभिरिव घनै र्व्याप्तं व्योम पश्य । वनमालावलंबिनां तडित्पीतांबरजुषां वारिवाहानां तवेव श्यामलं वपुर्विभाति । निशम्यैवमग्रजवचनं प्रेमगर्भितं श्री लीलाभरणो हरिरतीव संतुष्टोऽभवत् । अथैकदा हरि र्विनैव बलभद्रमन्यगोपकुमारैः सह मधुवनं प्रविवेश । तत्र सघनच्छायं भूभूषणं वनदेवीनां च प्रासादोपमं भाण्डीरं नाम पादपं दृष्ट्वा शौरिस्तन्मूले गीतवाद्यादि विनोदांश्चकार । सोऽथ श्री पृथिव्या दीर्घवेणीव विभूषितां फेनबुद्बुदच्छत्रमालां त्वंगत्तरंगकुटिलां शफरोत्फालस्फुरत्स्फीतफणांकितां च कालिन्दीं ददर्श । तत्र पातालतल गंभीरभीषणं, तमोमलिनमकारणभयप्रदं च ह्रदं दूरान् निरीक्ष्य क्षणं श्री हरिरचिंतयत् । स कालियो नाम महाफणी सर्वप्राणिभयं करोऽस्मिन् निवसति । येन विषनिःश्वासैरियं यमुनातटी दूषितास्ति । सोऽयं मम संभवः प्रायो दुरात्मनां विनाशायेति विचिन्त्य बद्धकक्ष्यो ह्रदोपान्तकदम्बतरुपुत्रकं समारुह्य च नभसोंऽभसि चुकूर्द । ततः स दहनोद्गारविषफूत्कारभयंकरः पंचास्यो रक्तनेत्रश्च कालियोऽदृश्यत । अत्रान्तरे कृष्णभोगिना वेष्ट्यमानः श्रीकृष्णो यामुनैर्जलै र्वलयितस्तमालतरुरिव विरेजे । ततो गोपदारकाः सानुगेन सर्पराजेन वेष्टितं दंष्ट्राकोटिविषोल्काभिश्च व्याप्तं गोविन्दं वीक्ष्य संत्रस्ताः स्रस्तकंदुका श्च परस्परं प्रोचुः । अहो ! कीदृशः संकटः समापतितः। ततो व्रजमभ्येत्य चक्रन्दुः। भो भो लोकाः ! एष दामोदरो घोरे कालियांभसि निपतितः । सहसा कालकल्पेन भोगिना च विवेष्टितः । तच्छ्रुत्वा सर्वे नन्दप्रभृतयो गोपाः सत्वरमधावन् । एवं सन्देहान्दोलिताशये लोकसमुदाये फणिव्याप्तपुत्रवक्त्रावलोकिनि नंदे तारप्रलापमुखरे लोके यशोदा दुःखदारिते च स्त्रीजने तीरमभ्येत्य संकर्षणेन संज्ञयैव विबोधितः श्रीकृष्णो भुजाभ्यां भोगिनो भीषणभोगं भोगमास्फाल्य चरणाभ्यां समाक्रम्य च बन्धाद्विनिर्गतः । ततो मधुसूदनो ज्वलनोल्वणं सरत्नं फणाचक्रमवनाम्य मध्यमं शिरस्फारमारुरोह । ततश्चराचर गुरुस्स माधवः सविभ्रमं पादन्यासैर्नृत्यन्निव तमुन्ममर्द । ततः स्रस्तदर्पो निर्विषः स

रुधिरोद्गारगलिताक्षरं कृष्णमभ्यधात्। प्रभो! सर्वात्मना त्वया भीतोऽहं संरक्षणीयः। ममेदमंजलिव्यंजनं दैन्यं जीवपुण्यप्रदं भवतु। निशम्यैवं दामोदरो दीनभुजगाधिपं प्रोवाच। भवता विना ह्रदोऽयं सर्वसेव्यः शिवाचारश्चास्तु। साम्प्रतं यदिजीवितं वांछसि। तर्हि तु त्वमम्बुधिं गच्छ। तत्र मत्पादमुद्रा ते तार्क्ष्यरक्षिणी भविष्यति। एवं तच्छासनात् सानुगे भुजगे क्षणात् प्रयाते सानंदविस्मया गोपाः श्रीकृष्णं प्रशंसन्तो गृहान्ययुः।

अथ कदाचित् केलिकलौ हलधराच्युतौ विशालतालहिंतालतमालश्यामलं वनं विविशतुः। तत्र पंचतालफलास्वादनंदितोन्मदमानसौ डिम्बक्रीडाडम्बरतत्परौ च तौ चेरतुः। अत्रान्तरे तालवनाश्रयो धेनुकाख्यो दैत्यः खररूपं धृत्वाऽत्र समाययौ। सोऽथ सानुगः कोपाद्रुधिरारुणलोचनो रामकृष्णवधेप्सया खुरैर्भूमिं विदारयन् धूमोद्गतैरिव व्याप्तं वनं चकार। ततो वज्राग्रदशनायुधः स हेषाभिः पातालतलवासिनां दैत्यानामाह्वानं कुर्वन्निव जवात्संकर्षणमभ्यधावत्। सोऽथ दशनै रोहिणेयमसंभ्रमं विदार्य प्रहाराय पराङ्मुखो बभूव। विलोक्यैवं हलायुधस्ताभ्यामेव खुराभ्यां प्रहारिणं तं समादाय फलार्थीव तालशिखरे चिक्षेप। ततो भग्नोरुतरुस्कंधस्त्रुट्यत्कठिनकीकसः स तालफलैः सह सहसा भुवि निपपात। एवं तस्मिन्हते सानुगे खरपराक्रमे तत्तालवनं वीतविघ्नं सर्वसाधारणसेव्यं चाऽभवत्। एवमालोक्य सर्वे व्रजवासिनः श्रीहलायुधं भूयोभूयः प्रशशंसुः।

अथ गच्छता कालेन केलिशालिनौ तौ भूयोऽपि भाण्डीरविपिनं गत्वा गोपपुत्रैः सह द्वन्द्वोत्पतनलीलाभिर्विजह्रतुः। अत्रान्तरे वन्यकुसुमोत्तंसभूषणः प्रलम्बासुरः कपटगोपवेशं धृत्वा तत्र समाययौ। सोऽथ छन्दानुवर्ती क्रीडाभिस्तौ तोषयित्वा कदाचित् कृष्णाग्रजं स्कन्धमारूढं जहार। ततो द्रुतगतिः स विजने निजरूपं दर्शयामास। येन सद्यैव तमः पटावृता दिशो बभूवुः। एवमालोक्य धेनुकान्तको भूमिधृतिक्षमं निजबलं समास्थाय च मुष्टिना मूर्ध्नि प्रलंबासुरं जघान। किं बहुना। तन्मुष्टिपाताद्विघटितस्फुटललाटकर्परं कीर्णरक्तच्छटं च दैत्यशिरः काये विवेश। ततो रामे स्कन्धादवप्लुते प्रलम्बस्य विस्फारं लंबमानभुजद्वयं च कलेवरं धरणीतले निपपात। ज्ञात्वैवं गोपबालकाः प्रासीदन्।

एवं तत्र बलिना बलदेवेन प्रलंबे विनिपातिते शनैश्शनैर्मासचतुष्टये च प्रयाते व्रजवासिनां वार्षिकक्रतूत्सवसमारंभो बभूव। ततस्तास्मिन् व्रजमहोत्सवे प्रफुल्लनीलोत्पललोचना सप्तच्छदामोदमालिनी हंसनूपुरा सितांभोदभक्तिस्मेराम्बरा च शरन्निमंत्रितवधूरिव समदृश्यत। तत्र कृष्णो गोपगिरा मरुत्पतियागं ज्ञात्वा सस्मितमवोचत्। अहो नु! मुग्धेयं भवन्मतिर्हास्यजननी। यागोऽयं शक्राय नार्हः। यतो गोपा हि गिरि-

दैवता भवंति । निशम्यैवं श्रीकृष्णवचनं गोपा घृतक्षीरोरुनिर्भरान् भक्ष्यपदार्थान् गिरिराजाय गोवर्द्धनाय प्रीत्या समर्पयामासुः । एवं बह्वन्नसंभृते तस्मिन् गोवर्धनगिरि यज्ञे सदधिच्छन्नैः पायसैः पृथ्वी हिमच्छन्नेव बभूव । तास्मिन्यागे मयूरपत्राभरणाः कुसुमोत्तंसशेखराश्च गोकुलसहिता गोपा अतिशयेन बभुः । ततो विश्वात्मा कृष्णो रूपेणैकेन तु गिरिवर्ष्मणा तै र्निवेदितं सर्वं बुभुजे । अपरेण च गोपैः सह तद् दिव्यं महद्वपुः प्रणनाम । तस्मिन् समये गोपदारका नाना व्यंजनानि भुक्त्वा ननन्दुः ।

अथ तस्मिन्महोत्सवे वृत्ते क्रुधा ज्वलञ्छतमन्युर्व्रजोच्छित्यै घोरान् संवर्तकादीन् वारिदानादिदेश । ततस्तेन प्रेरितास्ते नीलशैलशिलाघना जलदाः कालरात्रिशतै रिव जगद् व्याप्तं चक्रुः । अथ करिकराकाराः स्तंभसंरंभविभ्रमा धाराधरधारा धरण्यां न्यपतन् । तस्मिन्नवसरे गवां क्रन्दनं विलोक्य गोपा हाहाकारं कर्तुमारब्धाः । तच्छ्रुत्वा जगद्गोप्ता गोविन्दोऽब्रवीत् । भो भो गोपा ! मा भैष्ट । अहमिमं शैलेन्द्रमुत्पाट्य समुपस्थितानां गवां विपुलसंश्रयं छत्री करोमि । निश्चित्यैवं धीरो धिया भूधरे दृशं निदधे । ततो विश्वात्मा सपदि महता बलेन दोर्भ्यां स्फुटन्मूलशिलातलं गोवर्धनमुज्जहार । एवं तस्मिन् श्रीगोविन्ददोर्दण्डछत्रीभूतेमहीभृति शेषा गिरयो मिथः प्रोचुः । वज्रधर ! सुचिरादयं शैलः खेचरः संजातः । सम्प्रति त्वं पक्षच्छेदमदं त्यज । ततः कृष्ण गिरा गोपा निखिलै र्गोधनैः सह शान्तिलाभाय विपुलं शैलोत्पाटनभूगृहं विविशुः । एवं तस्मिन् सुविशाले गिरितटे जलवाताद्युपद्रवरहिता श्रीजगन्निवासेन च सुरक्षिता गोपास् तस्थुः । अथ मरुत्पतिर्वृष्टिच्छन्ने सप्तरात्रे च प्रयाते विफलोद्योगलज्जितो जलदैः सह जगाम । ततो जगद्गुरु र्लीलयैव विपुलाभोगतुंगशृंगं तं गिरिराजं निजपदे न्यवेशयत् । अत्रान्तरेऽतिविस्मितः सहस्राक्षस्तं गोवर्धनोद्धारकं द्रष्टुं समाययौ । सोऽथ जंगमकैलाससदृशात् सुरद्विपादवतीर्य गोवर्धनशिलासीनं श्री मधुसूदनं ददर्श । ततो गोपवेशधरं हरिं विलोक्य मनसा सहस्रनेत्रमात्मानं भूयो भूयः प्रशशंस । ततः शक्रः केशवमभ्येत्य प्रणतिपुरस्सरं प्रोवाच । व्रजराज ! यदतिदैवमिदं तवकर्माऽत्र किमद्भुतम् ? यस्याल्पीयसी शक्तिरपि समग्रजगतां गतिरस्ति । देव ! सर्वलोकोपरि कामधेनवो वर्तन्ते । तासां त्रिदशपूज्यानां ब्रह्मणश्चाऽपि शासनादहं गोपालं त्वां राज्येऽभिषेक्तुं संप्राप्तोऽस्मीत्यभिधाय रत्नकुंभेन तन्मूर्ध्नि पयोऽवर्षत् । एवमिन्द्रोऽभिषिच्योपेन्द्रं पुनः पुनः प्रसाद्य च जगाद । यदुनाथ ! दैत्यच्छिदा त्वया केशिकंसबधे कृते जनकः स्वस्रेयो बन्धुश्च सदैव परिपाल्यः । स धनंजयो भवत्साहाय्येनावश्यं पृथ्वीं जेष्यति । निशम्यैवं नम्रनिवेदनं

शक्रस्य भारतवृत्तान्तं जानन् यदुनंदनो भवत्वेवमिति प्रोवाच । ततो जंभारिः सादरमाभिवाद्य नंदनंदनं सुरगजं समारुह्य च स्वसदनं जगाम । एवं गोपा गोपवेशधरं तं कृष्णं देवाधिदेवं मत्वा तच्छक्त्या मुद्रिता इव न किंचिदूचिरे । ततो जना निवृत्ताशेषशैशवं निर्भरतारुण्यलावण्यं च श्यामसुन्दरं नयनैः पपुः । अथैकदा रतिप्रियः स पूर्णचन्द्रस्मितसितासु शरन्निशासु हरिणीहारिनेत्राभिर्विजहार । तत्र छेकोक्तिषु कृताभ्यासा वेशकर्मविशारदास्ता गोपाङ्गना विभ्रमेषु कृतक्षणा बभुः । तल्लीलानुकृतौ प्रयत्नस्तत्कथा श्रवणेऽनुरागस्तत् स्वैरभाषणे च कोऽप्यपूर्वो हर्षो व्रजयोषितामभूत् । तासाम्मुग्धानामकृतकस्मेरस्फुरिताधरपल्लववदनं हरेरधिकं प्रीतये बभूव । अस्मिन् समये यद् गुरुजनवचनानि विस्मृत्य त्यक्तगृहकृत्याः स्वजने च द्वेषिण्यो नार्यो बभूवु स्तत् सर्वं कृष्णभक्ति माहात्म्य मेवाऽभवत् । तत्र विविध चेष्टाभि र्मोहनं परितोषयंत्योऽपि तं निर्विकारमेव मेनिरे ।

अथैकदा ललनाकेलिशालिनि केशवे मत्तवृषाकृतिररिष्टनामादैत्यः प्रदोषांतेऽदृश्यत । ततस्तीक्ष्णशृंगमरुणेक्षणं सहसा प्रहाराभिमुखं च तं विलोक्य कोपाकुलोऽच्युतस्तस्य कंठं निपीड्य जवान्मूर्ध्नि पदं न्यधात् । ततोऽस्य शृंगमेकं समुत्पाट्य हरिर्वदने जघान । एवं तीक्ष्णशृंगाभिहतः स दानवो भुवि निपपात । विलोक्यैवं सर्वास्तत्रत्या गोपांगना हर्षमवाप्य गोपीजनवल्लभं मुहुर्मुहुः प्राशंसन् । एवमरिष्टे देवरिपौ विनष्टे मथुराधिपतेः पुरः शौरिप्रभावः पप्रथे । अथैकदा जनसंचाररहिते निशीथे कंसो वृष्णि वृद्धान् हार्दिक्याक्रूरसात्यकिमुखान् नयकोविदान् समाहूय वसुदेवसमेतं पितरमुग्रसेनं च जगाद । तात ! प्रमादात् किंवाऽवलेपाद् विस्मृतेनाऽल्पकेन नश्चूडामणिषु चरणप्रभवंरजो विन्यस्तम् । ये सुरगुरोरपि साम्यं न सहंते । ये च युधि वज्रायुधेनाऽपि स्पर्धया लज्जंते । ते यूयं काष्ठलोष्ठोपमा जाताः । श्रूयते नंदगोपस्य यः प्रवृद्धचरितः शिशुर्जातः । स दैत्यानामपि शंकातंकगुरुरभवत् । येन कालियमहासर्पस्य मूर्ध्नि चरणौ विन्यस्य यशोयुतानि शूरशिरांसि खर्वीकृतानि । येन प्रलम्बारिष्टधेनुका हताः । सप्ताहं गोवर्धनगिरिश्च पाणिना धृतः । स कस्य न विस्मयाय ? एवमालोक्य भवद्भिरुपायश्चिन्त्यताम् । पुरा स्वयं नारदेनैत्य कथितं । यो वसुदेवसुतः कृष्णो नंदगोपगृहे स्थितोऽस्ति । या च नंदगोपसुता त्वया शिलायामाहता। सा विन्ध्यवनं गत्वा पुलिन्दशबरार्चिता तिष्ठति । यया शुंभानिशुंभौ निहतौ गर्भयोश्च व्यत्ययो विहितः । स कृष्णस्ते भयस्थानमित्युक्त्वा श्रीनारदो जगाम । सोऽयं कृतघ्नो मे बंधुर्वसुदेवस्तवान्तिके स्थितः । अहो ! निजगृहे सर्पो धृतः । मिथ्या धवलकूर्चोऽयं बंधुच्छद्मा रिपुरस्ति । यदि साग्रजः सोऽस्मान् प्रति साधुर्भवेत्तर्हि का क्षति बंधुमध्ये मे भोगभागी

भविष्यति । दानपतिरक्रूरो मद्गिरा स्वयं व्रजं यातु । एतेन तौ समाहूतौ दारकौ द्रष्टुमिच्छामि । करदा नंदगोपप्रभृतयो मम शासनात् धनुर्मखे समायांतु । अत्रत्या वीरास्तौ कृष्णसंकर्षणौ विलोक्य प्रहृष्यंतीति मन्ये । नियुद्धकुशलौ तौ मल्लाभ्यां युध्यमानौ मे रंगे प्रीतिं करिष्यतः । निशम्यैवं कंसवाक्यमक्रूरो दूरदर्शी श्रीकृष्णचंद्रदर्शनलालसया व्रजमगात् । एवमक्रूरेयाते तत्रत्याः केचिद् वृद्धवृष्णयो वसुदेवनिन्दया क्षणमधोमुखास्तस्थुः । ततः पितामहोपमोऽन्धकः कंसमभ्यधात् । कुले बन्ध्या अपि स्त्रियो धन्याः । यासां कुलघ्नसुतः कदाचिदपि न जायते । श्रीसुधालयालक्ष्मीर्विजूजिह्वेषु न जातु तिष्ठति । अहो नु ! चिराद्यादववृष्णयः शोच्यतां याताः । कंस ! येषामग्रणीस्त्वं बालोऽपि वृद्धावमंताऽसि । यदि श्रीवसुदेवेन पित्रा स्वपुत्रो रक्षितस्तत्र को दोषस्तस्य ? शरीरिणामिह पुत्रात् प्रियतरं किमपि वस्तु नास्ति । पुत्र ! त्वं पुत्रस्नेहगौरवं स्वजनकं पृच्छ । नूनं वसुदेवात्मजौ रामकृष्णौ वीरश्रेष्ठौ । प्रणयिना त्वया बंधुबुद्ध्या तौ सर्वथैव संधेयौ । चेन्मोहात् पथ्यं हितं च मे वचो न करिष्यसि । तदैष ते महैश्वर्यप्रभावः संपूर्णावधिः । क्षयशंसिन्यो दुर्निमित्तपरंपरा लोके प्रत्यहमवलोक्यंते । किम्बहुना । कृष्णसंधानादन्या ते तासु परा शांति र्न हि दृश्यते । एतदाकर्ण्य निःश्वसन् कंसः श्री पराङ्मुख इव विचारालयान्निर्जगाम । ततो नायमस्तीति वृद्धेषु भाषमाणेषु कंसः श्वेतांगं केशितुरंगमं कृष्णवधाय समादिदेश । सोऽथ कंसप्रेरितो दानवो घोरसंध्यासृक् संप्लुतेऽहनि गोव्रजं जगाम । ततोऽन्येद्युरवकाशमवाप्य मनुजमांसादोऽसौ खुरैर्धूलिकणानस्थिसंचयानिव दिक्षु प्रक्षिपन् वेगेन कृष्णमभिदुद्राव । विलोक्यैवं गोपैर्निवार्यमाणोऽपि श्रीकेशवः क्रोधात् समुत्क्षिप्ताग्रचरणं केशिनमभ्याद्रवत् । ततो घोरहेषारवं कृत्वा बलात् खुराभ्यां वक्षसि श्रीकृष्णमताडयत्परं तु तेन यदुनंदनस्तिलमात्रमपि न विचचाल । ततोऽच्युतस्तस्य दारुणे विवरोपमे च वक्त्रे भुजदण्डं प्रवेश्य जिह्वामाचकर्ष । येन व्यावृत्तनयनः केशी सहसा पंचत्वमागतो धरण्यां निपपात । एवं कंसमित्रे केशिनि हते भुवनेषु कोऽप्यपूर्वो हर्षोत्साहमहोत्सवोऽभवत् । ततोऽन्तर्हितो नारदः प्रीत्या कृष्णमब्रवीत् । माधव ! साधु साधु । त्वयेदं जगन्निःशल्यं कृतम् । केशिनिर्दारणात् त्वं केशवाभिधो भविष्यसीत्यभिधाय श्री देवर्षि रभिमतां दिशं प्रययौ । अथ शौरेः शुभो निमित्तनिचयः प्रादुरासीत् । यः पितृतुल्येन बंधुना समागमं शंसति । ततो दिनाधिनाथेऽस्तमिते संध्यांशुशबलं नभो बभूव । अथ शनैः शनैस्तमोभिः श्यामासु दिक्षु नियतसमये व्योमाब्धिपांचजन्यो निशानाथः समुदियाय । अत्रान्तरे वृष्णिवीरशेखरो-

ऽक्रूरो गोकुलस्थं नंदभवनं समासाद्य कमलाक्षं कृष्णं ददर्श । ततोऽसौ मनस्यचिन्तयत् । अहो ! सोऽयं भगवान् मधुसूदनो भूभारावताराय यदुकुले जातः । अस्य घनश्यामं वपुः श्रीवत्सलक्षणं पीताम्बरं च दृष्ट्वा मम मनः प्रसीदति दृशौ तृप्यतः भुजौ चैत दालिंगनाय परिधावतः । तत एहि माधवेति प्रीतिनिर्भरो व्याहरन् श्रीनंदगोपेन संपूजितः शुभासने समुपाविशत् । सोऽथ ससंकर्षणमच्युतं चक्षुषा पिबन्निव कृष्णं प्रोवाच । पुंडरीकाक्ष ! धीरगंभीरेयं ते दिव्यमूर्तिर्नाऽपुण्यवतां लोचनगोचरं प्रयाति । मथुरेश्वरो मोहात् त्वां प्रातरागतं दृष्ट्वाऽवश्यं कृतकृत्यो भविता । कंसस्त्वां द्रष्टुमिच्छति । अतस्त्वं प्रातर्मधुपुरीं गंतासि । किम्बहुना । यादवाः पूर्वपुण्येन त्वद्वपुः पश्यंतु । सर्वे व्रजवासिनो गोपास्तत्र कंसचापमखे समुपतिष्ठंतु । एतावदेव ममागमनकारणमवगच्छ । अपरं च वृद्धोऽपि भाग्यवान्वसुदेवस्त्वां विलोक्य जन्मसाफल्यमवाप्नोतु । कंस भयात् पुत्रैरप्यसंपीतपयोधरा देवकी कृष्णेति नाम्ना सततं सीदति । कुलमौलिना श्रीरामेण रहितां कौसल्यामिव तां समेत्य दर्शनामृतवर्षेण तान्निर्वापय । अहो ! श्रीकृष्णचन्द्र ! आनंदकंद ! सहजच्छायेव सहचारिणी भवितव्यता धन्या । यामवलंब्य विश्वोद्धरणदक्षोऽपि भवानलौकिकां मानवलीलामनुसरति । कंसनिर्भर्त्सनानम्रो जनकस्त्वां समवाप्य चिरान्मानोन्नतं शिरो वहतु । निशम्यैवं दानपतिवचनं कृष्णस्तथाऽस्त्विति प्रत्यवदत् । एवं गन्तुं कृताभ्युपगमे कृष्णे गोपाङ्गनानां चिन्तासंतप्तनिःश्वासैरिव चन्द्रो म्लानिमगमत् । अथ प्रभाते गोपपतयः कंसादेशात् करोपनयसंपूर्णैः शकटैर्गन्तुमभ्युद्ययुः । ततोऽक्रूररौहिणेयाच्युतादयो गोपालीलोचनोत्पलैरर्घ्यमाना इव रथैः प्रययुः । अथाऽक्रूरो यमुनातीरमवाप्य कृष्णमब्रवीत् । वत्स ! भोगिवृतेऽस्मिन् ह्रदे निमज्य शेषफणीश्वरमहं पूजयामि । सोऽथ निमग्नो दिव्यस्वस्तिकलक्षणं, सर्वरत्नाविभूषणं, हेमाब्जमालाभरणं, सहस्रमूर्धानं हलायुधं सनातनं च शेषमपश्यत् । ततो ब्रह्मजपन् तस्योत्संगे जनार्दनं दृष्ट्वाऽतिविस्मितोऽभवत् । सोऽथ समुन्मज्ज्य रथस्थौ रामकृष्णौ विलोक्य पुनरादरान्ममज्ज । ततस्तथैव तौ दृष्ट्वा कृष्णेन सस्मितं पृष्टस्त्वमेव सर्वमसीत्यूचे । अथाऽक्रूरो दिनान्ते मथुरामवाप्य स्वगृहे स्वैरं गोविन्दं कंसदुर्भावं जगाद । वत्स ! त्वयाधुना वसुदेवगृहे न गंतव्यम् । तच्छ्रुत्वा कृष्णः सस्मितमवादीत् । सत्यमुक्तम् भवता । नावां तत्र गच्छावः किंतु कौतुकात् पुरीं तु पश्याव इत्याभाष्य रामकृष्णौ विमानावतीर्णौ विद्याधरवीराविव पुर्यां विचेरतुः । ततस्तौ राजरजकं समवाप्य रुचिराभांसि ययाचाते । परं सोऽधमो नाऽयच्छत् । अथ कृष्णः क्रोधदर्पावलिप्तं क्रूरवादिनं च तं रजकं हत्वा वासांसि च जहार । विलोक्यैवं मालिनी प्रीत्या स्वय-

मेव श्रीपतेः श्रीप्रदं माल्योपनयनं प्रादात् । ततोऽच्युतः सुगंधहारिणीं कुब्जां क्षणात् सर्वांगसुंदरीं चक्रे । अथ तौ दैत्यदानवपूजितमायुधागारमवाप्योत्साहार्थं शिलास्तंभसारं महाधनुर्व्यलोकयताम् । ततो दामोदरस्तं दुर्धरं चापं समादाय दोर्भ्यां समाकृष्य स्व मृणालीनाललीलया बभंज । ततस्तेन महाशब्देन दारितेव द्यौ रराप्त वसुंधरा च चकम्पे । विलोक्यैतदायुधागारिकः कंसाय धनुर्भंगं न्यवेदयत् । तच्छ्रुत्वा राजा दर्पान् न किमप्युवाच । ततः कंसो नगरे मल्लयुद्धप्रेक्षामहोत्सवमादिदेश । सोऽथ चिरसंधारितौ चाणूरमौष्टिकौ मल्लौ समाहूय कृष्णस्य बधसज्जौ चक्रे । अत्रान्तरे कंसः संग्रामसचिवं गजशालाध्यक्षमप्याहूय प्रोवाच । भद्रमुख ! प्रातर्वासुदेवो धनुर्महीरङ्गमागंता । साग्रजः स मत्सकाशाद्वधमर्हति । त्वया रंगद्वारि क्रोधात्तन्निधनोद्यतो व्यालकुंजरः कुवलयापीडः कार्यः । अहं वसुदेवं हतपुत्रं करोमि । यतोऽयं गोमुखो व्याघ्रः । एवमन्येऽपि बंधुच्छद्मप्रतिच्छन्ना यादवाः संति । तेऽपि मया हन्तव्याः । पुरा नवकौतुकान् ममार्तवती जननी कुसुमोज्ज्वले प्रियासनाद्रिकटके चचार । तत्र रतिरागरसोदारस्मरसंजीवने वने सौरपतिर्द्रुमिलो दानवेश्वरः कामकल्पतरोःस्तनस्तवकिनीं लतामिव तामवलोक्य मन्मथाक्रान्तोऽभवत् । सोऽथ योगेन मम पितृरूपं धृत्वा प्रेमनिरर्गलां तां सतीं भेजे । ततो वृत्तकर्तव्या सा दानवं वीक्ष्य दूषिताऽस्मीति दुःखिता तं पापं शशाप । दुर्वृत्त ! त्वयाद्य मम गर्भे यस्तनयो धृतः स मद्भर्तृकुलजाद्वधमवाप्स्यतीतिरहस्यं मामभिधाय नारदो जगाम । सखेऽतोनाऽहमुग्रसेन सुतो न च यादवा मे बांधवाः इति महामात्यं संदिश्य द्वितीयेऽन्हि विषदांशुकः कंसः सामंतवृतं रंगं विवेश । ततः कंसभूपतिर्हेमासिंहासनमध्यतिष्ठत् । अथ तच्छासनान्नानादेशागता भुजास्फालनशालिनो महामल्लाः समुत्पेतुः । अत्रान्तरे नीलपीताम्बरौ रामकृष्णौ रंगद्वारमागच्छताम् । ततस्तावाधोरणेन प्रेरितं युद्धसंमुखं कुवलयापीडं दृष्ट्वा योद्धुमुद्यतावभूताम् । अथ सव्यदक्षिणपार्श्वयो र्मण्डलानि चरन् कृष्णो वेगेन स्वहस्तालंबनं कुर्वन् तममोहयत् । सोऽथ प्रहाराकुलितो दंताभिघातवैफल्याज्जानुभ्यामुपविश्य यावल्लघुचित्रपराक्रमं गोविंदं सहसोत्थाय च समाक्रामति । तावदस्य मुखा दंतमुत्पाट्य तं निजघान । ततो निजदंतप्रहारेण रक्तमुद्वमन् स्रुतशकृन्मूत्रश्च गजोऽधावत् । अत्रान्तरे रामेणाकृष्टपुच्छः शौरिणा च हतारोहो विकटो भूतले निपपात ।

एवं कामिनीकौतुकप्रदः कृष्णः कुवलयापीडं हत्वा रङ्गभूमिं प्रविवेश । अत्रान्तरे कंसाज्ञयाऽऽन्ध्रवंशजश्चाणूरस्तत्रागत्य कृष्णमयोधयत् । ततस्तयोर्जानुभुजाबन्धैः प्रेरणाकर्षणांचनैः पीडनास्फालनाघातैश्च धरित्री समकम्पत । अथ हर्षोत्फुल्लनेत्राभ्यां

देवकीवसुदेवाभ्यां पीयूषवर्षीति पुत्रो दृष्टः। अथ श्रीकान्तइत्यप्सरोभिः खेचरै दैत्यच्छेदीति गोपैर्बन्धुरिति यादवैः प्रवीर इति वराकोऽस्य मल्लः कियानिति संकर्षणेन च वीक्ष्यमाणोऽसौ तरस्वी मल्लानामपि विस्मयं व्यधात् । ततः कोपाकुलः कंसो भुजमुद्यम्य कृष्णोत्साह विवर्द्धनं विपुलतूर्यस्वनं वारयामास । अत्रान्तरे दिवि तारतूर्यरवैर्देव दुन्दुभयो नेदुः । अथ कृष्ण ! मल्लमाशुजहीति सप्तर्षिभिरुदीरिते कंसमुकुटान्मणि र्निपपात । ततोऽद्भुत विक्रमः केशवो मुष्टिप्रहारैर्दैत्यावतारस्य मल्लस्य दलितेन्द्रियं शिरश्चकार । अथ स्फुटल्ललाटस्य तस्य दीपसंनिभे लोचने क्षितौ न्यपतताम् । ततो निपातिताशेषमल्ले श्री जनार्दने रंगक्षोभभवो महास्वनः क्षुब्धार्णवगंभीरो बभूव । अथ मण्डलकोविदो बलभद्रो मौष्टिकं नाम मल्लं जघान । ततो रामकृष्णौ विकटतामरावपि क्रमशो जन्मावर्तं परिभ्राम्य पातयामासतुः । एवं देवशल्येषु तेषु मल्लेषु हतेषु सर्वे रङ्गमण्डलस्था यादवाः परमविस्मयमवापुः । अथ वधूसखे वसुदेवे सुधासारैरिवासिक्ते कंपितमानसः कंसो भ्रुकुटीभीष्मश्चुकोप । एवं तत्कोपाग्नौ प्रज्वलिते सर्वभूतानां घोरंभयमाविरभूत । ततो राजा भ्रूभंगेनैव रंगकोलाहलस्वनं सपद्येव विनिवार्य वेत्रिप्रोत्सादितजनो जगाद । इयं नः सरलता जातु सारक्षयाय जाता । प्रथितसाराणां मध्ये गोपः कथं प्रद्रक्ष्यति ? यदि जंबुकेन सिंहा हतास्तदत्र किं क्रियते ? इतो गोपा निष्कास्यतां नंद गोपश्च बध्यताम् । किम्बहुना । बांधवव्यसनोऽयं वसुदेवो यादवैः सह मृत्युमुखे निधीयताम् । निशम्यैवं कंसशासनं तन्मतिवर्तिनो योधास्तूर्णं यथादिष्टं कर्तुं समुद्ययुः । ततो देवरक्षकत्रासाकुलान् गोपान्वीक्ष्य मातापितरौ सुतस्नेहवैक्लव्यविक्लवौ विज्ञाय च सहसा हेमसिंहासनोपान्तमुत्पपात । अथ केशवः केशेषु कंसं जग्राह । विलोक्यै तत्कंसोऽम्बरात्पतितं ग्रहमिव कृष्णं कालममन्यत । ततोऽच्युतः समाकृष्य सिंहासनाधो मुखं तं पातयामास । अथ वीरस्यापि कंसस्य कृष्णातंकाद् हृदयमस्फुटत् । ततस्त्रिविक्रमो रक्तक्लिन्नगात्रमौग्रसेनिं गतप्राणं च विज्ञाय सपदि तत्याज । एवमालोक्य माथुरा हलहलारवं निवार्य भूयोभूयो राम-कृष्णौ प्रशशंसुः । केचित् कंसानुयायिनश्च दैत्यास्तदा नम्राननाः गतसत्वाश्च बभूवुः । केचिच्च युध्यमाना तत्रैव धराशायिनो बभूवुः ।

एवं मुरारिणा वीरकुलोत्तंसे कंसे हते हलायुधः सुनामानं कंसानुजं जघान । ततो देववन्द्योऽपि देवकीनन्दनो मातरं देवकीं प्रणम्य पितुर्वसुदेवस्य च चरणाब्जयोर्निपपात । ततः कंसबधूजनः सहसा कंसं हतमाकर्ण्य वज्राहत इव तत्रा जगाम । अथ छिन्नहारविभूषणास्ता भूमौ सिंहाहताद्विपामिव पांसुरूषितं तं दृष्ट्वा हानाथ ! हाललनाकेलिकलना-

कुसुमायुध ! क्वाऽस्मान् विहाय यातोऽसीति विलपंत्यः क्षितितले लुलुठुः । हा प्राणेश ! कथमकस्मात् प्रियासु विमुखो भूत्वा भूमिमालिंग्य सुप्तोऽसि ? वीराग्रगण्य ! जरासंधजितः क्षतयक्षस्य च ते निरायुधवधमवलोक्य महाश्चर्यसागरे निमज्जामः । अहो ! अक्षौहिणीनाथस्य राजराजस्य ते पुरनैंकोऽपि योद्धा निजः परो वा निहतः । देव ! दृशमुदंचय । वधूजनं च विलोकय । किमियं कृतकनिद्रा ? वा प्रणयिनीषु कोप इत्यन्तः पुरनारीषु विलपन्तीषु शोकविहूला कंसजननी सहसोपाययौ । सोऽथ क्षितिशायिनः पुत्रस्य शिर उत्संगे कृत्वाऽश्रुभिस्तं शवं सिषेच । ततो विलपन्ती प्रोवाच । अहोनु पुत्र ! नृशंस कालेन त्वां निध्नता वृद्धस्य ते पितुर्जलांजलिमनोरथश्छिन्नः । राजन् ! महार्हशमनोचितस्त्वमेकाकी पांसुशयने कथं पृथग्जन इव स्थितोऽसि । पुरा रक्षः सभासीनो दशाननः प्रोवाच । पुसां ज्ञातिभ्यो दुःसहं भयं जायते नान्यत इति तद्वचनं सर्वथैव मयाद्य सत्य मनुभूतम् । अहो ! वीरेण येन स्वभुजोपार्जिता राजलक्ष्मीर्बंधुसाधारणी कृता । स ज्ञातिवत्सलस्त्वं ज्ञातिनैव हृत इति विलप्य सा पुत्रशोकविह्वलं वृद्धमुग्रसेनं च प्रोवाच । महाराज ! तेऽयंतनयो बांधवविवर्जितश्चोर इवैकाकी हृतः । सम्प्रति हरिं संस्कारं याचताम् । राज्येऽस्मिन् भोजप्रवीरो वा माधवस्तिष्ठतु । इयं राजलक्ष्मीस्तु वीरमुखं समीक्षते । प्रभो ! शीघ्रमेव यादवसंसदि गच्छ । कृष्णं च विज्ञापय । पृथिवीपालः कंसोऽय मौर्ध्वदैहिके त्यज्यताम् । प्राणैः संशोधितागसि कस्य नाम वैरम् ? यः सर्वस्वं त्यक्त्वा परलोकं प्रयातो न कदाचिदप्युत्थास्यति । निशम्यैवं महाराज्ञीवचनं गलेऽहिना दष्ट इवोग्रसेनो वसुदेवालयं जगाम । सोऽथ तत्र स्वबंधुनिधनध्यानपश्चात्तापाकुलाशयं कृष्णं दृष्ट्वाऽब्रवीत् । केशव ! त्वमधुना समुचितप्रबंधं कृत्वा सद्वृत्तान् यादवान्परिपालय । एषोऽहं त्वदाज्ञया कंसस्य पश्चिमां क्रियां करोमि । जलांजलिं चास्य दत्वा विपिने मुनिर्भवामि । तच्छ्रुत्वा कंसारिः प्रोवाच । भूपाल ! सत्यमेतत् । त्वं तु सदैव कुलोचितमेव कृतवानसि । भवितव्यतेयं भवाभवरिच्छेदरेखा प्राणिनो ललाटपाषाणलिखितेवाऽविनाशिनी प्रथिता । तात ! वृत्तेऽस्मिन्ननिवर्तिनि शोकमधुना मा कृथाः । यतः कलितकालाग्रा धीधना काले नहि मुह्यंति । यदि जगत्कार्यकृतेऽस्मासु ते मनः प्रसन्नं तदातु राज्यमपरित्याज्यमित्याभिधाय नम्राननो यदुवंशविभूषणो ग१राज्यं वृद्धं बलान्नृपपदेव्यधात् । ततः कंसस्य राजार्हे सत्कार्ये बंधुभिः कृते वृष्णिपूजितःग्रजानुजसमेतश्च कृष्णस्तत्रोवास ।

अथ ता वुज्जयिन्यां विद्यावारिधेः काश्यपसंदीपनेराश्रमं गत्वा छात्रतामगमताम् । तत्र प्रतिभामणिदर्पणौ तौ शिवं पूजयंतौ दिव्यास्त्रेषु स शब्देषु वेदेषु निरवद्यासु विद्यासु तथा-

ऽविकलासु कलासु च परं पारमवापतुः । अथ प्राप्तविद्याभ्यां ताभ्यां दक्षिणार्थमुक्तो-गुरुरुवाच । महाभागौ ! युवयोः प्रभावात् प्रभासयात्रायां समुद्रे तिमिहृतं पुत्रमहं प्राप्तु-मिच्छामि । निशम्यैवं गुरुशासनं संकर्षणं समामंत्र्य कृष्णो जलनिधिं गत्वा च समज्ञ । ततः क्वाऽसौ मम गुरुसुतइति वादिनं तं कृतांजलिर्जलनिधिरुवाच । स्वामिन् ! इह पंचजनो नाम दुःसहो दैत्यो निवसति । तिमिरूपेण तेनाऽसौ सांदीपनिसुतो हृत इति वारिधिगिरा वीरवरो हरिस्तं हत्वा तस्मात् पांचजन्याख्यं शंखं तु समवाप । परंतु श्रीगुरुवर सुतं न लेभे । ततो दामोदरो वैवस्वतं जित्वा प्रेतपुरादपि सशरीरं सुतं समादाय गुरवे समर्पयामास । अथ कृतास्त्रो मथुरामवाप्य रामेण सार्धं सर्वयादवान् विस्मयानंदनिर्भरान् विदधे । अत्रान्तरे कंसबधात् स्वसुते विधवे दृष्ट्वा कोपाकुलो जरासंधः समभ्यायात् । पुराऽस्यैव संश्रयात् कंसः पितरं बद्ध्वा राज्यं सम्प्राप्तवान् । अथ तदनुगा दंतवक्रशिशुपाल-भगदत्तभीष्मकरुक्मिणोऽपि तत्र समाययुः । ततः कलिङ्गकौशिकपौण्ड्रक्राथत्रिगर्त-सुम्हसौवीरशैब्यपाण्ड्यविदेहकाश्यपकौसल्यगांधारकाश्मीरदशार्णयवनाद्या नरेश्वरा अपि साहाय्यार्थं समुपस्थिताः । अथाक्षौहिणीविंशत्या मागधेन निरुद्धायां मथुरायां श्री राम-कृष्णौ पुरस्कृत्य वृष्णियादवा विनिर्ययुः । ततः समरे प्रवृत्ते श्रीबलभद्रो मुसलायुधं नीत्वा रथमारुह्य च प्रतस्थे । अत्रान्तरे कंसारिरपि कौमोदकीं गदां समादाय रथारूढो रणांगणं विवेश । अथ रामेण हलेनाकृष्टदेहेषु मुसलेन च पिष्टेषु रथाश्वगजसहितासु मगधाधिप सेनासु हाहाकारोऽभवत् । ततो मुरारेः शार्ङ्गरवं समाकर्ण्य दैत्यात्मनां नरेन्द्राणां हृदयानि प्रतिक्षणं चकम्पिरे । अथ जरासंधशरासारैर्विरथौ श्रीबलभद्रकृष्णचन्द्रौ पद्भ्यामेव सुभटक्षयं कुर्वाणौ विचेरतुः । ततो युधि श्रीसंकर्षणेन गदया निष्पिष्टस्यंदनो गदापाणि र्जरासंधः स्वयं कोपात्तं समभ्यधावत् । अथ सुशिक्षाबलशालिनोस्तयो र्घोरगदायुद्धे प्रवृत्ते कौतुकायात सुरनिर्विविरं नभो बभूव । ततस्तयोर्गिरिसंचूर्णितोचितैः शस्त्रप्रहारैर्धैर्य-तुल्यानि दृढगात्राणि न चकंपिरे । अथ रामेण जरासंधाय जीवहारिणि घोरप्रहारे समु-द्यते दिवो वचः प्रोच्चचार । प्रलंबघ्न ! युधि मिथ्या प्रयासेनालम् । नाऽयं राजा त्वया वध्यः । अस्य हंता कोऽप्यपरः प्रजातः । एवमाकर्ण्य रामे विरते श्रीदिवाकरे चास्तं याति वारितोदारवीरयो र्बलयोरवहारोऽभूत् । ततो रात्रावुभेऽपि सैन्ये सुखेन सुषुपतुः । एवं जरासंधे जिते वृष्णिषु वीतविघ्नेषु च श्रीदामोदराग्रजो बालक्रीडाः स्मरन् कदाचिद् गोत्र-जमयासीत् । तत्र गोपैः संपूजितो हरिर्हर्षमवाप्य कुसुमश्रीविभूषितेषु प्रदेशेषु विजहार । अस्य पुष्पहासिनः कदंबस्य मूले निषण्णो विलोलपल्लवैर्व्यजनैरिव तेन स वीजितोऽभवत् ।

ततो गौराङ्गः कदम्बोदरनिर्गतां दिव्यपुष्पामृतमयीं कादम्बरीं सुरां पपौ । अत्रान्तरे दिव्याम्बरविभूषणा ससौरभा श्रीदेवी कादम्बरी प्रियवाग्मी रममाणं मनोरमं राममतोषयत् । ततो लक्ष्मीस्वरूपिणी हरिणेक्षणा सा तस्मै हेमाम्बुजस्रजं किरणोदारं कुण्डलं च प्रादात् । सोऽथ मदालसो नीलाम्बरो मज्जनक्रीडाभिलाषेण दूरादेहीति स्खलिताक्षरं श्रीयमुनामुवाच । ततः सा निम्नगा तद्वाक्यमनादृत्य यदा न किंचित्प्रोवाच । तदा श्रीबलदेवो रुषा सहसा समुत्थाय लोलनीलसलिलां कुपितां मानिनीमिव तां हलाग्रेणाचकर्ष । ततः क्वचित् स्रस्तजलांशुका, क्वचित्तरंगभ्रूभंगपरिवृत्तिपराङ्मुखी, क्वचित्सलिलकल्लोलदुकूलग्रहणाकुला, क्वचित् त्रासाकुलितवाचालनानाविहंगमवलया, क्वचिद्वारिकुहूत्कारसनिः श्वासप्रलापिनी, क्वचिच्च सावेगमनायासविषमस्खलिता हलेन समाकृष्यमाणा सा महानदी समुद्भ्रान्ता बभूव । ततो वृन्दावनमध्ये नीता प्रत्यक्षरूपिणी कम्पमाना कृतांजलिश्च सा यमुना प्रोवाच । रेवतीरमण ! सर्वाः सरितः सागरान्तिके फेनैर्मां प्रहसिष्यंति । मानद ! प्रसन्ने त्वयि स्वरूपं प्राप्तुमहमिच्छामि । यतो निकारेऽपि योषितो महात्मनां माननीया हि भवंति । एवं तया बालमृगीदृशा प्रसादितो बलरामो व्रजवासिभिश्च संपूजितोऽद्भुताक्रान्तैर्विरराम ।

ततः स मथुरां प्राप्य श्रीकृष्णादिभिः संपूजितो विबभौ । अथ जनार्दनः पूर्वं भग्नमनोरथं जरासंधं विचिन्त्य ततः पुनरागमनोत्सुकं च तं श्रुत्वा वर्धमानैरुद्रसेनादिभिर्यादवैः सह मंत्रयामास । ततः सोऽब्रवीत् । नयविदां भवतामग्रे यत् किमपि कथ्यते । तत्र समयोचितो विचारः । बलशालिना जरासंधेन नस्तावन्निःसामसीमा वैराग्निः प्रजातः । तदनुयायिनः पृथिवीपाला विरक्ता जरासंधेन च सहिता देवैरप्यजेयाः संति । म्लेच्छदरच्चीनशकाग्रगः स कालयवनो बलनिरोधेन नः पुरीं समपीडयत् । स वीरो गार्ग्यस्य महत्तपसा त्रिजगज्जयी संजातः । श्रीमत् पिनाकिनो वराच्च सर्वभूतानामवध्योऽप्यभवत् । तस्याश्वशकृदुद्भवा सरिदियमश्वशकृत्संज्ञाऽस्मत् पुरीबंधे प्रसर्पति । मथुरा पुर्यत्यल्पा । यादववंश विवृद्धिश्च विस्तीर्णा । ततः शत्रुसैन्यानां पुनः पुनराक्रमणं च दृष्ट्वा पश्चिमाब्धौ परिखाट्टालमालिनीं द्वारवतीं निवेशयितुमिच्छामि । निशम्यैवं कृष्णवचनं सर्वेऽपि यदुपुंगवा स्तथेत्याहुः । यतो हितवाक्येषु श्रद्धा हि प्रतिपदं कल्याणं प्रयच्छति । ततः श्रीकृष्णो मुद्रितकुंभे कृष्णसर्पं प्रक्षिप्य दुःसहोऽस्मीत्युदाहरन् यवनेन्द्राय प्राहिणोत् । अथ कालयवनस्तं दृष्ट्वा विहस्य च स्वसेनाढ्यतां वदन् पिपीलकभक्षितं कृष्णसर्पं प्रेषयामास । ततः श्रीकृष्णपुरोगमाः सर्वे यादववृष्णयो मथुरां त्यक्त्वा जलधिमेखलां द्वारावतीं प्रययुः । अथ वीरपरिवृता सा पुरी देवगणयुताऽमरावतीव शक्रतुल्येन श्रीकृष्णचन्द्रेण शुशुभे ।

अथैकदा नयकोविदो नंदकिशोरः पादचारी कालयवनमाक्रुष्य तत्सन्निधौ प्रययौ । एवमालोक्य प्रहृष्टो यवनाधिपः काल इव श्री गोविन्दमभ्याद्रवत् । ततोऽचिन्त्यगतिरच्युतः स्वमायामिव गंभीरां गिरिगुहां विवेश । तत्र मांधातृतनयो मुचुकुंदनरेश्वरो देवासुररणे शक्ररिपुक्षयं कृत्वा श्रांतो यो मे निद्राक्षयं कुर्यात्स भस्मसाद्भवेदिति सुरैः संविदं कृत्वा सुष्वाप। अथ सुचिरं रत्नपर्यंकशयानस्य तस्य गुहायां शीर्षान्ते गोविन्दः समुपाविशत् । ततः कोपप्रज्वलितः स यवनः सावेगं प्रविश्य तत्र विशालाकारं सुप्तं च राजर्षिं ददर्श । सोऽथ पिहितानन्नं तं विलोक्य कृष्णोऽयमिति संचिन्त्य यदा भूमिपं पस्पर्श । तदा सहसा प्रबुद्धः स महीपालः पदा स्पृशंतं तं दुःसहरुषा चक्षुषा सद्यो भस्मसाद् व्यधात् । एवं निर्दग्धे यवने निद्राकषायनयनः परिवृत्ताननो भूपः श्रीपुण्डरीकाक्षमीक्षांचक्रे । सोऽथ पर्वताकारेऽप्यल्पविग्रहं कृष्णं विलोक्य को भवानित्यपृच्छत् ? एतदाकर्ण्य कृतांजलिःकेशवस्तमभिवाद्य स्ववृत्तान्तं निवेदयामास। ततो राजा निद्रया युगत्रयं गतं ज्ञात्वा गुल्फप्रमाणा ह्रस्वत्वमागताश्च प्रजा दृष्ट्वा विगतस्पृहो विरसे राज्ये मतिन्न चकार । समानेषु व्यतीतेषु प्रेमभूमिषु शून्यासु विच्छाये जीर्णे च जगति सतां सजने का रतिः ? सोऽथ धीमान् भूप स्तपसे हिमभूभृतः कंदरं गत्वा पुण्यसंपदां स्वारोहं स्वर्गं समारुरोह ।

अथ कृष्णो यवनार्जितं निखिलं धनं नीत्वा द्वारकां जगाम। तत्र शंखो नाम निधीश्वरः कृष्णशासनात्तूर्णं हेमरत्नैः सर्वं पौरजनमपूरयत् । ततो देवकीनंदनः पवनं विसृज्य साक्षात् त्रिदिवं सुधर्माख्यां देवसभां च तत्रानिनाय । अत्रान्तरे श्रीकृष्णो दाक्षिणात्यस्य भूपतेर्भीष्मकस्य रूपयौवनसंपन्नां श्रीरुक्मिणीं नाम कन्यां शुश्राव । सापि कमललोचनं कृष्णं श्रुत्वा तमेव पतिं वव्रे । ततो भीष्मकसुतो रुक्मी कृष्णेन प्रार्थितामपि कंसदासोऽयमितिद्वेषादुदाहरन् तस्मै तां सुलक्षणामनुजां न ददौ । अथ भीष्मकोऽपि सपुत्रो जरासंधगिरा शिशुपालभूभुजे कन्यां दातुमुद्यतोऽभवत् । ततो वसुदेवस्वस्रीयः शिशुपालो जरासंधदन्तवक्रादिभि र्भूपवृन्दैः सह कृष्णादिवृष्णिवीरान् वरयात्राभिमंत्रितान् पुरस्कृत्य विवाहोत्सवे प्रायात् । सोऽथ भीष्मकेणाभिपूजितो मणिमण्डिते क्रीडोद्यानभवनेऽतिष्ठत् । अत्रान्तरे कृष्णस्तत्रेन्द्राणीपूजनव्यग्रां कृष्णशारायतेक्षणां तां रुक्मिणीं दृष्ट्वा मधुसंसिक्त इव क्षणमाचिन्तयत् । अहो ! शशिप्रभेयं हावभावकटाक्षै र्हरहुंकारदग्धं मनोभवं जीवयन्तीव विभाति । एवं विचिन्त्य मन्मथाकुलो वैकुण्ठो भ्रातुः संमते सहसा भीष्मकात्मजां जहार । ततो वातरंहसा रथेन रथिना तेन हृतायां अहो ! कृष्णेन कन्या हृतेति सुभटक्षोभगंभीरो महीभुजां रवः समुद्भूत् । ततो भारं विन्यस्य तार्क्ष्ये

केतौ याते राममुख्यानां वृष्णिवीराणां घोरं युद्धं प्रावर्तत । ततो बलभद्रसात्यकिहार्दिक्यगदाक्रूरविदूरथवक्रदेवसुनक्षत्रसारणाद्यैश्च यादवगणैः सह शिशुपालदंतवक्रजरासंधमुख्यानां भूभुजां रणे निर्विविरैः शरैरकालरजनीव क्षणमभूत् । अथ बलदेवेन वैरिषु वध्यमानेषु शिशुपालेन चान्येषु हतेषु सैन्ययोरुभयोः समान एव संक्षयोऽभवत् । अत्रान्तरे क्रोधाग्निना ज्वलन् रुक्मी राजसमाजे पितरं प्रोवाच । तात! मलिनाचारं कृष्णंनाहत्वा स्वपुरं समुपेष्यामीति प्रतिज्ञाय रथमारुह्य च दिशो नादयन् सैन्यसमेतो ययौ । ततो रुक्मिणीसखो हरिर्दूरात्तमायान्तमवलोक्य परावृत्य च धनुः सन्धाय तस्थौ । अथ श्रेणीकृतैः कृष्णशिलीमुखैः क्षिप्रं समाच्छाद्यमाना भूपालकमलाकरा विबभुः । ततो रुक्मिचापच्युतशरैरापूर्यमाणः शौरिः सूर्यांशुभि र्व्याप्तोऽचलइव व्यराजत । अथ कृष्णशरै श्छिन्नच्छत्ररथध्वजाः कृत्तकोदण्डास्ते रुक्मिपक्षाश्रिताभूपाः क्षिप्रं खण्डितमनोरथा बभूवुः । ततो वासुदेवो दिव्यास्त्रवर्षिणस्तस्य सर्वायुधानि छित्वा त्रिभिर्नाराचै रुक्मिहृदयं विव्याध । ततस्तस्मिन् मूर्छिते पतिते राजमण्डले च विद्रुते शौरी रुक्मिणीगिरा दयां कृत्वा रुक्मिणं ररक्ष । अथ विनिवृत्तेषु वृष्णिषु कृष्णे द्वारवतीं याते रुक्मी लज्जया कुण्डिनपुरं न विवेश । ततः प्रतिज्ञया पुरवासं परित्यज्य मानभंगं च विचिन्तयन् भोजकटं नाम नवीनपुरमावासयामास । एतदाकर्ण्य श्रीकृष्णचन्द्रस्तस्य मनस्वितां पुनः पुनः प्रशशंस ।

अथ यदुपतिर्जयश्रियमिव मूर्तिमतीं रुक्मिणीं समादाय द्वारकायां विवाहविधिना तां भेजे । ततः पुण्डरीकाक्षः फुल्लेन्दीवरचक्षुषा तया सह नन्दनोपमेषु क्रीडोद्यानेषु चिरं विजिहार । अथ गच्छता कालेन शौरिस् तस्यां प्रद्युम्नचारुदेष्णाद्यान् दशपुत्रान् चारुमतीं कन्यां चाजीजनन् । ततो द्वारकाधीशो दश दिश इवाऽन्याः प्रेमप्रणयोद्यानमंजरीः प्रियाः प्राप । सत्या सुशीला लक्ष्मणा कालिन्दी सुदंता रोहिणी जाम्बवती सत्यभामा मित्रविन्दा जालवासिनी चेति ततस् ताश्चन्द्रवदनाः सदा प्रीत्या तं शेषशायिनं भेजिरे । सोऽथ दिव्यानां हरिणीदृशाम् षोडशसहस्राणि कंदर्पलीलासु स्वैरं विश्वरूपं सिषेविरे । तासु तस्य विभो दैत्यदलदलनक्षमो लक्षसंख्यः पुत्रवर्गोऽभवत् । ततो मन्मथद्युतिः प्रद्युम्नः स्वयंवरे वैदर्भीं चन्द्रसेनां कन्यां लेभे । तेन तस्यामनिरुद्धो देवोपमः सुतोऽजनि । अथैकदाऽनिरुद्धो यादववृष्णिभिः सह रुक्मिणः पौत्रीं सुलोचनां प्राप्तुं रुक्मवतीं ययौ । तत्र हलायुधप्रधानेषु तेषु स्थितेषु दाक्षिणात्यमहीभुजां छद्मद्यूते मतिरभूत् । ततस्ते भूपाः संमंत्र्य कितवे तालाङ्कमाजुहवुः । अथ तैः क्षुद्रैः सह तस्य कलहदोहदे द्यूते संप्रवृत्ते मिथः कनक कोटिभिः पणेषु विद्यमानेषु निकृत्या निर्व्याजो राम एवाऽसकृज्जितः । ततोऽजितो रुक्मीति विहस्याक्षान् प्रतोलयन्

तमुवाच । अहो ! दुर्बलोऽविद्यो बहुधनश्चाऽयं जितः । तच्छ्रुत्वा मन्युसंतप्तः कृष्णाग्रजोऽवदत् । हिरण्यस्य दशकोटिसहस्राणि मम पणोऽस्तु । निशम्यैवं हलधरवचनं रुक्मी न किंचित्तमुवाच । अथ निपातितेष्वक्षेषु कृष्णाग्रजेन स जितः । किन्तु व्याजमाश्रित्य मौनकृन्न जितोऽस्मीति जगाद । ततोऽस्य जिह्मवचसा कुपिते मुसलायुधे गगनादशरीरिणी स्फुटा वाणी रामेण रुक्मी विजित इत्युच्चचार । किं बहुना । सर्वकार्येषु देहिनां मनोवृत्ति र्हि प्रमाणम् । तच्छ्रुत्वा न जितोऽस्मीतिवादिनं तं हलायुधोऽष्टापदेन सावेगमवधीत् । एवं समदो बलः कालिंगराजस्य दंतान् निपात्य कनकस्तंभमुत्पाट्य च क्रथकैशिकानप्याद्रवत् । अथ कालानलद्विषस्तस्य त्रासाद्यातेषु राजसु शक्रतुल्यपराक्रमे रुक्मिणि हते च सानुशया वृष्णिवीरास्तत्सर्वमच्युताग्रजवृत्तमच्युताय निवेदयामासुः । ततो मधुसूदनो विलापमुखरां रुक्मिणीं परिसान्त्व्य नताननं श्रीबलभद्रं किंचिन्नोचे ।

अथैकदा जाम्बवतीसुतः साम्बो दुर्योधनसुतां हर्तुं हस्तिनापुरं प्रययौ । तत्र राजस्वयंवरे माधवात्मजो धार्तराष्ट्रेण कन्याहरणापराधेन संरुद्धः । तच्छ्रुत्वा स्वयं हलायुधस्तद्विमोक्षाय समभ्येत्य तरसा कौरवराजपुरं भंक्तुमुद्यतोऽभवत् । सोऽथ गङ्गातटोन्मुखं हलं विदधे । येन सहसा निखिलमेव हस्तिनापुरं विचचाल । एवमालोक्य स्वयं दुर्योधनस्तत्र गत्वा तं प्रणिपत्य प्रसाद्य साम्बं मुक्त्वा च गयायुद्धे तच्छिष्यतां प्रययौ । एवमासीदसाधारणं बलभद्रबलम् । येन नागायुतप्राणो भीमोऽपि दोर्भ्यां सहसा पराजितोऽभूत् ।

अत्रान्तरे भूमिसुतो नरकासुरो देवगणानां रत्नानि स्त्रियश्चापाहरत् । योऽदितिकुण्डलहारी युधि च सर्वं विजेताऽभवत् । अथैकदा वृष्णिभिः सार्द्धं वैडूर्यस्तंभरुचिरां रत्नासनोज्ज्वलां च सभां समासीने श्रीकृष्णे स्फुरत्तेजः पुंजैः पिंजरितं नभोऽदृश्यत । ततो देवराजोऽवतीर्य सुरगजात् सहसाभ्युत्थितैः कृष्णबलदेवादिभिः पूजामवाप्य च मणिमण्डिते शुभासने समुपाविशत् । अथ कुशलप्रश्नानन्तरं सहस्राक्षः प्रीत्या श्रीकृष्णं विलोकयन् समभ्यधात् । माधव ! धन्येयं द्वारावती यत्र यादवकुले नक्षत्रमण्डले सुधांशुरिव त्वं विराजसे । संप्रति लोककार्याणां कर्तारं सुरविद्विषां च हर्तारं त्वां त्रैलोक्योपप्लवच्छित्त्यै समुपागतोऽस्मि । जगन्नाथ ! प्राग्ज्योतिषपुराधीशो नरकासुरो जगन्ति बाधते । यो देवमातुरप्यदितेर्दिव्यकुण्डले जहार । निसुंदहयग्रीवाद्या दैत्याश्च तस्य सहायकाः संति । मिलित्वा च ते सर्वे नो महांसि यशांसि च क्षपयंति । देव ! पतगेश्वरोऽयमस्माकं मनोरथ इव यत्रासौ दैत्यस्तत्र त्वां प्रापयिष्यतीत्युक्त्वा विरते शक्रे मुरारिणा च तथेत्युक्ते सुपर्णो विद्युत्पुंज इव गगने प्रत्यपद्यत । ततः सत्यभामासखो महेन्द्रेण सह देवगज-

मारुह्य व्योममार्गेण जगाम । अथ नाकपतौ नाकं याते शार्ङ्गी प्राग्ज्योतिषपुरं व्रजन् मार्गे ससैन्यं सबान्धवं सामात्यं च मुरं जघान । ततो रणे निसुंदहयग्रीवविरूपाक्षान् हत्वा घनौजसा दैत्यानामष्टौ लक्षाणि निजघान । अत्रान्तरे कोपज्वलितो नरकासुरोऽपि युद्धार्थे तत्र समाययौ । विलोक्यैवं श्रीगदाधरः क्रुधा क्रकचधारेण सुदर्शनचक्रेण नरकं द्विधा चक्रे । अथ विस्फारभूधराकारे भूमिजे भुवि पतिते पुत्रशोकाकुला मही तत्प्रजापरिरक्षार्थं छत्रं कुण्डले च माधवाय समर्पयामास । अथ श्रीहरिर्लुंठिताशेषसुरेन्द्रधनदाश्रियो रत्नसंचयानाहृत्य तत्पुरान्निर्ययौ । नरकेण जलाधिपतेर्यन्महच्छत्रं धाराशतसहस्रांकं हृतं तदपि दाशार्हो जहार । ततो मधुसूदनस्तेन रत्नशैले विनिहिता गंधर्वसुरकिन्नरकन्यका विलोक्य करुणार्द्रहृदयो बभूव । सोऽथ तत् पार्थनया मणिपर्वतमुत्पाट्य गोविन्ददर्शनानन्दसुधास्यंदतरंगितास्तास्समानिनाय । ततो दिवि देवेशं दृष्ट्वा तेन च सादरं पूजितः शचीसंमानितां सत्यभामां मुदा व्यलोकयत् । ततो दानवान्तकः शक्रेण सह देवजननीमदितिं प्रणम्य दिव्यकुण्डले चास्यै समर्प्य सदा सर्वकामप्रदं नन्दनोत्तंसं च पारिजातं ददर्श । सोऽथ नयनानन्दबान्धवं तं स्वयं समुत्पाट्याशु निनाय । तद् वृत्रहाऽप्यमन्यत । ततः सुपर्णारूढः सत्यभामासखो दिवि व्रजन् नानादेशान् विलोकयामास । सोऽथ द्वारकां समासाद्य विहगेश्वरं विसृज्य वृष्णियादवैश्च पूजितोऽतिष्ठत् । तत्र विजयोदारैश्चरितैर्नारदादिमुनिवृन्दैश्च स्तुतो हरि र्हरिणीहारिनेत्राभिर्ललनाभिश्चिरं विजहार ।

अत्रान्तरे रुक्मिण्यां यो हरिसुतः प्रद्युम्नोऽजायत । स सूतिकालयाच्छंबराख्येन दैत्येन हृतः । सोऽथ शिशुरिक्षुमत् संज्ञके दैत्यनगरे वृद्धिमवाप्य प्रीत्या तेनैव च सर्वमायास्त्रपारगः कृतः । अथैकदा स तद्वल्लभागिरा निजहरणवृत्तान्तं ज्ञात्वा समस्तमायाज्ञं तं महारणेऽष्टम्यां निजघान । सोऽथ कृतकृत्यः साभिलाषान्तद्वधूं मायावतीं जवाद् धृत्वा गगनमार्गेण द्वारकामानिनाय । ततो रुक्मिणीसखं जनकं प्रणिपत्य सराव तारस्स लोकेषु विश्रुतोऽभवत् । एवं साम्बप्रभृतयोऽपि कार्ष्णयस्सर्वे शस्त्रशास्त्रविशारदाः स्वधर्मरक्षकाश्च बभूवुः । अथैकदा दुर्योधनप्रमुखाः केचिद्राजानः सपुत्रस्य हरे स्त्रिदशस्पृहणीयां विभूतिं द्रष्टुमक्षौहिणीभी रैवतकं गिरिं परिवार्य विविक्तरम्यासु द्वारकोपान्तभूमिषु तस्थुः । एवमालोक्य भगवान् कृष्णः श्रीवृष्णिगणैः सह निर्गत्य यथाक्रमं सर्वानपि क्षितीश्वरानपूजयत् । ततः सिंहासनस्थेषु तेषु स्वयमपि रत्नासनं भेजे । अत्रान्तरे देवर्षि र्नारदो भूपसमाजस्थं तं द्रष्टुमभ्येत्य प्रोवाच । देव ! त्रिदिवौकसामप्याश्चर्यास्पदं त्वं धन्योऽसि । ततो दक्षिणाभिः सहास्मीति तेन प्रत्युक्ते नारदे कौतुकाकुला

भूपालाः किमेतदिति पप्रच्छुः । अथ कृष्णेन कथ्यतामिति सादरं प्रेरितः सोऽब्रवीत् । महानुभावाः ! त्रिषवणस्नाताऽहं कदाचिद् यमुनदीतटे कमप्यद्भुताकृतिं कूर्मं दृष्ट्वा धन्योऽसीत्यवदम् । तच्छ्रुत्वा सोऽब्रवीत् । धन्या त्वस्ति गंगा । याऽस्माद्विधान् रक्षति । ततो धन्यासीति मया पृष्टा सा प्रत्यभाषत । धन्यः समुद्रोऽस्ति यः सर्वसरित्पतिरुदीर्यते । अथ सोऽपि मया पृष्टः प्राह । मत्तः पृथ्वीयं वरा । ततः पृष्टा सोवाच । भूधरा वरा यैरहं धृता । अथ ते पृष्टा जगदुः । जगत्स्रष्टा विरंचिरद्भुतः । ततः स पृष्टोऽभ्यभाषत । वेदाः सर्वाश्चर्यमहत्तराः । तेऽथ पृष्टाः प्रोचुः । जगत्यस्मिन्नद्भुता यज्ञा येषामर्थेऽस्माकं स्थितिरस्ति । ततस्तेऽपि पृष्टाः प्रत्यवदन् । सत्यः सनातनो विष्णुर्नो गतिर्यः सर्वहुतंसमश्नुते । निशम्यैवमतिकौतुकान्मया कृष्णोऽभ्येत्य यदा च पृष्ट स्तदा स विभुर्दक्षिणाभिः सहास्मीति माभेतदुक्तवान् । एवमभिधाय श्रीनारदे यातेऽतिविस्मिते प्राप्तसत्कारे च राजमंडले निवृत्ते श्रीहरिरपि स्वपुरं विवेश । अथ कदाचित् केशवः स्वयं दीक्षितोऽभवत् । तत्र कोऽपि ब्राह्मणोऽभ्येत्य श्रीकृष्णचन्द्रभगवन् ! त्रायस्वेति प्रार्थयामास । ततो ब्रूहि किं ते भयमिति शौरिणा समुदीरितः सोऽब्रवीत् । प्रभो ! भाग्यहीनस्य मे जाता जातास्त्रयः सुताः केनाऽपि भूतेन हृताः । संप्रति चतुर्थं तु परिरक्ष । अयं मम जायायाः सूतिकाल इति द्विजन्मनोक्ते विष्णु र्वृष्णिवीरैः सह तद्रक्षायै पार्थं प्रादात् । ततो गाण्डीवधन्वाऽर्जुनः क्षणाद् ब्राह्मणावसथं गत्वा दिशो वृष्णिभिरावृत्य च रक्षाकृतक्षणोऽतिष्ठत् । ततोऽर्धरात्रेऽरिष्टे सूतायां ब्राह्मण्यां दुर्निमित्तवान् हृतो हृत इति जनस्वनः प्रादुरासीत् । अत्रान्तरे स्त्रीणामार्तस्वनं बालकस्य च करुणारवनं श्रुत्वा पार्थसात्यकिमुख्यास्ते सायकैर्गगनं पूरयामासुः । अथ तेषु मोघश्रमेषु द्विजन्मना धिक्कृतेषु लज्जितेषु प्रयातेषु च तद् वृत्तमच्युतः शुश्राव । ततो गरुडध्वजः शैब्यसुग्रीवादियुक्तं रथं समारुह्य पार्थं पुरस्कृत्य च समुद्रदत्तवर्त्मना प्रतस्थे । अत्रान्तरे ब्राह्मणोऽपि प्रतीकाराशया निश्चिन्तो गृहेऽतिष्ठत् ।

अथ श्रीमनोजवः स स्तब्धतोयं महासागरं समुत्तीर्य पथि प्रणतैर्मेरुकैलासमुख्यैर्दत्तार्घो बभूव । ततो विमलं व्योम समासाद्य श्रीपुरुषविग्रहं तेजः समालोक्य च रथं तत्याज । अथ सूर्यसहस्राभं लोकं प्रविश्य मुहूर्ताच्च निर्ययौ । ततः पुत्रचतुष्टयं समादाय श्रीहरिः प्रविस्मयापूर्णहृदयाय द्विजन्मने प्रादात् । ततो द्वारकां संप्राप्य किरीटिना पृष्टो वासुदेवस्तदद्भुततरं प्रोवाच । सखे ! ते शैलास्तत्तिमिरं तच्चातिभास्करं तेजो जगज्जन्मस्थितिसंहारकारणमहमेव । तेन तेजोमयेन मत्समागमकांक्षया पूर्वं तु ब्राह्मणस्य सुता हृताः । सम्प्रति तु मामवलोक्य च पुन र्वितीर्णाः । अत्रान्तरे बलिसुतो बाण-

सुरो नाम राक्षसो देवसंघानां तेजांसि यशांसि च जहार । ततो भक्त-जन प्रियो भगवानाशुतोषो यस्याऽऽस्थाने गणान् पुरस्कृत्य सततं सभ्यतां जगाम । अथैकदा समरेच्छुः स वीरः पिनाकिनं प्रणम्य प्राह । महाप्रभो ! चिरविस्मृतसंग्रामोऽहं भुजदण्डानाममीषां युधि रणकण्डूतिखण्डनमभ्यर्थये । एवमाकर्ण्य श्रीशूलपाणि र्विहस्य प्रोवाच । वीरवर ! तव भुजोचितः संग्रामः केतुभंगेन सूचितो भविता । श्रुत्वैतद्धर्षनिर्भरो वाणासुरः स्वभवनं च गत्वा मंत्रिणे तन्निवेदयामास । निशम्यैवं मतिमच्छिरोमणिः कुंभाण्डो नाम मंत्री तमुवाच । राजन् ! फलशून्योऽयं युद्धादरस्तव कथं श्लाघनीयः ? त्वया त्रैलोक्य लक्ष्मीः संप्राप्ता । देवाश्च सर्वे विजिताः । पुनारणेन किम् ? लोके प्रवृद्धानामपि जयाऽजयौ लोलौ श्रुतौ च दृष्टाविति वादिनि मंत्रिणि वाणासुरे च समरोन्मुखे दैत्यश्रीक्रीडाशैल इव महोच्छ्रितो ध्वजो धरायां निपपात । ततो दानवक्षयशंकिषु दुर्निमित्तेषु प्रादुर्भूतेषु पानक्रीडाविलासिनि वाणे च प्रहृष्टे नयचक्षुः कुंभाण्डश्चिन्तासंतापिताशयो बभूव । अत्रान्तरे सर्वर्तुकुसुमे वने वाणनगरे श्री भगवान्विधुशेखरो गिरिजया सह विजहार । तत्र गीतनृत्यकलालोलगंधर्वाप्सरसां गणैः सेव्यमानस्य मृडस्य संभोगविभ्रमः शुशुभे । तस्मिन्नेवावसरे देवविलासिनी चित्रलेखा भवानीवल्लभं सेवितुं विधिवन्ननर्त । ततोऽप्सरा विहितैस्तैस्तैः परिहासविडम्बनै र्भववल्लभा जहास । तत्र कुवलयेक्षणा वाणतनयोषाऽपि स्थिताऽऽसीत् । साऽथ श्रीशिवयोः क्रीडाविलासममरोत्सवं दृष्ट्वाऽभिलाषवती बभूव । एवं तां सादरां वीक्ष्य मृडानी बभाषे । उषे ! त्वमप्येवमचिरात् कान्तेन सह केलिसक्ता भविष्यसि । वैशाखे द्वादश्यां निशि हर्म्यसक्तायास्ते येन सह स्वप्ने संगमो भविता । स एव ते जातिवल्लभ इति श्रीभवान्या प्रोक्ता वाणतनया हर्षव्याकोशनयनोत्पलाऽन्तः पुरं जगाम ।

अथैकदा कुंभाण्डदुहिता चित्रलेखा सोत्कम्पकचन्यस्तहस्तां लज्जानताननां तां दृष्ट्वा पप्रच्छ । वाणतनये ! कुतस्ते भयं समुत्पन्नं यत् त्वं लतेव प्रकम्पसे ? निशम्यैवं सखीवचनं साऽथ जनास्रुभिर्मुखेन्दौ लांछनच्छायां कुर्वाणाऽब्रवीत् । सखि ! कलंकितकुलाऽसती नाऽहं जीवितुमुत्सहे । एवमाकर्ण्य साऽब्रवीत् । वयस्ये ! कुलयोषितः स्वप्न संगेन न कदापि दूष्यन्ते । किन्न स्मरसि यद् गौर्या केलिकानने सूचितम् ? भीरु ! स्वप्ने हृदयचोरस्ते वल्लभो भवितेति चित्रलेखया संस्मारिता सा सहसा प्रहर्षोन्मनसा तं सुधानिधिं कान्तं दध्यौ । ततस्तस्याः कोऽपि नवोऽभिलाषो व्यवर्धत । येन सपदि प्रबलो मन्मथानलः प्रजज्वाल । अथाऽन्येद्युरातपक्लान्तां लतामिव तां वीक्ष्य चित्रलेखाऽवदत । आलि ! स्वप्नदृष्टजनेऽनुरागः खपुष्पोत्तंसशेखरोपमः । बालेऽथवा

दर्पणप्रतिमालाभसदृशः किंवा तारकाचन्द्रयाचना तुल्योऽस्ति । न जानीमः स कः ? क्व चास्ते ? कथं वा केन संप्राप्यते ? परं त्ववश्यमेव तत्समागमस्ते स्वयं भविता । अस्तु तावत् । भगिनि ! त्रैलोक्यान्तरवर्तिनां सुरगंधर्वकिन्नरोरगरक्षसां महीपालानां च वपूंषि मायया पटान्ते लिखित्वा दर्शयामि । त्वं स्ववल्लभं क्षिप्रमेव जानीहीत्युक्त्वा चित्रलेखा सप्तरात्रेण सकलान् पटेऽभिलिख्योषां प्रदर्शयामास । ततो बाणतनया चित्रपटगतान् सुरभोगिनृपमानुषानवलोक्य वृष्णिवीरगणमध्ये श्री गोविन्दसुन्दरमनिरुद्धं ददर्श । साऽथ विस्मयानंदनिर्भरा तां प्रोवाच । सहृदये ! सैष एव मम कौमारव्रतचौरः। कोऽयं कान्तः कमललोचनो येन मनसा सह मे धैर्यं प्रसह्यापहृतम् ? निशम्यैवं चित्रलेखा सस्मितमवादीत् । सखि ! श्रीकृष्णपुत्रो यः प्रद्युम्नस्तत्सुतोऽनिरुद्धोऽयम् । देव्यादिष्टोऽयमेव ते हृदयवल्लभोऽस्ति । रतिरूपां त्वामन्वेष्टुं स्वप्ने साक्षात्कामोऽयं समुपस्थितोऽभवत् । किम्बहुना । समरेऽस्य विक्रमेण चकितैः सुरासुरैः सुभटा अपि सबांधवमनोरथाः खर्वी क्रियन्ते । श्रुत्वैतत् प्रातिभान्यस्तलोचना साऽब्रवीत् । सखि ! नाहमिदानीं कान्तं विना जीवितुमुत्सहे । यदि मम प्राणैस्तेऽर्थोऽथवा तेऽहं प्रिया सखी तदा त्वनेन कान्तेन मम क्षिप्रं संगमं कारयेति ब्रुवाणां तां चित्रलेखा जगाद । वयस्ये ! यथेदं शोणितपुरं ते पितुः सुभटैः परिरक्षि तं तथैव द्वारकाऽपि वृष्णिवीरैः परिपालिता ऽस्ति । सखि ! यत्र वीरस्याऽपि प्रवेशो दुर्घटस्तत्र गत्वा ते जीवितेश्वरं प्रसह्य समाहर्तुं कथम बलाजनः प्रगल्भते ? तथाऽप्येषाऽहं त्वत् प्रियाय विहायसा गच्छामि । सिद्धिस्तु गौर्या दिष्टा त्वद् भाग्येषु स्थितैवेत्यभिधाय सा बाणपुरात् तृतीये मुहूर्ते जवात् प्रस्थिता क्षणेन कैलासहासिनीं द्वारकामवाप्याऽलक्षितरीत्याऽतितुङ्गमनिरुद्धभवनं विवेश । ततस्तत्र बालमृगाक्षीभिः कान्ताभिः परिवारितं मनोभवलीलाललितचेष्टितं च तं समवलोक्य जातसाध्वसा चित्रलेखा मुहूर्तं व्यचिन्तयत् । अहोवत ! महत्यस्मिन् ससंशये कार्ये ...ताऽस्मि । अथवा प्रियसखीप्रीत्या प्रेम्णि किं विचिन्त्यते ? एवं मुहुर्मुहुर्ध्यात्वा सा ...विद्यया च सर्वं स्त्रीगणं समाच्छाद्य क्षणात् प्राद्युम्निं नीत्वोत्पपात । एवं संकल्प...क्तिरिव क्षिप्रगामिनी सा शोणितपुरं प्रविश्य हर्म्यस्थां सखीं प्रययौ । वल्लभावाप्तिमनो...रथाताकुलोषापि विहायसा सहसा सख्यानीतं दयितं विलोक्य पीयूषप्लावितेवाशु किं ...मीति संभ्रान्ता बभूव । ततो हर्षलज्जाभयैरनिर्वाच्यदशां याता सा सखीसमेतं ...तं नीत्वा गुह्यमंदिरं विवेश । साऽथ तरललोचना ताराधिपप्रभं सुस्फारमंदारशेखरं ...कुण्डलं च दृशा पिबंती सखीं संवृतिं पप्रच्छ । तत उषा शृंगारदीक्षागुरुणा तेन

सह रतिसंभोगसौभाग्यविभवं सस्मार । अथाऽनिरुद्धोऽपि भुवि दुर्लभां तां वल्लभां समवाप्यात्मानं स्मरसाम्राज्यसंपदां भाजनं मेने । एवं प्राद्युम्निर्गूढं तया ललनया सह तत्र रममाणोबहुभिर्लक्षणैः कन्यान्तःपुरवासिभिः परिज्ञातः । ततः कन्यादूषणरुषाऽतीव परितप्यमाना बलिसूनुनिर्दिष्टा घोरकिंकराः प्राद्युम्निं हन्तुं सहसाऽऽययुः । एवं कृष्टघोरासिकार्मुकान् बाणासुरसैनिकानवलोक्य वीरोऽनिरुद्धो द्वारपरिघमुत्थाय मृगान् सिंह इवोपाद्रवत् । सोऽथ तदुत्सृष्टां शस्त्रवृष्टिं पुष्पमालामिवोरसा समादाय स्वप्रेरितशरासारैर्दानवभटाञ्जघान । ततस्तत्प्रहाराभिहता हतशेषास्ते भयमवाप्य यत्र रणोत्कटो बाणोऽतिष्ठत् तत्र ययुः । अथ बाणः श्रुत्वा वृत्तान्तं प्रोवाच । अहो ! पुरंदरपुरध्वंससाक्षिणां भवतां कोऽयं कातरोचितः संभ्रमः समुपस्थितः ? संप्रति यशः कुसुममाधवेऽस्मिन् शौर्ये च समादरः क्रियताम् । निशम्यैवं दैत्यराजशासनं ते वीराः पुनरपि महासैन्येन प्राद्युम्निमाक्रमन् । ततो वीरः कृष्णपौत्रः प्रियादत्तंभास्वरखड्गं चर्म च समादाय निशि मण्डलानि चरन् समरे रिपूंश्चकर्त । अथ तेन कृत्ताशिरस्कन्धभुजजानुकरोदरा वीराः कल्पवातेनोन्मथिता महाघना इव धरण्यां पेतुः । अथ भग्नस्यंदनकुंजरे दानवानीके भग्ने निवर्तितसैन्यसागरो बाणः स्वयमदृश्यत । ततोऽनिरुद्धो भास्वता सहस्राश्वेन रथेन युक्तं शस्त्रास्त्रसज्जितं सेनासमेतं तिष्ठतिष्ठेति प्रलयांभोदनिःस्वनं गर्जन्तं तमापतन्तमपि चालोक्य नाकम्पत । अथ बाणबाहुबनोन्मुक्तनिरंतरबाणजालैर्जलधरछादितोऽर्क इव श्रीकृष्णपौत्रो बभूव । ततस्तयोर्हरिहिरण्याक्षोपमं भुवनाकम्पनाकम्पं महायुद्धमभूत् । ततो रुक्मिणीतनयः खड्गेन बाणबाणपरंपरां छित्वा द्रुतगत्याऽस्य रथकूबरं चापि चिच्छेद । एवमालोक्य क्रुद्धो दानवपतिस्तस्मै भोगिवधूमिव ज्वालाकुलां शक्तिं चिक्षेप । ततो धैर्यसागरो यादवो हस्तेन तां नीत्वा पुनस्तामेव दानवेन्द्राय प्राहिणोत् । साऽथ बाणदेहं भित्त्वा धरणीतलमाविवेश । विलोक्यैवं समीपस्थः कुंभाण्डो बाणमब्रवीत् । राजाधिराज ! साम्प्रतं मायामाश्रित्य युध्यस्वाऽन्यथाऽयं दुर्जयः प्रतीयते । यथा द्यूते तथा युद्धे मायिनामेव निःसंशयजयावाप्तिः श्रुता चावलोकिता । निशम्यैवं मंत्रिवचनं बाणासुरो विमोहिनीं मायामवलम्ब्य सहसा तिरोहितोऽभवत् । सोऽथ नभोगतो विषोल्बणै र्बाणैस्तं सद्यो विष्टितांगं विदधे । तस्मिन्नवसरे सोऽनिरुद्धो भुजगवेष्टितचन्दनद्रुम इव विबभौ । ततो दैत्यपति र्नागपाशनिरुद्धस्य प्राद्युम्नेर्वधे मतिं विदधे । अथेंगितज्ञो महामंत्री प्रोवाच । स्वामिन् ! कोऽप्येष महाप्रभावः क्षत्रियो विज्ञायतेऽतः सहसा बधं नार्हति । एतदाकर्ण्य मंत्रिवचनं बलिसुतो बधप्रसंगाद्विरराम । अत्रान्तरे द्वारकान्तःपुरे केनाऽप्यनिरुद्धो हृत इति

निः स्वनः प्रसृतोऽभवत् । तच्छ्रुत्वा सर्वा अप्यनिरुद्धदयिताः शोकविह्वला बभूवुः । अवसरेऽस्मिन् कैटभारिसभान्तरे वृष्णिवीराणां भेरीनिनादहूतानां सुमहान् समाजोऽभवत् । ततस्ते साश्रुनेत्रा निवातनिष्कम्पसप्तसागरोपममच्युतं दृष्ट्वा प्रोचुः । भगवन् ! भुवनाभयदायिनस्तव कोऽयं चिंतासंतापप्रसरः ? महांभोधिगंभीरोदारचेतसां सुखदुःखेषु हर्षशोकपरिप्लवा नहि नाम भवंति । अच्युत ! यदि त्वमप्येवं चिंतासंतापितो भवसि । तदा तु धैर्यगतिः सर्वथैव निरालम्बा जातेति मन्यामहे । किम्बहुना । जंभारिस्त्वद्भुजे त्रैलोक्यरक्षाभारं निक्षिप्य शचीसंभोगानन्दनिर्वृतः शेते । निशम्यैवं बन्धुजनवचनं वैरियशोहंसकुलाम्बुदः कृष्णो गंभीरमंथरं गिरं समादधे । महाशयाः ! केनाऽप्युत्सिक्तचेतसाऽयं यदुकुलमूर्ध्नि रथ्यापंकपरिप्लुतश्चरणोऽद्य पातितः । गृहस्थितेऽनिरुद्धे हृते महीभुजां पुरो नः पराक्रमो महोपहासकथामात्रपात्रतां यात इति मन्ये । केनाऽप्यविज्ञातेन विहितेऽस्मिन्निकारे कोपतुल्योग्रदण्डैः किं गगनताडनं कुर्मः ? आहुकाज्ञया तूर्णमनिरुद्धोपलब्धये बाह्याभ्यंतरचारिणश्चारास्सर्वत्र विचरंत्विति यदुपतिनोक्तेऽकस्मात् कलिकेलिविशारदो नारदोऽभ्युपागमत् । सोऽथ चिन्ताकुलितं केशवं दृष्ट्वाऽवदत् । अहोनु ! बालशफरोत्फालनेन सरित्पतिः समाकुलित इत्याकलतस्तस्य पाद्यासनपुरस्सरां पूजां जनार्दनश्चक्रे । अथार्चितः सोऽवदत् । अहोवत ! प्रतिपक्षपराक्रमे वो मोहो लक्ष्यते । पूर्वमेकाकिनोऽनिरुद्धस्य चेष्टितं तु जानीध्वम् । गतेऽन्हि बलिसूनुना बाणेनाऽनिरुद्धस्य प्रवृत्तशस्त्रास्त्रभैरवः समरोत्सवो वृत्तः । कृष्ण ! ते पौत्रोऽनिरुद्धो दैत्येन्द्रकन्यया हृतः । यां दृष्ट्वा स्मरोऽपि स्मरपीडितो मुह्यतीति मन्ये । दैत्यराजबाणस्य वर्तते राजधानी शोणितपुरम् । तत्र बाणासुरसुताऽम्बुजाक्षी उषा वसति । तत्पिता पुरा तु स्वपुत्र्याः स्वैरकामुकं दृष्ट्वा युयुधे । परन्त्वन्ते तं समरदुर्जयं मत्वा फणिमण्डलैर्बबन्ध । तदितो भवता योद्धुं बाणस्य गगनाग्रगं शोणितपुरं गंतव्यम् । यतो दानवाः सामसाध्या न भवंति । तत्रत्याभूमिर्मनुष्यागम्याऽस्त्यतस्तार्क्ष्यमारुह्य गम्यताम् । इत्युक्त्वा देवर्षौ याते मधुसूदनोऽपि दर्पविस्मयकोपानां तुल्यां विधेयतां प्राप । ततो भगवान् गरुडं सस्मार । स च ध्यातमात्र एव दिनमणिरिव प्रकाशितः सहसा प्रत्यदृश्यत । अथ विश्वात्मा हलधरप्रद्युम्नसमेतो हर्म्यारोहणलीलया तमारुरोह । सोऽथ पवनोद्धूतपीतांबरमनोहरो व्रजन् तार्क्ष्यपक्षप्रभाचक्रैर्हैमप्रभं नभश्चक्रे । अत्रान्तरे समरे बाणासुरेण भुजंगपाशैः सहोषया रुद्धोऽनिरुद्धो दुर्गतिनाशिनीन्दुर्गां स्तोतुमुपचक्रमे । कंसासुरैश्वर्यतमः पटलचन्द्रिके ! मातस्त्रायस्व । सपत्नीकोऽहं त्वां शरणं गतः । देवि ! त्वं यथा महिषासुरपीडितान्देवान्

रक्षित्वा त्रैलोक्यं रक्ष । तथा मामपि रक्षित्वाऽर्तत्राणं कुरु । जननि ! त्वमेव ब्रह्माणी रूपेण जगत्सृजसि । वैष्णवी भूत्वा पालयसि । रुद्राणीरूपं धृत्वा च संहरसि । अम्ब ! त्वां भूयो भूयोऽहं प्रणमामि । देवि ! प्रपन्नार्तिहरे प्रसीद । जगन्मातः ! पाहि माम् ।

भगवति ! त्वमेव कवीन्द्रमानसावासराजहंस्यसि । मह्यं प्रतिभायुतां मेधां प्रयच्छ । सकलार्थसम्पन्नं च मां कुरु । जगदम्ब ! यत्र न माता न पिता न भ्राता न सखा च दृश्यते । तत्र त्वमेव करुणां कृत्वा भक्तजनमुद्धरसि । महामाये ! त्वां मुहुर्मुहुरभिवन्दे । एवं प्राद्युम्निना भक्त्या स्तुता भगवती साक्षाद्दशभुजा दुर्गा पुरः सान्निध्यमकरोत् । साऽथ पाणिना दुर्भेद्यं भुजंगपंजरं स्फोटयित्वा स्फीतैर्निजतेजोभिर्दितिजेन्द्राणामायूंषि कर्षतीव नभः समाविशत् । अत्रान्तरे भगवान् गरुडध्वजः पावकरक्षितं बाणपुरं समागच्छत् । ततो विलोक्य बाणवरूथिनीविभवं कंसारिः शंखचक्रगदापद्मशरशार्ङ्गासिचर्मभृदष्टबाहुरभूत् । अथ हलायुधोऽपि सहस्रशिखरस्फारतुषारगिरिसंनिभः सहस्रकायवदनश्च बभूव । ततः प्रद्युम्नोऽपि श्रीसनत्कुमारकल्पः समपद्यत ।

एवं पृथुरूपेषु तेषु सहसा पृथिवी समकम्पत । ततो गरुडपक्षवायुक्षेपक्षुभ्यत्समुद्रमण्डलो जगतां कोऽपि प्रलयारंभसंभ्रमो बभूव । अथ सविस्मयो हलधरः कृष्णमुवाच । भ्रातः ! कथमकस्माद्वयं कनकद्युतयः संभूताः । तच्छ्रुत्वा जनार्दनः प्रत्यवदत् । भोऽऽग्रज ! पुरेऽत्राग्निराहवनीयो रक्षिता । सोऽस्मान् क्रुधा दग्धुमिच्छति । प्रतीकारोऽस्य सुपर्णाधीन इति शौरिणोक्ते पक्षाक्षेपधुताम्बुधिस्तार्क्ष्यो गंगामादाय पावकप्रशमं विदधे । एवमालोक्य विस्फारशिखराकारज्वालाजटाकुला रुद्रानुचरा वन्ह्योऽन्ये सहसा समुद्ययुः । तत्रादौ शूलं नीत्वा मेरुरिव मार्तण्डमण्डलाङ्कोऽगिराः समाबभौ । ततो हरि रर्धचंद्रेण प्रहर्तुस्तस्य शूलं वामो विधिरीप्सितमिव सद्यश् चिच्छेद । ततोऽग्निगहने ससंभ्रमे बाणानीके च भग्ने जनार्दनो निजयशःशुद्धं श्रीपांचजन्यं दध्मौ । अथ गरुडध्वजो बाणनगरं प्रविश्य युद्धसंनद्धं क्षुब्धं दैत्यमहार्णवं प्राप । ततो यदुपतिः पावकास्त्रशिलाशितैस्तदपारसैन्यं वध्यपटैरिव व्याप्तं चकार । अथाऽवसरज्ञो हलायुधो रणरसात्तूर्णं गरुत्मतोऽवतीर्य दैत्यसेनाभि र्युयुधे । तस्मिन्नवसरे श्रीसंकर्षणहलाकृष्टा मुसलाहताश्च ते दानवा वज्रभिन्नमहीध्रा इव धरण्यां निपेतुः । ततः सुपर्णात् प्रद्युम्नेन सहावतीर्योऽच्युतोऽपि बाणजालेन दैत्यजीवविहंगमान् जहार । अत्रान्तरे पक्षिराजचण्डचंचुचरणपक्षपातैश्च पीडिता भटा क्षयं गच्छन्तः क्षणमपि शर्म न हि लेभिरे । ततस्त्रिमुखस्त्रिशिखस्त्रिपात् ताम्रलोचनः खरतरलोमभिश्च मकरोपमो ज्वरो भस्म प्रक्षिपन्नदृश्यत । सोऽथ कोपा-

चित्रमण्डलचारिणं रौहिणेयमाहूय तत् क्षये मतिं धृत्वा च तच्छरीरे भस्ममुष्टिं प्राक्षिपत् । येन स सहसा विलुप्तस्मृतिरभवत् । ततो बलभद्रः क्षणं ध्यात्वाऽनुजं जगाद । कृष्ण ! कृष्ण ! प्रदीप्तोऽहं धृतिं न लभे । किम्बहुना । कुलालचक्रवद् विभ्रान्तं निखिलं जगत् पश्यामि । निशम्यैवं हलधरवचनं शार्ङ्गधन्वा भस्मशांत्यै तं परिष्वज्य स्वतजेसा ज्वरं जग्राह । ततस्तेन समाक्रान्तो ज्वरः क्रुधा ज्वलन् मुष्टिभ्यां ज्वालाजटाकुलं भस्म चिक्षेप । अथ प्रदीप्तोऽपि कृष्णस्तत्क्षणात् प्रशांताग्निरभवत् । एवमुभयोः कृष्णज्वरयो र्वज्रसन्निभो घोरसंग्रामोऽभवत् । ततोऽवकाशमवाप्य श्री शौरि र्दोर्भिर्निपीड्य च निविडं तं क्षितावपातयत् । अथ सोऽप्युत्थाय गुप्तरीत्या क्षिप्रं तच्छरीरं सहसा समीरवत् प्रविवेश । ततस्तेनाविष्टो भूतात्माऽपि क्षणं जृंभानिद्रालस्यादिविकारविवशो बभूव । विलोक्यैवं लोका मिथः प्रोचुः । अहो ! संसारेऽस्मिन् वस्तुशक्तिरप्रतिहता भणिताऽस्ति । यज् जगन्नाथोऽपि ज्वरसंस्पर्शविक्रियां भेजे । ततो भगवान् कृष्णो यद्यपि पूर्वज्वरापहमपरं वैष्णवं ज्वरं ससर्ज । तथापि स्वयं स ज्वरमुक्तो नाऽभवत् । ततः क्रुधा यावत्तं हन्तुमुद्यतस्तावद् गगनाद् देवो घोरनिःस्वनं वच उच्चचार । भगवन् ! ज्वरोऽयं रुद्रानुचरः सर्वथा रक्ष्य इति निशम्य मधुसूदनस्तद्वधाद्विरराम । अथ विष्णुवरार्दितो रुद्रज्वरः प्रणम्य भगवन्तं व्यजिज्ञपत् । नाथ ! मदनुकम्पया शीघ्रमेव निजं ज्वरं संहर ।

एवं तद्वाक्यान् माधवेन निजे ज्वरे संहृते शर्वपुरस्सरो ज्वरो हर्षाद्धरिं प्रणनाम । ततः किन्ते प्रियं करोमीतिवादिनं हृष्टमानसं तं श्रीमधुरिपुः प्रसादमधुराक्षरं प्रोवाच । राजरोग ! ये मन्मया नरा माम् प्रणिपत्यावयोर्बाहुयुद्धं संस्मरिष्यन्ति । ते सदैव विज्वराः संतु । तदाप्रभृति भूतिप्रहरणस्त्रिशिराः सास्रुलोचनस्त्रिपाच्च ध्यातो ज्वरः शरीरिणां ज्वरराहितदशां दद्यात् । किम्बहुना । कविमहाकविकवीश्वराश्च सर्वे मुक्तकण्ठं व्याहरन्ति । यद्रामकृष्णप्रद्युम्नाऽनिरुद्धाः स्मृता ज्वरान्निघ्नंतु ज्वरान्निघ्नंतु । ततः शौरिणोक्तः प्रीत्या ज्वरो हरिं तथाऽस्त्विति व्याहृत्य प्रणम्य च साग्रजः सपुत्रश्च तिरोहितोऽभवत् । ततो यदुपतिर्गरुडमारुह्य युयुधे । तस्मिन्नवसरे स्वामिसम्मानयंत्रिता अपि दैत्यसुभटाः कृष्णशरैर्विद्धा द्रुतं पलायितुमारेभिरे । विलोक्यैवं बाणासुरोऽब्रवीत् । भो भोः सैनिकास्तृणाग्रलघुभिः प्राणैः कल्पापायस्थिरं यशो विक्रीय किमर्थं यूयं गताः ? देहिनां मृत्युस्तु सर्वत्र विचरति । तच्छ्रुत्वा कुंभाण्डोऽप्यवदत् । सैनिकाः स्वामिकार्ये जीवितं विसृज्यैव भवंति ऋणोन्मुक्ताः । एवं बहुविधैरुपदेशैः प्रबोधिता अपि ते दश दिशो जग्मुः । अत्रान्तरे रणांगणे नंदियुक्तरथमारुह्य सगुहो भगवान् भगनेत्रहाऽपि

स्वयं योद्धुमुपस्थितोऽभवत् । ततो हरिस्तारकासुरविजयोदारकुमारानुगतं हरं विलोक्य सहसा निजधनुरपि सज्जं चक्रे । अथ क्रुद्धस्य खण्डपरशोः स्वयं समराडम्बरे शरीरिणाम काण्डप्रलयारंभशंका बभूव । ततो भर्गो वह्निशिखोपमैः कनकनाराचैः कृष्णं पूरयामास । एवमालोक्य जनार्दनो रुद्राय शरधारासहस्रोवं पर्जन्यास्त्रं मुमोच । ततस्त्रिपुरारिराग्नेयास्त्रं विदधे । येन जगत्त्रयं वित्रस्तमिव बभूव । अथ मुरारिणा वारुणास्त्रेण तस्मिन्नस्त्रे शमं नीते त्रिलोचनः पैशाचराक्षसगांधर्वैरस्त्रैः युयुधे । ततः क्रोधविधुरस्त्रिपुरारिः सौरवायव्यवासवास्त्रैस्तान्यस्त्राणि शीघ्रं विनिवार्य त्रिपुरान्तकरं शरं संदधे । एवमन्धकद्विषा चिराच्चापप्रणयितां तस्मिन्नीते हरिरपि विजृंभास्त्रेण तं विजृंभाकुलं व्यधात् । ततः शार्ङ्गपांचजन्ययोर्घोरघोषेण जृंभिते भैरवे भूतानि भीमभयं भेजिरे । अथ कुपितः कार्तिकेयः कुंभाण्डसूतेन रथेन रामकृष्णप्रद्युम्नान् प्रत्युद्गम्य दीप्तैरनिलानलपर्जन्यास्त्रै जगत् संक्षोभविभ्रमं विदधे । ततस्तारकान्तको रौद्रं ब्रह्मशिरोऽस्त्रमसृजत् । यस्य ज्वालाभि र्ज्वलिताः शैलाः सुमेरुतां प्रापुः । विलोक्यैवं हरिश्चक्रं समादधे । तत् प्रभुदोर्दण्डसंसक्तं सहसैवाग्निजन्यमुत्पातं शमयामास । ततो गुहः क्रौंचाद्रिदारिणीं शक्तिं चिक्षेप । तां वीक्ष्य देवा दिवि स्वस्त्यच्युताय स्वस्त्यच्युतायेत्यनदन् । अथ कृष्णोऽपि हुंकारेणैव तां सम्मुखागतां निस्सारां च कृत्वा क्षितावपातयत् । ततोऽच्युतोऽपि कोपं कृत्वा गुहवधे मतिमकरोत् । अत्रान्तरे मुक्तकेशी लोहितलोचना दिगम्बरा च श्यामा मूर्तिमती शक्तिरिव कुमाररक्षायै समागत्य कृष्णाग्रेऽतिष्ठत् । ततोऽपगच्छाऽपगच्छेति कंसारिणा सासूयमसकृन्निवार्यमाणाऽपि सा यदा नापससार । तदा तारतीरखैस्सैन्यैः स्वयं बाणः समुपाययौ । सोऽथ भुजमुद्यम्य प्रोवाच । कृष्ण ! प्रत्यासन्नविनाशस्त्वं दीपवद्विवर्द्धसे । किम्बहुना । विदेशेऽस्मिन् मृतबान्धवस्त्वं ध्रुवं कृच्छ्रेण जीवितं त्यक्ष्यसि । निशम्यैवं बाणवचनं गरुडध्वजो विहस्य प्रत्यवदत् । बाण ! नूनं कत्थनेनैव शूरोऽसि । यद्यस्ति किंचित्पौरुषं तर्हि तु दर्शय । ततो मुरारिणा शितशरासारैः पूरितः सदैत्यराजो दोःसहस्रेण घोरायुधपरंपरामसृजत् । सोऽथ हिरण्यकशिपोरस्त्रं समादधे । यद् भीत्यैव संतमसा वृता दिशः क्वाऽपि पलायां चक्रिरे । ततस्तदुद्भूतास्त्रनिचयैः पूरिते गगनांगने वायोरपि यदा गतिर्नासीत्तदा वराकाणां व्योमचारिणान्तु का कथा ?

अथाच्युतेन पर्जन्यास्त्रेण तस्मिन्नस्त्रे निवारिते बाणबाहुवनोत्सृष्टा शरवृष्टिः प्रासरत । युद्धे तत्र चंचुनखायुधौ बर्हिगरुडावपि मिथो विग्रहं कर्तुमारेभिरे । ततः पक्षाग्रक्षेपविक्षेपकारिणा तार्क्ष्येण समाकृष्य मूर्ध्नि ताडितो मयूरोऽद्रिरिव निपपात । एवं दैत्येन्द्रे विध्वस्ते

त्रिपुरारिप्रेरितो नन्दी रौद्रं रथं समादाय पुनः समरार्थं सुसज्जितोऽभवत् । ततो मन्युविषाकुलो बाणस्तूर्णं रथारूढो भूत्वा ब्रह्मशिरसा महास्त्रेण जगत्त्रयं चकार । विलोक्यैवं हरिर्देवद्विषां संहारं सहस्रारं च चक्रमुद्यम्य दैत्येन्द्रं तं समुपाद्रवत् । अत्रान्तरे सन्यस्तवसना काली पुत्रप्राणसंशयं विज्ञाय तद्रक्षार्थं पुरो बभूव । ज्ञात्वैवं मीलिताक्षः कृष्णस्तामवदत् । कथं वोंऽगना त्राणम् ? बाण ! संशयकालेषु नेदं वीरव्रतोचितमित्यभिधाय तां परिवर्ज्य च दुष्प्रेक्ष्यं चक्रमंजसोत्ससर्ज । ततस्तच्चक्रमलक्ष्यगत्या बाणभुजवने भ्राम्यन् क्रकचकार्यं चकार । अथ बाणः क्षणेन छिन्नशाखस्तरुरिव शोभाविरहितो बभूव । ततो भर्गो मधुसूदनं बाणकंठच्छेदोद्यतं दृष्ट्वा तमभ्युपेत्य सादरं प्रोवाच । यद्यपि यदुनाथ ! जगज्जन्मस्थितिसंहारकारणं त्वां जाने । तथाऽप्येष नः कोऽपि दैत्यपक्षपरिग्रहोऽस्ति । यो मद्भक्तः स तेऽपि भक्त इति बुद्ध्वा रक्ष बाणासुरमिमं मदेकशरणम् । किम्बहुना । त्रैगुण्यसंगतो ब्रह्ममूर्तिर्भवानहमेव । निशम्यैवं हरवचनं हरिस्तथास्त्विति व्याजहार । ततस्त्रिनेत्रं समामन्त्र्य गरुडध्वजे प्रयाते कृत्तभुजं बाणं चिन्ताकुलो नन्दी समभ्यधात् । अहोवत ! भवितव्यता कियतीति वयं न जानीमः । यत् त्र्यक्षे सपक्षेऽपि बाणो जीवित संशयमवाप । सखे ! छिन्नभुजोऽपि नृत्येन नटराजराजमाराधयेत्युक्तो नंदिना बाणः पदक्रमै र्ननर्त । येनाऽस्य भगवान्वरप्रदोऽभवत् । ततोऽयमीशानवरप्रभावान्महाकालाभिधो गणाग्रणीरभूत् । अथ सहसा पार्वतीपतौ सगणेऽन्तर्हिते शोणितपुरं दैत्यजनोज्झितं शून्यामिव बभूव । ततो विजेता गरुडध्वज उषासमेतं श्री प्राद्युम्निं बाणान्तःपुरमंदिरात्समानीय द्वारवतीं प्रययौ । सोऽथ व्रजन् बाणसदने दिव्याः कामधेनवः सन्ति । देव ! त्वया ता मदर्थमाहर्तव्येति सत्यभामावचनं सस्मार । ततोऽच्युतो यावज्जलधितटे चरन्ती र्धेनूरपहर्तुमिच्छति । तावदेव सर्वास्ता जवेन वरुणालयं विविशुः । एवमालोक्य रुषा चक्रपाणिर्वारुणं बलं संहर्तुं शरसंधानमकरोत् । ततस्तच्छरसंभारदारिते बलार्णवे कुपितो मणिच्छत्रो वरुणः स्वयमुदतिष्ठत् । अथ समरे शौरिणा वैष्णवास्त्रेण निर्दह्यमानो वरुणः प्राञ्जलिस्तमभाषत । जगत्पते ! जगत्सर्गेऽहं तवैवाद्या मूर्तिरस्मि । देव ! तमोमयं कोपं त्यक्त्वा मेऽपराधं क्षमस्व । बाणेन न्यासीकृतं च मे गोधनं परिरक्षेति तेन प्रार्थितो यदुनंदनः प्रीतो विहायसा प्रायात् । ततः सुरगणैः स्तूयमानः स द्वारकोपान्तमभ्येत्य निजमुखे निक्षिप्य च श्रीपांचजन्यं पूरयामास । अथ सुस्निग्धघननादिना गंभीरघोषेण वृष्णिवीरशिखण्डिनाम् कोऽप्यपूर्वो हर्षोत्सवोऽभवत् । ततो देवो द्वारकां प्रविश्य सर्वयादवैः पूजामवाप्य च सहानुगं महेद्रं सुपर्णं च सत्कारपूर्वकं विस-

सर्ज । सोऽथ प्रियतमाप्रणयप्रेमलालसो यदुपतिः स्वर्गोपमायां द्वारावत्यां चिरं विजहार।

एवं महामुनिर्वैशम्पायनो जनमेजयभूपतिमवोचत् । तच्छ्रुत्वा शौनकः पुनः सूतं पप्रच्छ । महाशय ! पूर्वे वंशास्तु श्रुताः । सांप्रतं राजर्षि जनमेजयस्य संतानपरपरां श्रोतुमिच्छामि । एतन्निशम्य पुराणज्ञोऽब्रवीत् । जनमेजयाच्चन्द्रापीडसूर्यापीडावभूताम् । ततश्चन्द्रापीडाद्भ्रातृशताग्रजः श्रीसत्यकर्णोऽभवत् । सत्यकर्णसुतःश्वेतकर्णो यदा देवलोकमगात्। तदा तद्भार्या मालिनी सद्योजातं कुमारं गिरिकंदरे धृत्वा पतिमनुसृत्य च स्वर्गमवाप। स एव बालको मुनिजनपालितोऽजपार्श्व इति संज्ञा मवाप्य महायज्वाऽभवत्। ततस्तत्पुत्र पौत्रैश्च विपुलोऽयं पुरुवंशो विवर्द्धितः। किम्बहुना । श्री सूर्यादिग्रहहीना महीभवितु मर्हति । परंतु पुरुवंशरहिता पृथ्वी न कदाचिद् भविष्यतीत्याभिधाय ययातिः सुरलोक मगादिति वृद्धानुशासनम् । एवमाकर्ण्य महाभारतं सर्वे श्रोतारः कृतार्था बभूवुः ।

अथ भारतपर्वपूजाविषये श्रीजनमेजयेन पृष्टो व्यासशिष्यो दानविधिमवोचत् । आदिपर्वणि विप्रेभ्यो मधुपायसं प्रदद्यात् । सभापर्वण्यपूपमोदकैस्तर्पणं कुर्यात् । आरण्यकं फलमूलान्यर्पयेत् । वैराटे वस्त्रदानं प्रशस्यते । उद्योगेऽन्नदानं तथा श्रीभीष्मपर्वणि जलदानं पुण्यप्रदं भणितम् । द्रोणपर्वण्यायुधदानं श्रीकर्णपर्वणि च शुद्धान्नं देयम् । शल्यपर्वण्यपूपादिगुडोदनदानं पुण्यमभिहितम् । गदायुद्धे मुद्गामिश्रमन्नंदेयम् । स्त्री पर्वणि भूषणदानं श्रेयस्करं स्मृतम् । ऐषीके घृतौदनं शांतिपर्वणि च हविष्यं श्रेष्ठमभिहितम् । अश्वमेधेऽपि हविष्यं प्रशस्तम् । मौसले गंधमाल्यादिदानं तथा प्रस्थाने पादुकासमर्पणं कुर्यात् । स्वर्गपर्वणि मिष्टान्नं दद्यात् । हरिवंशं च श्रुत्वा पायसं समर्पयेत् । एवं सर्वेषु पर्वसु यथाशक्ति पुण्यं कुर्यात्। भारतान्ते सरस्वतीपूजां विदध्यात्। य एवं वक्ता श्रोता च प्रतिपर्व शास्त्रीयविधिमनुसरति स पुमान् सर्वयज्ञफलं लभते । हिरण्यदो हरिमेतीति समादिश्य श्रीमत् पुराणेतिहासकोविदः सूतो विरराम ।

एवमाकर्ण्य शौनकः पुनः पप्रच्छ । महाप्राज्ञ ! सर्पसत्रे निवृत्ते राजा जनमेजयः किमकरोत् ? तच्छ्रुत्वा सोऽब्रवीत् । ततो राजा विद्वन्मंत्रिपुरोहितैश्चिन्तयित्वा हयमेधार्थं पूर्णं संभारं समादधे । अत्रान्तरे वेदविद्यानिधिः श्रीमान् कृष्णद्वैपायनः समागच्छत् । एवमालोक्य राजा महार्हासनासीनं तं पूजयित्वा करौ संयोज्य च पप्रच्छ । भगवन् ! पुरा राजसूये महान् क्षत्रक्षयोऽभवत् । तस्मिन् समये भवता पाण्डुपुत्राः कथं न निवारिताः ? निशम्यैवं भूपवचनं वेदव्यासः सस्मितमवादीत् । राजन् ! तस्मिन्नवश्यभाविनि तत्क्षये वयं कथं प्रभवामः ? विधिचोदितः कश्च मन्यते ? सर्वात्मनेयं भवासक्तजन्तु-

यातायातानिलाहतिर्भवितव्यता बलवती विजृंभते । राजन् ! शुभाऽशुभकर्मफलप्राप्तिः सहजाऽप्यप्रवर्तिनी ललाटस्था भ्रूलतेव स्वदृशा केन दृश्यते ? कालपरीतानां तेषां दृढनिश्चया धीरभूत् । यतः कर्वंकषो हि भगवान् कालो निखिलान् कवलयति । यदि देहिभिर्दैवनिर्विष्टं वचसा लंघ्यते । तर्हि तु तत्सत्रमश्वमेधमपि त्वं मा कृथाः । यतः स विघ्नप्रदो हि । किम्बहुना । शतक्रतुस्तव क्रतुशतत्रयं श्रुत्वा द्वेषाद्यज्ञाश्वं प्रविश्य पत्नीं धर्षयिष्यति । ततः प्रभृति लोकेऽस्मिन् कलिकल्मषे प्रवृद्धे महायज्ञकथामात्रमपि दूरे भविष्यति । ततः कश्चित् काश्यपिर्विप्रस्तत्रागत्य हयमेधं प्रत्याहरिष्यतीति श्रुत्वा विषण्णेन महीभुजा पृष्टो महामुनिः पर्यन्तयुगलक्षणं जगाद । राजन् ! यदा लोके वर्णाश्रमाचारचर्चा विपरीता भविष्यति । तदा कलियुगस्य यौवनमवगंतव्यम् । नराः सत्यशीलविवर्जिताः क्षणसौहृदो निरुष्णीषाम्बराः केशात्रेशाश्च भविष्यंति । दस्यवो राजचरिता राजानश्च दस्युचेष्टिता भूत्वा धर्मसंक्षये कलिसाहाय्यं करिष्यंति । कलौ लोकाः पक्वान्नविक्रयिणो द्विजा वेदविक्रयिणो गृहिण्यश्च भगाविक्रया भविष्यंति । शूद्रा ब्राह्मणाननादृत्य स्वयमुपदेष्टारो भविष्यंति । वृषलाः कषायवसना मुण्डाश्च भूत्वा प्रतिग्रहान् ग्रहीष्यंति । नार्यो रूपलावण्य माधुर्येषु परिक्षीणेषु केशालंकरणा गतत्रपाश्च भविष्यंति । कलौ मूर्खाः पण्डितम्मन्याः निर्विवेका मोक्षार्थिनः, कुलीनाश्च निष्प्रयत्नफलेप्सवश्च भविष्यंति । कलियुगे रक्षकात्र्यपि राजानो भक्षका भविष्यंति । किम्बहुना । प्राप्तेऽवसरे दारापहरणमपि करिष्यंति । हिमवत् पार्श्वसंश्रयो बहुस्त्रीकोऽल्पपुरुषो लोकस्कन्धार्पितापत्यश्च हाहाभूतो विचरिष्यति । कलियुगे दंभः शौचं हिंसा शौर्यं, अन्योपघातो, वृत्तिः, शास्त्रं तर्को, नास्तिकत्वं बोधः, शौचाचारपरित्यागश्च मोक्षो भविष्यति । किम्बहुना । दशलक्षणसम्पन्नोधर्मोऽपि निष्प्रभो भविष्यति ।

ततो ज्ञानदिवाकरे व्यासेऽन्तर्हिते राजर्षेरश्वमेधः क्रतुरवर्तत । तस्मिन्यज्ञे कामासक्तः शतक्रतु रश्वं प्रविश्याऽकामपि वपुष्टमां राजपत्नीमधर्षयत् । ततोऽध्वर्युगिरा राजा कोपं कृत्वा यज्ञांशनिषेधेन शक्रं शशाप । ततो भूपो निजविषयान्निरस्य सासूयं ब्राह्मणान् पत्नीशालां प्रविश्य च प्रोवाच । इयं पंककुल्या कुटिलचारिणी निष्कास्यताम् । दूषितेयं मे गृहे स्थातुन्नार्हतीति वादिनि भूपाले स्वयं गंधर्वाधिपतिर्विश्वावसुस्तमभ्युपेत्य सौहार्दादिदमब्रवीत् । राजन् ! एषा तव वधू रंभाख्या देवविलासिनी वर्तते । यज्ञेऽस्मिन् सत्येषा सुरेन्द्रेण धर्षिता । विप्रभयात् त्वत् प्रभावान् मनोभवद्वेषाच्च सुरेन्द्रेण ते क्रतौ दैवदिष्टो विघ्नो विहितः । देव ! विप्रेभ्यो मा क्रुधः । शुद्धमानसां पत्नीं च मा त्याक्षीः । अकामाया गुह्यांगस्पर्शोऽपि दृश्यांगस्पर्शसन्निभोऽस्ति । जनजन्ममहीरन्ध्रे स्त्रीणां स्वभावतोऽशुद्धं शुद्धिमाधत्ते । अतो

मुधा ब्राह्मणान्मावधीरितिगन्धर्वराजेन बोधितो जनमेजयो विचिन्त्य कोपं परित्यज्य च स्वस्थमना बभूव । अतएव प्रोक्तं महात्मभिर्यद् विधिलिखितं कोऽपि निवारयितुन्न शक्तः ।

एवं वैशंपायनकीर्तितं श्रीविष्णुचरितं निशम्य राजा पुनर्वाराहप्रादुर्भावं पप्रच्छ । एवमाकर्ण्य स मुनिर्विनयाद्धरिं प्रणिपत्य कलिकल्मषापहं विष्णुप्रभावं वर्णयितुमारभत । राजन् ! पूर्णे युगसहस्रांते ब्रह्मवासरे च निवृत्ते स्वयं वृषाकपिः शिखाभिः सगिरिकाननमखिललोकं च दग्ध्वा गर्भीकृतजगत्त्रयो नारायणः शेते । ततो गर्भीकृतविश्वः स प्राग्हिरण्मयमण्डं मुमोच । अथ तेन तद्भिन्नमूर्ध्व मधो दिक्षु च विवृतमष्टधाऽभूत् । तत्र यत्सलिलमासीत् । तस्मिन् गिरीन्द्रशतपीडिता मेदिनी ममज्ज । अत्रान्तरे विष्णुतेजसा प्राणितमखिलं धर्तुमक्षमा धरित्री गौरिव मग्ना वैकुण्ठं शरणं प्रायात् । ततो हरिर्गिरिमिव विश्वंभरोद्धारधीरं दुष्टसंहारि वाराहं वपुरकल्पयत् । सोऽथ दंष्ट्राखण्डेन्दुखण्डितध्वान्तः पातालतलं विवेश । ततो मंत्रात्मा वेदयज्ञाङ्गः स महावराहो दंष्ट्राग्रेण शैवाललतिकामिव क्ष्मामुज्जहार । एवं जगन्निवासो जगद्धात्रीं वसुधां समुद्धृत्य संसारस्थितिं विधाय च भूधरान्निवेशयामास । सोऽथ शंखचक्रगदाकारान् पर्वतान्विनिवेश्य वक्त्रादेव प्रजापतिमाद्यपुरुषं ससर्ज । ततः किंकरोमीति पुरतः सादरं तस्मिन्वदति श्रीविश्वयोनिरात्मानं विभजेत्यादिश्य सद्यस्तिरोदधे । अथ चिन्तयतस्तस्य ओमित्युच्चरन् चिदाकाशसमुद्भवो महानादः प्रादुर्बभूव । ततो वषट्कारसहिता महाव्याहृतयस्तथा सनातनीश्रुतियुता वेदमाता श्रीसावित्री च समुदपद्यत । अथ प्रजापतेर्विशुद्धमानसावासराजहंसा जगद्वन्द्याः पूर्वे सप्तर्षयोऽजायंत । पुरा स्वयंभुवो दक्षिणांगुष्ठाद्यो दक्षप्रजापतिरभूत् । तत्सुताः श्रीधर्मेन्दुमनुकश्यपाः प्रापुः । राजन् ! तासामयं ससुराऽसुरो विश्वसर्गो विराजते । अत्रान्तरे कश्यपाददितिर्देवान् दितिश्च दैत्यानसूत । ततः सपक्षा गिरयो हिरण्याक्षं दितिजेश्वरं समाश्रित्य गत्या भुवनविप्लवं कर्तुमारेभिरे । एवमालोक्य भुवनहितैषी श्रीशक्रो गिरिपक्षांश्चिच्छेद । ततो गिरिपक्षपातिना हिरण्याक्षेन सह देवानां दारुणः संगरोऽभवत् । तस्मिन् महास्त्रविक्षेपभूतक्षोभविभीषणे रणे हिरण्याक्षो देवाञ्जिगाय । अथ ध्वस्तधैर्येषु देवेषु गिरिविग्रहो वराहोऽभ्येत्य दंष्ट्राकरालवक्त्रेण शंखं दध्मौ । एतदाकर्ण्य तत्रागतो हिरण्याक्षः शत्रुक्षयदूतिकया शक्त्या वक्षसि देवेशं जघान । ततो दैत्यारिरद्भुतविक्रमं दैत्यमवलोक्य वैरिसंहारार्थं सहस्रारं सुदर्शनं विससर्ज । अथ तेन दैत्यराजस्य मस्तके छिन्ने विध्वस्तदानवा दिशः प्रययुः । एवं देवरिपौ हिरण्याक्षे हते महावराहेण धृता देवा स्वपदमवाप्य यथापूर्वं सुखमन्वभूवन् । पुरा कृतयुगे श्रीकाश्यपो हिरण्यकशिपुर्वर्षायुतं तपश्चक्रे । सोऽथ विरं-

चिवरात् सुरगंधर्वकिन्नरोरगरक्षसामायुधानां च सर्वेषामवध्योऽभवत् । ततः स त्रिभुवन-राज्यमवाप्य सर्वाः सुरांगनाः प्रोषितभर्तृकाश्चक्रे । ज्ञात्वैवं तत्प्रताप्निनिष्प्रभा देवा ब्रह्म-वाक्याज्जनार्दनं शरणं ययुः । स वरदो भगवान् तेषामभयं दत्वा ओंकारानुगतं नारसिंहं महद्वपुश्चक्रे । सोऽथ प्रलयानलसंनिभो दैत्यनिलयं गत्वा सूर्यसहस्राभां हिरण्यकशिपुसभां ददर्श । ततः स पृथुरत्नासनोत्संगे सिद्धगंधर्वकिन्नराप्सरसांगणसेवितं श्वेतोष्णीषं च तं विलोक्य पुरुषविग्रहः सिंहः प्रादुरासीत् । एवं कृशानुशतपिंगलं श्री हरिं वि-लोक्य विस्मयार्ता दितिजा मिथो मुखानि विलोकयामासुः । ततः कोऽयमित्याकुले दैत्यस्थान सभांगणे हिरण्यकशिपुसुतः श्री प्रह्लादोऽब्रवीत् । अहो ! देवोऽयं कोऽपि सर्वदेवमयो विद्यते । यद्दर्शनेन नश्चेतांसि वचांसि च स्थगितानीव जातानि । स एवाऽयं येन प्रमा-थिना हिरण्याक्षः कालकापालिकोत्तालस्कन्धवल्कलकेतुतां नीत इति ब्रुवाणे प्रह्लादे भ्रुकुटी कुटिलाननो हिरण्यकशिपुर्दैत्यान् गृह्यतांगृह्यतामित्यभाषत । एवमाकर्ण्य विप्रचिति-प्रभृतयो दानवा अपि मिलित्वा तं पर्यवारयन् । ततो देवारिदलनो देवो ज्वालाजाल-जटाकुलां तदुत्सृष्टां शस्त्रवृष्टिं शोणपुष्पां स्रजमिव जग्राह । सोऽथ शिखरिदारुणैः शरैः खद्योतैरिव व्याप्तो दङ्मात्रेणैव वातक्षिप्ततृणोपमांस्तांश्चक्रे । ततो दैत्यचक्रे वि-ध्वस्ते दष्टौष्ठो हिरण्यकशिपुः क्रुधा स्वयमुत्तस्थौ । ततः स क्रमशो हलदण्डत्रिशूल कंकालमुसलकालचक्राणि प्रक्षिप्य शक्तिब्रह्मास्त्रपाशुपतास्त्राण्यपि तूर्णं चिक्षेप ।

एवं विविधास्त्रैश्छाद्यमानोऽपि नृकेसरी यदा न चकम्पे । तदा नानाप्राणिमुखयुत दैत्यपरिवृतो हिरण्यकशिपुर्जगतां क्षोभं चकार । ततो भक्तवत्सलो नृसिंहदेवो बला-द्दैत्यमाकृष्य तमुत्संगे च धृत्वाऽऽशुवज्रोग्रनखरै र्वक्षस्यदारयत् । अथ हरिनखक्रकचनि-ष्पेषजातबर्हिशिखा इव दैत्यहृत्कमलोदीर्णाः शोणितच्छटा सहसा निर्ययुः । एवं दर्पशालि-प्रवरे दैत्येश्वरे निहिते देवा नृहरिनिर्दिष्टां निजां लक्ष्मीं समुपेदिरे । अथ श्रीचतुर्मुखमुखै-र्देवैः स्तुतो मोक्षपथार्थिनां च ध्येयो विष्णुः सपदि क्षीरसागरोत्तरं कूलमगमत् ।

हिरण्यकशिपुसुतः प्रह्लादो दैत्यकुलोत्पन्नोऽपि हरिभक्तिपरायणो बभूव । प्रह्लादा-द्विरोचनोऽभवत् । विरोचनसुतो बलिः स्वयं दैत्यगणैः शक्रपदे धृतः । सोऽथ वीरवरो भुवनव्यापिभि र्बलैस्त्रिदशांजेतुममरावतीं ययौ । ततस्तेन नगरविस्फारै रथै र्गिरिराज-निभैर्गजैर्वातवेगैश्च तुरगै र्गगनमपूर्यत । ततो विन्दजंभनमुचिस्वर्भानुतारकप्रह्लाद-शंबरकुंभोदरविप्रचित्तिहयग्रीवमुख्यै र्दैत्यैः सह देववृन्दं पुरस्कृतस्य श्री शक्रस्य युद्धं भवितु मारब्धम् । स महायज्ञः कोपानलः खड्गयूपो रुधिराज्यं धनुःस्रुवश्चासीत् । तत्र दीक्षितो

बलिरतितरां शुशुभे । ततस्तत्र सैन्ययोरुभयोरस्त्रास्त्रि शस्त्राशस्त्रि दंडादंडि केशाकेशि च घोरयुद्धमभूत् । किम्बहुना । तत्र स्वल्पेनैव कालेन सेनयोरुभयो र्घोरक्षयोऽभवत् । ततो दैत्यास्त्रनिस्त्रिंशदारिता स्वासमवाप्य त्रिदशा दशापि दिशो भेजुः । अथ भग्न-चक्रे शक्रे गहनैषिणि दहने मारुते विरते युद्धाद् गृहीतप्रशमे च यमे वीरो बलिस्त्रैलोक्यं शशास । ततः कथाशेषे देवराज्ये दैत्यराज्ये च प्राज्ये चतुर्मुखगिरा देवा नारायणं त्राणं ययुः । अथाऽव्यक्तरूपो भगवान् गीर्वाणगणैरभ्यर्थितः सन् योगाददितेर्वार्षसहस्रिकं गर्भं विवेश । सोऽथ काश्यपसुतो विष्णुर्जगज्ज्येष्ठोऽपि वामनविग्रहोऽजायत । अत्रा-न्तरे श्रीमान्बलि र्हयमेधाय दीक्षितोऽभवत् । ततो दैत्यराजस्य दानशौण्डत्वमाकर्ण्य भगवान्वामनश्छत्रदण्डधरः स्वयं यज्ञभुवं विवेश । अथ बलिः श्रीश्यामसुन्दरं पद्मपलाशाक्षं किरीटिनं सतिलकं पीताम्बरं च वटुं वीक्ष्य निश्चलतां ययौ । ततो वामनाकृति र्ब्रह्म-चारी दैत्येन्द्रं समभ्येत्य मधुरोदारगिरा पीयूषं वर्षन्निव प्रोवाच । राजन् ! श्रीरुद्रेन्द्रचन्द्र कुबेरवरुणप्रजापतियज्ञसमोऽयं तव क्रतु र्विराजते । यथा दीक्षितस्त्वं देहिनां वरस्तथा यज्ञानाम्मध्येऽश्वमेधोऽप्ययं तव श्रेष्ठतमः । निशम्यैवं वामनवचः पूतात्मा बलिर्जगाद । साधो ! तवेदं दर्शनीयं वपुर्मम मानसमतितरां प्रीणाति । तवेयं श्रोत्रशुक्तिसुधाधारा वाणी लोके नूनं सर्वप्रियास्ति । कथय किन्तेऽभिमतं ददानि ? त्वादृशां तु महात्मनां शरीर-मपि नादेयं किम्पुनर्बाह्यपरिच्छदादिकम् ? एतदाकर्ण्य श्री बलिवचनं वामनः प्रत्यभाषत । राजाधिराज ! गुर्वर्थं मह्यं केवलं पदत्रयं संप्रदीयताम् । अतः परं भवत्प्रीतिमेव बहुमन्ये । तच्छ्रुत्वा विस्मितमना बलिः प्रोवाच । वर्णिन् ! यदा दाता तु बलिर्भवाद्विधश्चार्थी तदा त्रिपदी कथं दीयताम् ? किम्बहुना । मुनिराज ! ससागरगिरीन्द्रा वसुन्धराऽपि ते स्वल्पे त्युच्यमाने हरिर्यदा नाधिकं ययाचे । तदा लज्जानताननो बलिस्तस्मै हस्तोदकं प्रादात् । ततः सर्वदेवमयो विष्णुः पद्भ्यां पृथिवीं शिरसा च क्षणाद् दिवं व्याप । सोऽथ जगदेतत् संपूर्णं मे पदद्वये न पर्याप्तमिति कम्पविलुठद्भिर्गिरिशब्दैरिव जगाद । एवं श्रीत्रिविक्रमस्त्रै-लोक्यमाक्रम्य दैत्यपते राजलक्ष्मीं च क्षणाद्धृत्वा सुतले नाम्नि पातालतले तस्य स्थितिं समादिशत् । अहो ! बलवतो बलेः सत्वं महोदधिस्फीतं नूनम् । येन स्वकायबंधेनाऽपि दानशेषोऽपि विशोधितः ? विलोक्यैवं भगवद्रूपं सुरगंधर्वसिद्धसाध्यचारणकिन्नरा विस्मयाविष्टा-भूत्वा पुनः पुनस्तं प्रणेमुः । ततोऽच्युतो दितिजसंघातं हत्वा बले र्वृत्तिं च कल्पयामास । राजन् ! यदश्रद्धया हुतं, हीनविधिना दत्तं, अश्रोत्रियं श्राद्धं, अमंत्रमव्रतमनुष्ठानं, दक्षि-णारहितो यज्ञस्तथा नियमरहितं च यत्किमपि सुकृतं भवेत्तस्य फलभाक् त्वमेवासि ।

ततो देवाधिदेवो भगवान् विष्णु र्देवान् निजपदे यथास्थानं निवेश्य सुरेन्द्रस्य स्रजमिवोज्ज्वलां स्वर्गलोकलक्ष्मीं च समादिदेश । राजन् ! इदं प्रादुर्भावप्रसंगेनश्री पुण्यप्रदं कमलापतिचरितं ते कथितम् । यः श्रद्धया भगवद्गुणानुवादं वर्णितवान् वर्णयति वा वर्णयिष्यति स सर्वपापविनिर्मुक्तोऽवश्यं परमपदमवाप्स्यति । एवमेवं यो भगवच्चरित्रं श्रुतवान् शृणोति किं वा श्रोष्यति श्रावयिष्यति वा सोऽपि पुण्यफलमवाप्य त्रिविधपापतापविनिर्मुक्तः शाश्वतं वैकुण्ठधामसमवाप्स्यतीति श्रुतिस्मृतिपुराणविदामनुशासनम् ।

पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवाऽवशिष्यते ॥

भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षिभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिर्व्यशेमहि देवहितं यदायुः ॥ साम ॥

स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति न स्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥
ओ३म् स्वास्ति नो वृहस्पति र्दधातु ।

इतिश्रीपुष्करारण्यान्तर्गताऽजमेरनगरस्थ त्रिपाठ्युपाख्यराजगुरुपण्डितवदरीलालात्मज श्रीजानकीगर्भसमुद्भवशिवदत्तकाव्यतीर्थविरचिते गद्यभारते श्रीहरिवंशपर्व समाप्तिमगात् ।

पञ्चरत्ननिधिव्योम संख्येविक्रमवत्सरे ।
ज्येष्ठशुक्लतृतीयायां ग्रंथोऽयं पूर्णतामयात् ॥

श्रीरस्तु । कल्याणमस्तु । श्रीसाम्बसदाशिवार्पणमस्तु ।

ॐ शान्तिः । शान्तिः । शान्ति ॥



॥ ओं नमः शिवाय ॥

# ॥ वंशपरिचयः ॥

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥

आसीत्कृष्णगढे राजनीतिनिपुणो राजसिंहो नाम नृपतिः । तस्य सामंतसिंह-बहादुरसिंहवीरसिंहप्रभृतयः पाण्डवोपमाःपंचपुत्रा बभूवुः । तेष्वग्रजः सामंतसिंहः संसाराऽसारतां ज्ञात्वा स्वानुजे बहादुरसिंहे राज्यभारं निक्षिप्य भगवदाराधनाय वृन्दावनं जगाम । तत्र स महाशयो नागरीदास इति प्रसिद्धोऽभवत् । सोऽथ महा-भागः परया भक्त्या श्रीकृष्णचन्द्रं प्रसाद्य तद्वरप्रभावान्महाकविपदं समवाप्य च देशभाषायां नागरसमुच्चयाभिधानं भक्तिरसप्रधानं महाकाव्यं रचयामास । तत्रत्य पद्यानीदृशानि महोहराणि संति । यान्यवलोक्य चेतः श्रीकृष्णच द्रभक्तिसागरे निमज्य परमानंदमवाप्नोतीत्यक्षरशः सत्यम् । अत्रान्तरे भारताधीश्वरस्य श्री-वाजीरावपेशवेतिविश्रुतस्य सेनापतिना श्रीसदाशिवरावेण सह दुर्रानिनोऽहमदशाहस्य पानीयपतिक्षेत्रे महायुद्धमभूत् । तत्र वीरवरो वीरसिंहो महाराष्ट्रपक्षमवलम्ब्य युध्यमानो देशसेवायां प्राणान् विसृज्य महेन्द्रपुरातिथिर्बभूव । ततोऽजमेराधिपः श्रीमाधवराव सिन्धियेतिविश्रुतःसाम्राज्यकृतज्ञतांप्रदर्शयन् महाराज वीरसिंहसुता-भ्यां सुरतसिंहाऽऽमरसिंहाभ्यां तद्दायभागं स्वल्पावशिष्टं ज्ञात्वा ग्रामषट्कं परितोषाय प्रादात् । अथगच्छताकालेनश्रीसुरतसिंहभूपतेः पावककल्पा यशवंतसिंहार्जुनसिंहशेर-सिंहाभिधास्त्रयः पुत्रा बभूवुः । तेषु महाराजश्रीयशवंतसिंहजा श्रीकल्याणसिंहः रला-वताख्यराजस्थाने राज्यं कुर्वंति । श्रीमदर्जुनसिंहजा मगराख्यग्रामं शासति । अथ श्रीशेरसिंहमहीपजाश्च गंगवाणाख्यग्रामस्याधिपत्यमवाप्य शासनं कुर्वन्ति ।

एकदा हरिभक्तिपरायणा पितामही श्रीनगीनादेवी मामवोचत् । वत्स ! वंशेऽस्मिन् १०८ श्री विभूषितश्रीमद्वल्लभाचार्यसम्प्रदायस्यैव प्रचार आसीत् । तत्प्रभावात्



वर्णमालानभिज्ञापि श्रुत्वा भागवतीं कथाम् ।
सर्वं रहस्यमज्ञासीद्धन्यासीन्मे पितामही ॥
या मामश्रावयद्बाल्ये प्रत्यहं भारतीं कथाम् ।
सा नगीनाभिधा देवी स्वर्गस्थाऽपि प्रसीदतु ॥

वे० यं०, अजमेर.

सर्वेऽपि वंशजाः श्रीमद्भगवतः कृष्णचन्द्रस्योपासका अभूवन् । तत्रासीत्सूर्यकुमारीतिप्रसिद्धा राजकन्या । सा बाल्यात्प्रभृति श्रीहरिसेवारताऽभवत् । मातापितरौ लोकपद्धतिमनुसरन्तौ तां बाघोराधिपतये प्रादात् । विवाहादूर्ध्वं सा मुखदर्शनपुरस्कारार्थं भूपतिना संप्रार्थिता श्रीवृन्दावनवासमेव ययाचे । ततः सा पुनः पुनः सखीभिः प्रबोधिताऽपि तमेव सदाग्रहं यदानाऽत्यजत् । तदा नितरां विषण्णो राजा यथाकथंचित् तां प्रार्थनामंगीचकार । साऽथ पितृगृहं समागत्य कानिचिद् दिनान्यत्र च स्थित्वा श्रीवृन्दावनं ययौ । तस्मिन् समये त्रिपाठि स्नेहिलालस्तत्र प्रबंधार्थमगमत् । ततः सा महाभागा भगवद्भक्तिं कुर्वाणा श्रीराधाकुण्डाभिधे ग्रामेऽवसत् । तत्र सा पितृरचितं नाम परित्यज्य व्रजदासीति नाम रचित्वा व्यवहारमचालयत् । ततः सा श्रीमद्भागवतमधीत्य दोहात्मकं नवीनं भाषाभागवतं रचयित्वा कृतार्था बभूव । तादृशी विदुषी राजपत्नी राजस्थानेषु विरलैव श्रूयते ।

एवमस्मद्वंशेऽपि श्री चैनादेवीति प्रसिद्धा महासती बभूव । तस्या जन्म नागोर समीपवर्तिनि ताऊसराख्ये ग्रामेऽभवत् । अजमेरे श्रीशंभुलालत्रिपाठिना सह तस्या विवाहोऽभूत् । एकदा स महाशयो राजकरपूर्णशकटं समारुह्य पूना नगरं जगाम । तत्र राजकोशे धनं निक्षिप्य स्वनगरं निवर्तमानोऽकस्मान्नर्मदाप्रवाहमासाद्य सद्गतिमवाप । पतिव्रता चैना ( माता ) तत्सर्वं दृश्यं स्वप्नेऽवलोकयामास । तद्दिनादारभ्य साऽत्र व्रतोपवासादिभि र्दिनान्यगमयत् । ततो मासान्ते समाचारान्नीत्वा समायातेषु राजपुरुषेषु बान्धवैरवरुद्धाऽपि सा प्रज्वलिते पावके देहं निक्षिप्य पत्या सार्धमेव स्वर्गलोकमवाप । तस्याः समाधिस्थानमजमेरे नागफणाख्ये पार्वते प्रदेशे वर्तते । वसंतपंचम्यां तत्र गत्वाऽस्मद्वंशजाः समाधिं पूजयंति ।

१८७४ मिते वैक्रमाब्दे श्रीमन्महाराजयशवंतसिंहार्जुनसिंहशेरसिंहाख्यास्त्रयोऽपि भ्रातरो मिलित्वाऽजयमेराऽभिजनाय श्रीदधीचवंशजाय त्रिपाठिस्नेहिलाल शर्मणे * जोशीपदं समर्प्य यथाशक्ति भूमिदानमपि चक्रुः । श्रीस्नेहिलालस्तु त्रि

---

* अत्र—सोरठा ॥

चाँदूड़ी चँदलाल, गिरिधारी नाई खरो ।
विप्रसनेहीलाल, ऐ च्यारूं ही काम का ॥

अर्थात् चाँदूड़ी बडारण, चंदलाल पंचोली कामदार, गिरधारी नाई और जोशी तिवाड़ी सनेहीलाल ये चारों राज के हितेच्छु थे ।

पाठि कन्हैयालालः श्रीमद्भागवते कृतश्रमो नियुद्धनिपुणश्चासीत् । तत्पुत्रः पंडित वदरीलालशर्मा पूर्णास्तिको दानशीलो विद्यानुरागीचाऽभवत् ।

तस्मिन्वंशे श्रीशार्दूलसिंहनरेश्वरस्य धर्मपत्नीकुक्षौ पतिव्रतपरायणा श्री स्वरूपकुमारीतिप्रसिद्धा पुत्री जाता । सा वाघोरनाथात् प्राची दिवाकरमिव श्रीभुवन विश्रुतं यावदार्यकुलकमलदिवाकरं १०८ श्रीविभूषितं मेदपाटेश्वराधीशमुदयपुराधिपतिं च श्रीसज्जनसिंहाख्यं पुत्ररत्नं सुषुवे । स महानुभावोऽत्र अजमेरनगरे श्री रत्नावताराजगृहे समागत्य राजा श्रीशिवनाथसिंहवखतावरसिंहगुमानसिंहाऽमानसिंहाविजयसिंहादिमातुलमहाशयानां प्रतिष्ठां वर्धयामास । तस्मिन्नेवसमये जोशीति विश्रुताय त्रिपाठि श्रीवदरीलालशर्मणेऽपि साधुवादान् वितीर्य सम्मानमकरोत् ।

गतवर्षेऽपि वर्तमानमेदपाटेश्वरो दयालुशिरोमणिः १०८ श्रीहिन्दुकुलभास्करः श्रीभूपालसिंहमहोदयोऽपि पितामहमातृकुले अजमेरस्थ श्रीरत्नावताराज भवने समागत्य महाराजश्रीलक्ष्मणसिंहखुमानसिंहकल्याणसिंहप्रतापसिंहजवानसिंहादि महाशयानां गोष्ठीमंगीकृत्य तत्प्रतिष्ठामवर्धयत् । तस्मिन्नेव शुभावसरेऽस्मै हितचिन्तकायाऽपि पुरस्कारं दत्त्वा समहानुभावः स्वदयादृष्टिं प्रादर्शयत् । किम्बहुना । मेदपाटदेशे श्रीमदेकलिंगप्रसादाद्धार्मिका वीरा विद्यानुरागिणश्च नरेश्वरा अभूवन्, वर्तन्ते, चाग्रेऽपि सदा भवन्त्विति वृद्धजनानामाशीर्वादाः ।

तस्य महानुभावस्य श्रीबदरीलालशर्मणः शिवदत्तरामदत्ताख्यौ पुत्रौ स्तः । तयोर्ज्येष्ठोऽहं श्रीक्षेमेन्द्रमहाकविविरचितां भारतमंजरीं पुरस्कृत्य संक्षेपेण गद्यभारतं रचितवानस्मि । श्री भगवान् कृष्णचन्द्रस्तु भारतवर्षेतिहासग्रंथं पुष्पांजलितुल्यं मत्वाऽनेन प्रसीदतु । विद्वज्जना श्च विद्याविनोदं मन्यमाना अल्पज्ञस्य मम दोषान्परित्यज्य गुणग्रहणशीला भवंत्विति शम् ।

कार्तिकी पूर्णिमा
सं० १९९२.

निवेदक—
**शिवदत्त त्रिपाठी काव्यतीर्थः**
श्री वदरिकाश्रमस्थः ।
( शिवकुंड ) अजमेर.

---

* ॐ *

अथोत्तरार्द्धस्य

## ॥ शुद्धाऽशुद्धपत्रम् ॥

| पृ० | पं० | अ० | शु० | पृ० | पं० | अ० | शु० |
|---|---|---|---|---|---|---|---|
| १९७ | १३ | विधि | वधिः | २०६ | २ | उत्तमो | उत्तमौ |
| ,, | १४ | अह | अहं | ,, | १७ | श्रुता | श्रुता |
| ,, | २१ | सर्वं | सर्व | ,, | २० | तर | तरं |
| ,, | २२ | शल्यं | शल्य | ,, | ४ | कर्णाश्चि | कंकटंचचि |
| ,, | २७ | ततो | ततः | २०७ | ८ | द्रोणि | द्रौणि |
| ,, | २७ | द्रो | द्रौ | ,, | १० | चकुः | चक्रुः। |
| १९८ | ५ | कुरू | कुरु | ,, | २३ | चमू | चमूश् |
| ,, | ६ | तः | ताः | २०८ | ५ | ऽस्या | अस्य |
| १९९ | १३ | कौ | कयोर् | २०९ | ९ | ग्र | ग्रंभेत्तु |
| ,, | १४ | युद्धय | युद्धय | २१० | ९ | सुते | सुतो |
| ,, | १९ | त्तेनं | तेन | ,, | २८ | नीर्भि | निर्भि |
| २०० | ७ | यरा | यणा | २११ | १ | द्रोण | द्रोणः |
| ,, | ९ | विध्द्वा | ध्द्वा | ,, | ४ | यय | य |
| ,, | १६ | वापा | वाप। | ,, | ८ | श्रु | श्रु |
| ,, | १७ | कुरू | कुरु | ,, | १५ | ० | रद्वयं |
| ,, | १९ | कापला | काचला | २१२ | २ | भिन्न | भिन्न |
| ,, | २२ | पार्थः | पार्थः | ,, | ८ | करे | शरे |
| २०१ | १६ | धनंजयो | युधिष्ठिरो | २१३ | २ | पूर्वं | स पूर्वं |
| ,, | १७ | कृष्प | कृष्य | ,, | २ | तस्यः | तस्य |
| ,, | २४ | न्नो | नो | ,, | ११ | स्थ | स्य |
| २०२ | १ | सौष्ठवे | सौष्ठवे | ,, | २१ | वृत्तां | वृत्ता |
| २०३ | १८ | पतंतं | पतंततं | ,, | २४ | संसु | शंसुः। |
| २०४ | १ | रागं | रांग | २१४ | १२ | हिणी | हिणीर् |
| ,, | ३ | गर्ज | गर्जे | ,, | १७ | मत्त्वा | मत्वा |
| २०५ | ९ | द्रू | द्रुग | २१५ | २१ | स्तदा | स्तदास्थित्वा |
| ,, | ८ | पितारि | पितरि | २१६ | ७ | ध्रवं | ध्रुवं |

| पृ० | प० | अ० | शु० |
|---|---|---|---|
| ,, | २६ | समा | सम |
| २२० | २२ | स्वल्या | स्वल्पा |
| २२१ | १ | मु | उ |
| ,, | ६ | कृष्णा | कृष्ण |
| ,, | १२ | पारै | पौर |
| ,, | २० | पुरा | पुराऽभूताम् |
| ,, | २४ | वैत | वर्त |
| २२२ | ५ | बहुल्यं | बहुवास्वल्पं |
| ,, | ७ | रूपाया | रूपाय |
| ,, | ८ | दशे | दशो |
| ,, | १७ | झझ | झंका |
| २२३ | १० | भिन्न | र्भिन्न |
| ,, | १४ | यद् | यत् |
| ,, | २२ | कीर्णा | कीर्णा |
| २२४ | १५ | म्यवैं | स्यैवं |
| २२६ | १४ | भृतः | भृतं |
| २२७ | ३ | ताव | तावं |
| ,, | २४ | त्वयां | त्वया |
| २३० | ७ | स्त्रण | स्त्रेण |
| २३१ | १६ | मुमूर्षु | मुमूर्षो |
| २३२ | १ | रन् | रत् |
| ,, | ७ | तयोर् | तया |
| ,, | १० | ज्वल | ज्ज्वलं |
| २३२ | १८ | मारुत् | मारुत |
| २३३ | १२ | गांधरी | गांधारी |
| २३५ | ११ | स्यैव | स्यैवं |
| २३८ | ६ | कूरां | क्रूरां |
| २३९ | ३ | भकृत्वा | भक्त्वा |
| २४० | १७ | ब्रह्म | ब्रह्म |
| ,, | २४ | यादृं | यादृ |
| २४१ | १२ | त्यादि | त्यादिवाक्यैः |
| २४१ | २० | वो | वा |
| ,, | २० | अ० ८। | अ० ९ |
| ,, | २३ | जीयितः | जीविनः |
| २४२ | २० | दृष्टुं | द्रष्टुं |
| २४३ | ६ | स्त्त | स्त |
| २४३ | १८ | करोति | रोतीतिशंके |
| २४४ | ११ | भृष्टा | भ्रष्टा |
| ,, | २६ | ते | स्ते |
| २४६ | ३ | द्रप्टुं | द्रष्टुं |
| २४६ | १३ | बन् | वन् |
| २४८ | ५ | ऽन्न | ऽन्न |
| ५४९ | ७ | जीन | जीव |
| २४९ | १४ | सः | स |
| ,, | १७ | तस्य | तस्यलिखितस्य |
| ,, | २० | तस्वि | तप |
| २५० | २३ | स्त्रेणे | स्त्रेणे |
| २५३ | २८ | शरः | शर |
| २५४ | २ | वसुम् | वसुं |
| २५५ | २४ | कृप | कृपा |
| २५६ | १५ | कुर्यात | कुर्यात् |
| ,, | १८ | ईर्ष्या | ईर्ष्या |
| ,, | २० | धर्मे | धर्म |
| २५८ | ७ | स्तै | स्तैर् |
| ,, | १६ | लक्ष्मी | लक्ष्मीर् |
| २५९ | २१ | चं | च |
| २६७ | १४ | जीवी | जीव |
| २६८ | ३ | शितं | प्सितं |
| २७० | ३ | ब्रह्म | ब्रह्म |
| २७१ | १ | एता | एत |
| ,, | १७ | ब्राह्य | ब्राह्म |
| २७२ | २६ | लक्ष्य | लप्स्य |
| २७३ | ४ | विंणो | विरणो |
| २७८ | ६ | खड्ग्र | खड्गाग्र |
| ,, | २५ | स्त्रा | स्त्रा |
| २७९ | ६ | रोऽश्र | रोऽ |
| ,, | ६ | स | सं |
| ,, | २३ | सर्ग | सर्गं |

| पृ० | प० | अ० | शु० | पृ० | प० | अ० | शु० |
|---|---|---|---|---|---|---|---|
| २८० | १६ | हति | हतिर् | ३१७ | १२ | श्रुते | श्रुते |
| ,, | १९ | कव | क | ३१८ | ५ | बे | बै |
| २८२ | १२ | र्ज्ञन | ज्ञेन | ३१८ | २० | दीना | दीनां |
| ,, | १४ | बन्ह्य | वन्ह्य | ,, | २३ | त्मव | त्सव |
| २८८ | ६ | श्रेय | श्रये | ३२३ | २७ | दृष्य: | दृश्य: |
| २८९ | १७ | ह्यं | ह्मं | ३२६ | ९ | र्जुनो | र्जुनो |
| २९२ | १९ | किचि | किंचि | ३२८ | ९ | ग्री | ग्री |
| २९६ | ४ | ज्ज्वलं | ज्ज्वलं | ३२९ | १५ | ष्टिरो | ष्ठिरो |
| ,, | १७ | न्द्रं | न्द्रं | ३३१ | २० | ब्रह्म | ब्रूह्म |
| २९७ | ८ | जाह्न | जान्ह | ३३५ | १७ | स्त्रि | स्त्रि |
| २९८ | २४ | मुंव | मुवं | ३३६ | १ | र्याग | र्यग् |
| ,, | २६ | प्रदानि | प्रदा | ३३८ | १५ | वाध्य | विबोध्य |
| २९९ | २८ | ब्रा | बा | ,, | १८ | सर्व | सर्वे |
| ३०१ | १६ | श्रुति | श्रुति | ३४० | १० | सभ | सुभ |
| ३०३ | १७ | एव | एवं | ३४४ | ७ | गयो | गमो |
| ,, | २६ | ध्यो | ध्यो | ,, | ८ | न | नः |
| ३०५ | ८ | द्व | देव | ३४५ | २ | स्थिता | स्थितो |
| ३०६ | १६ | लिल | लित | ३४६ | २: | भ्यत्ये | भ्येत्य |
| ३०८ | ८ | चार | चारं | ३५४ | २३ | द्यु | घु |
| ३१० | ३ | परमं | परमं | ३६० | ११ | नाराचै: | नाराचै |
| ३१० | २८ | पश्चात | पश्चात् | ३७२ | ३ | पत | पति |
| ३११ | ३ | मुद्र | मुद | ३७३ | ३ | कर्व | सर्व |
| ३१२ | ५ | धरं | धर | ३७८ (१) | १९ | सिंह: | सिंहा |
| ३१५ | ८ | बु | ब्रु | ३७९ (२) | १८ | ममा | समा |

॥ इति ॥



॥ ओ३म नमः शिवाय ॥

# ॥ शुभ-सूचना ॥

विदित हो कि महाभारत एक ऐसा ग्रन्थ है कि जिसका आद्योपान्त पढ़ना महाकठिन नहीं तो कठिन अवश्य है। यह जानकर ही महाकवि श्रीहर्ष, कालिदास, भारवि आदि ने उस के एकांश को लेकर उत्तमोत्तम काव्य रचे। इसीलिये कहावत है कि-"व्यासोच्छिष्टं जगत्सर्वम्" अर्थात् व्यासमुनि के आशय को लेकर ही बहुधा कवियों ने बड़े २ ग्रन्थ बनाये हैं। आज कल राजाओं का ध्यान इस देववाणी पर नहीं होने से इसकी विशेषोन्नति नहीं है। केवल धर्मप्राण आर्यजाति के कतिपय विद्वज्जन ही थोड़ी बहुत इस की उन्नति करने में दत्तचित्त हैं।

यद्यपि "गद्यं कवीनां निकषं वदंति" अर्थात् गद्यरचना कवियों की कसौटी है सो यह बात यथार्थ ही है। इसके सिद्धहस्त कवि सुबन्धु, बाण, दण्डी, विष्णुशर्मा आदि हो गये हैं और इस नवीन युग में भी पण्डित अम्बिकादत्त व्यास प्रभृति हुए हैं। सज्जनो! उनके कार्यों के सामने तो यह ग्रन्थ सूर्य के सामने दीपक तुल्य है, परन्तु भारतीय इतिहास का सहायक होने के कारण तथा एक प्रसिद्ध ग्रन्थकार क्षेमेन्द्रकृत संस्कृत काव्य की छाया लेने से संस्कृत साहित्य की सेवा करने वाला तथा विद्यार्थियों की संस्कृत में रुचि को बढ़ाने वाला होगा ऐसी आशा की जाती है।

## इसके विक्रय का यह प्रकार है-

(१) छात्रों को दोनों भाग ३) रुपयों के केवल २) में दिये जावेंगे।

(२) जो पुस्तक व्यवसायी १००) रु० की पुस्तकें मोल लेंगे उन्हें भी २ रुपयों में दोनों भागों की पुस्तकें दी जायँगी।

(३) जो ५०) रुपयों की लेंगे उनको २।) रु० में दोनों भाग मिलेंगे।

(४) जो ५) रुपयों से लेकर २५) तक की मोल लेंगे उन्हें २।=) में पुस्तक मिलेगी।

(५) प्रति भाग १॥) रुपये का होगा। डाकव्यय अलग है।

## पुस्तक मिलने का ठिकाना-

शिवदत्त रामदत्त त्रिपाठी
सुदामापोल, अजमेर
वा
बद्रिकाश्रम शिवकुण्ड, अजमेर।

सं० १९९२
पौष शुक्ला २

# सूचना

ग्रंथकर्त्तुरन्यान्यपि पुस्तकानि संति। यानिनिम्नलिखित-स्थानेषु समुपलभ्यन्ते ।

१ श्रीसामामृतसिन्धुः—पूर्वभागेतु उपरि सामवेदमंत्रा निम्नभागे च भाषापद्यानि। उत्तरार्धेतु केवलानि भाषाछंदांस्येव । ... ...

२ शिवसतसई—दोहात्मिका। ... ... ...

३ श्रीदुर्गाचरित्रम्—सप्तशतीश्लोकानां श्री तुलसीकृतरामायणवत् पद्यानुवादः।

४ आस्तिकस्मृतिः। ... ... ...

५ विवाहपद्धतिः—भाषाटीकोपेता।

६ विवाहदिग्दर्शनम्। ... ... ...

७ गोलाभदर्शनम्। ... ... ... अमूल

८ श्रीदुर्वासातृप्तिस्वीकारनाटकम्। ... ...

९ भाषाभोजप्रबन्धः। ... ... ...

१० भाषा-गंगालहरी। ... ... ...

११ श्रीसूर्यशतकम्। ... ... ...

१२ भाषा—शिवमहिम्न। ... ... ...

१३ भाषा—सत्यनारायण कथा। ... ... ...

१४ श्री दीनाक्रन्दन-स्तोत्रम्। ... ... ... अमूल्य

१५ नीतिवाक्यरत्नावली। ... ... ...

१६ श्रीदेवदर्शनम् ... ... ...

निवेदक—

**पं० रामदत्त त्रिपाठी**

हैड पं० हरबैएड मेमोरियल हाईस्कूल, अजमेर.

श्री बद्रिकाश्रम शिवकुण्ड वा सुदामापोल, अजमे